# काव्यप्रकाशः।



## प्रथमः उल्लासः।

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति।

---

मुखैश्चतुर्भिः स्तुवते विधात्रे स्तोत्रे श्रुतीनाञ्च चतुष्टयाय।
भुजैश्चतुर्भिश्चतुरोऽर्थवर्गान्नसौ ददानाय चतुर्भुजाय॥
दुर्व्याख्याजनितप्रमोहशमनी वैषम्यविध्वंसिनी
वैशद्यादतिरोचनी रसखनी काव्यार्गलोद्घाटिनी।
टीका विज्ञजनप्रमोदजननी भावार्थचिन्तामणी
भट्टाचार्य्यमहेश्वरेण रचिता काव्यप्रकाशोपरि॥
काव्यप्रकाशाख्यविशुद्धकाञ्चने वैषम्यदोषार्पितकानि काचने।
अम्लायमानापि ममास्तु टीका माधुर्य्यधुर्य्यैकसुधाद्य टीका॥
दोषो विचारसुलभो यदि दृश्यतां तद्द दूये न तत्र शृणुतैकमिदन्तु धीराः।
ग्रन्थान् यथार्थमतिसंस्कृतमानसत्वाद्द व्याख्या मम प्रथममेव न दूषणीया॥

सुकुमारान् राजकुमारान् स्वादुकाव्यप्रवृत्तिद्वारेण गहने शास्त्रान्तरे प्रवर्त्तयितुम् अग्निपुराणादिभ्यः उद्धृत्य काव्यरसास्वादकारणम् अलङ्कारशास्त्रं सङ्क्षिप्य भरतमुनिः प्रणीतवान्। तदुक्तं "स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपभुञ्जते। प्रथमालीढमधुराः पिबन्ति कटु भेषजम्॥" इति। मम्मटभट्टस्तु ताः कारिकाः सोदाहरणं व्याख्यातुं कारिकाग्रन्थप्रथममङ्गलभूतां नियतिकृतनियमेत्यादि कारिकाम् उत्थापयति ग्रन्थारम्भे इत्यादि। ग्रन्थः महावाक्यविशेषः। स च विशेषः महाजनानां ग्रन्थत्वेन व्यवहारात् एव परिचेयः। तदाकाङ्क्षापूरणरूपैकप्रयोजनवत्त्वेन समस्तवाक्यानाम् एकवाक्यत्वात्। तदुक्तम् 'अर्थैक्यात् एकं वाक्यं साकाङ्क्षं चेत् विभागे स्यात्' इति तत्र च अर्थैक्यात् इत्यस्य प्रयोजनैक्यात् इत्यर्थः। न च विभिन्नदोषगुणालङ्का-

रबोधकवाक्यानां प्रयुक्तत्वेन तद्वाक्यैकवाक्यत्वात् समस्तकारिकोक्तवाक्यानां परमानन्दचक्रवर्त्ती तु ग्रन्थलक्षणम् अन्यत् एव आह। यथा "प्रेक्षावत्प्रवृत्त्यौपयिकत्वेन अभिधीयमानसम्बन्धप्रयोजनकः सन्दर्भो ग्रन्थः" इति। सम्बन्धप्रयोजने च तत्सन्दर्भस्य इव अन्यदीयसम्बन्धप्रयोजनयोः अभिधानस्य अनुपयुक्तत्वात्। ननु क्वचित् महाकाव्यरूपग्रन्थे "अस्त्युत्तरस्यां दिशि देवतात्मा इत्यादौ वस्तुमात्रस्यैव निर्देशेन तत्र सम्बन्धप्रयोजनयोः एकस्य अपि अनभिधानेन तत्र अव्याप्तिः। वस्तुमात्रनिर्देशस्य अपि महाकाव्यलक्षणत्वेन दण्डिना उक्तः तस्य महाकाव्यत्वेन सन्दर्भानपायात् तल्लक्षणम्। "सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्। आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् इति। तदयोग्यतायाश्च ग्रन्थत्वं विना अस्य दुर्वचत्वात् सुखबोधार्थम् अमुकश्लोकस्य अमुकलक्षणवाक्यस्य अमुकपङ्क्तेर्वा व्याख्या क्रियते इत्युक्तिपूर्विकायां व्याख्यायां ग्रन्थत्वेन अव्यवहृतायाम् अतिव्याप्तिः दुर्वारत्वापत्तेश्च। तस्य प्रकृतकारिकारूपग्रन्थस्य आरम्भे आद्यप्रयत्ने भाविनीति शेषः। तथाच प्रकृतग्रन्थस्य आद्यप्रयत्नप्रागभावकाले भारतीं वागधिष्ठातृदेवतां समुचितां वागात्मकग्रन्थारम्भप्रागुपश्लोकनार्हां परामृशति उपश्लोकनार्हेण रूपेण जिधात्वर्थेन उत्कर्षेण प्रकारेण स्वोक्तशब्दात् एव जानाति इत्यर्थः। परापूर्वमृशधातोः ज्ञानार्थकत्वेन ज्ञानविशेषपरत्वात् अत्र बुभुत्सावशात् स्वोक्तशब्देन अपि स्वस्य शाब्दबोधजननात्। तथाच उत्कर्षबोधकत्वात् स्तुतिरूपमङ्गलमेव नियति इत्यादिकम् इति बोध्यम्। न च भाविनीति पूरणं किमर्थम् इति वाच्यं आद्यप्रयत्ने मङ्गलाचरणबाधात् न च वर्त्तमानप्रागभावप्रतियोगित्वम् भावित्वं तथाच भाविनीत्यस्य आरम्भविशेषणत्वेन वर्त्तमानप्रागभावप्रतियोगितया एव आरम्भे बोधिते कथम् आरम्भानुयोगिप्रागभावकालाधिकरणकत्वं मङ्गलस्य बोध्यताम् इति वाच्यं भाविपदार्थैकदेशस्य आरम्भानुयोगिनः वर्त्तमानप्रागभावस्य एकदेशे वर्त्तमानकाले एव अधिकरणतायाः सतिसप्तम्याः बोधनात् "भविष्यत्ययने पुण्यम्" इत्यादौ आरम्भे सर्वज्ञच्छात्राणाम् इत्यादौ अनुमाने निरूपणीय इत्यादौ च सतिसप्तम्याः तादृशविलक्षणव्युत्पत्तेः। आरम्भपदं वा आद्यप्रयत्नप्राक्कालपरम्। चक्रवर्त्ती तु निमित्तसप्तमी एव इयम्। तथाच ग्रन्थाद्यप्रयत्ननिमित्तमित्यर्थः इति आह तत् न। निमित्तस्य इष्टदेवतापरामर्शस्य फले आरम्भे दर्शिते विघ्नविघातरूपफलान्तरप्रदर्शने चकारः एव तदा विनिर्दिष्टः स्यात् तदनिर्देशात् च तत्र तात्पर्याभावनिर्णयात् आरम्भसामान्ये व्यभिचारात् अकारणस्य तत्परामर्शस्य आरम्भविशेषे कारणताप्रदर्शनस्य प्रवृत्त्यनुपयोगित्वेन तत्प्रदर्शनानुपयोगात्। निमित्त-

सप्तम्या हि द्विविधः अर्थः स्वप्रकृत्यर्थे अन्यपदार्थकारणरूपं निमित्तत्वम् इति एकः। यथा "चर्मणि द्वीपिनं हन्ति" इत्यत्र प्रकृत्यर्थे चर्मणि हननविशेषस्य कारणता न तु हननसामान्यस्य चर्म विनापि तदुत्पत्तेः। स च प्रकृते न सम्भवति मङ्गलं विना अपि उत्पद्यमानम् आरम्भसामान्यं प्रति मङ्गलस्य अनिमित्तत्वात् आरम्भविशेषं प्रति निमित्तत्वस्य तु परप्रवृत्त्यनुयोगित्वेन वक्तुम् अनुचितत्वात् स्वप्रकृत्यर्थं प्रति अन्यस्य निमित्तत्वम् इति अपरः अर्थः। यथा कन्यापुत्रविवाहे नान्दीमुखमित्यत्र स्वप्रवृत्त्यर्थं विवाहं प्रति नान्दीमुखस्य कारणत्वम्। स च अत्र न सम्भवति आरम्भस्य मङ्गलाजनकत्वात्। यदि च आरम्भाय इत्येवं चतुर्थ्यर्थे सप्तमी इति उच्यते तथापि आरम्भे विघ्नविघाताय इति चकाराप्रयोगार्थं वक्तुं तत्र तात्पर्य्यम् इति आस्तां विस्तरः। प्रमत्तानुष्ठितग्रन्थसमाप्तेः मङ्गलं विना अपि जातत्वेन व्यभिचारात् ग्रन्थविघ्नविघातः एव मङ्गलफलम् इत्यभिप्रायात् आह विघ्नविघातायेति। तथाच समाप्तिः स्वकारणात् एव इत्यभिप्रायः। अस्य अर्थस्य च ग्रन्थगौरवभिया न विचारः प्रदर्शितः। समुचितत्वे अपि इष्टत्वाभावे तदुपश्लोकनं न क्रियते तस्मिन् अकृते अपि तत्फलं न स्यात् इत्यतः आह इष्टेति। इष्टदेवतायाः अपि प्रकृतफलदानासमर्थत्वे सा न उपश्लोक्यते इत्यत आह समुचितेति। ग्रन्थकृत् भरतमुनिः तस्य एतत्कारित्वञ्च तदीयसंहितायाम् आसां कारिकाणां दर्शनेन परामृशति इत्यत्र प्रथमपुरुषनिर्देशस्वरसेन च निर्णीयते वृत्तिकृतः कारिकाकारित्वे तु परामृशामि इत्येवं निर्देशः एव उचितः स्यात् अत एव "अष्टौ नाट्ये रसाः स्मृता" इति कारिकायाम् अष्टरसकथने अपि निर्वेदस्य प्रथमोपादानस्वरसेन नवमः शान्तरसः वृत्तौ अङ्गीकरिष्यते कारिकाणां वृत्तिकृत्प्रणीतत्वे तु कारिकायाम् एव नव रसाः आख्येरन्। अत एव च समस्तवस्तुविषयं श्रौताः आरोपिताः यदा इति समस्तवस्तुविषयरूपककारिकायां श्रौताः आरोपिताः इति बहुवचनम् अविवक्षितम् इति वृत्तौ एव व्याख्यातम्। स्वीयकारिकात्वे तु श्रौतौ आरोपितौ यदा इत्येव उच्यते न च रसग्रन्थे तत् उक्तं भरतः इत्यस्य अनुपपत्तिः। तदुक्तं ग्रन्थकृता इत्युक्तेः एव औचित्यात् इति वाच्यं तत्तु भरतप्रणीतनाट्यशास्त्रम् इत्यर्थकत्वेन नाट्यशास्त्रे तस्य प्रकृतग्रन्थकारित्वाभावात् नाम्ना एव निर्देष्टुम् उचितत्वात्। ननु एवं दशमोल्लासे रूपकग्रन्थसाङ्गम् एतन्निरङ्गन्तु शुद्धं मानात्तु पूर्ववत् इति कारिकायां पूर्वोक्तमालोपमातुल्यतया मालारूपककथनानुपपत्तिः "अनयेनेव राजश्रीर्दैन्येनेव मनस्विता। मम्लौ साच विषादेन पद्मिनीव हिमाम्भसा॥" इत्येवं माला तु न लक्षिता

नियतिकृतनियमरहितां
ह्लादैकमयीमनन्यपरतन्त्राम् ।

एवंविधवैचित्र्यसहस्रसम्भवात् उक्तभेदानतिक्रमाच्च इति। कारिकायाम् अनुक्तायाः मालोपमायाः वृत्तौ एव उक्तत्वात्। वृत्तिकृतः एव कारिकाकारित्वे तु वृत्त्युक्तमालोपमातुल्यतया मालारूपकस्य कारिकायाम् उक्तिः सम्भवति एव इति चेत्, न। त्रिलोपे च समासगेति पञ्चविंशतिप्रभेदोपमा शेषकारिकायां चकारस्य अनुक्तमालोपमासमुच्चयार्थकत्वेन चकारेण कारिकायाम् एव उक्तायाः मालोपमायाः वृत्तिकृता दर्शितत्वेन मालारूपकस्य तत्तुल्यतया कथने अनुपपत्त्यभावात् न लक्षितेति वृत्त्युक्तेः विशेष्य न लक्षितेति अर्थात् इति आहुः। परामृशति इत्यस्य अर्थः दर्शितः एव। चक्रवर्त्ती तु जयत्यर्थेन नमस्कारः आक्षिप्यते इति वृत्तिदर्शनात् नमस्कारानुमानाय तद्व्याप्योत्कर्षवत्तया भारतीं परामृशति इत्यर्थः इत्याह। ननु नमस्काररूपफलस्य उत्कर्षाव्यापकत्वात् कस्यचिदुत्कृष्टस्य अपि केन अपि अनमस्कृतत्वात् किन्तु नमस्यतायाः एव तद्व्यापकत्वात् तदाक्षेपस्य च ग्रन्थकृता अदर्शितत्वात् एव। किं च नमस्कारव्याप्यत्वस्य जिधातुना अनुपस्थापितत्वेन नमस्कारव्याप्यत्वांशस्य भाष्यग्रन्थार्थत्वाभावे तादृशार्थकतया आभाषग्रन्थेन कथनस्य बाधितार्थकत्वात् एव नमस्कारः आक्षिप्यते इतिवृत्तेः तु नमस्कारः व्यज्यते इत्येव अर्थः तत्प्रदर्शनञ्च स्तुतिरूपमङ्गलं मानसनमस्कारस्य अपि अनुबन्धि इति प्रदर्शनाय इति अवधेयम्। नियतीत्यादि। भारती वागधिष्ठात्री देवता जयति उत्कर्षाश्रयः, उत्कर्षाश्रयत्वसाधकम् अन्यविलक्षणं विशेषणम् आह कवेरिति। कवेः काव्यरूपां निर्मितिम् आदधती जनयन्ती आङ्पूर्वधाधातोः जननार्थकत्वस्य अपि गर्भाधानादिप्रयोगदृष्टत्वात् काव्यस्य च कविः इव भारती अपि कर्त्री तत्प्रसादेन एव कविना काव्यकरणात् विशिष्टौ शब्दार्थौ च काव्यम् इति ग्रन्थकृत् एव वक्ष्यति। जगद्रूपनिर्मितिकृतः ब्रह्मणः वैलक्षण्येन भारत्या उत्कर्षं समर्थयितुं तत्कृतकाव्यरूपनिर्मितेः विशेषणानि अर्थशब्दरूपांशद्वयावच्छेदेन आह नियतीत्यादि।

नियतिः अदृष्टं तत्कृतः तन्निरूप्यः नियमः जन्यतालक्षणः तच्छून्याम् अदृष्टाजन्याम् इत्यर्थः। शब्दार्थोभयरूपस्य काव्यस्य अर्थांशे विशेषणम् इदं बोध्यम्। चन्द्रकलात्मकसुखरूपस्य कुन्देन्दुधवलयशोरूपस्य व्यलीकस्य आकाशादिनित्यरूपस्य च काव्यार्थस्य अजन्यत्वेन अदृष्टाजन्यत्वध्रौव्यात् शब्दांशावच्छेदेन तादृश-

**नवरसरुचिरां निर्मितिम्**
**आदधती भारती कवेर्जयति ॥ १ ॥**

---

काव्यरूपनिर्मितिजनकत्वेन च उत्कर्षः समर्थितः। अतः "निर्मितिमादधती" इत्युक्त्या काव्यस्य भारतीजन्यताङ्गीकारे अपि अदृष्टाजन्यताकथनाविरोधः। शब्दांशे जन्यतायाः अर्थविशेषांशे अजन्यतायाश्च अविरुद्धत्वात् एकावच्छेदे एव तयोः विरोधात्। यद्वा नियम्यते इति नियतिः संसारः तत्र कृतः दर्शितः नियमः जले एव पद्मम् इत्यादिरूपः तद्रहितां अभेदेन सुखे भेदेन नायिकायाम् अपि कमलवर्णनेन तत्र तादृशनियमराहित्यात्। ह्लादेति। ह्लादः सुखम् एकः केवलः दुःखासम्भिन्नः यस्मात् काव्यात् तन्मयीं तत्स्वरूपाम् इत्यर्थः। अनन्येति। अन्यानि स्वभिन्नानि समवाय्यादिकारणानि तत्परतन्त्राः तज्जन्याः ये ब्रह्मसृष्टिरूपाः घटादयः तद्भिन्नाम् इत्यर्थः। यद्यपि "परतन्त्रः पराधीनः" इति कोषः तथापि अत्र गुरुपरतन्त्रेत्यादिषु इव अधीनभावे तदेकदेशे परतन्त्रपदं निरूढलाक्षणिकं तेन न अन्यपदपौनरुक्त्यम्। अत्र च अन्यपदं नियतिभिन्नकारणपरम् एव कारणमात्रपरत्वे नियतिकृतेत्यादेः पृथगुपादानानुपपत्तेः। न च तत् एवं किमर्थं कृतम् इति वाच्यं ध्वंसस्य समवाय्यसमवायिकारणाभावेन तदजन्यत्वेन तन्निरपेक्षादृष्टजन्यत्वं अर्थरूपकाव्यस्य तु तादृशादृष्टजन्यत्वम् अपि नास्ति इत्येतत्प्रतिपादनाय गोवृषन्यायात् पृथगुपादानात्। चक्रवर्त्ती तु विशेषणद्वयम् इदम् अन्यथा एव व्याचष्टे। यथा नियतिः अदृष्टं तत्कृतः ब्रह्मसृष्टौ नियमः नियतविशेषः चन्द्रः एव चन्द्रपदप्रयोगात् तद्वृत्त्याह्लादकत्वादिधर्माणाम् अपि अपवर्गः इत्येवं रूपः। कविनिर्मितेः तु तद्रहिता सुखे अपि कविना चन्द्रपदप्रयोगे कृते आह्लादकत्वावगमात् इति। तथा वेदान्तिनये कार्य्यकारणयोः अभेदः अपि आद्रियते प्रतिभाजन्यकार्य्यानन्या अभिन्ना एव प्रतिभा तत्परतन्त्रां तज्जन्यां प्रतिभाजन्याम् इत्यर्थः इति तद्द्वयम् अपि न। तथाहि चन्द्रः एव चन्द्रपदप्रयोगात् आह्लादकत्वावगमः इत्यस्य कः अर्थः? किं ब्रह्मसृष्टौ अचन्द्रे चन्द्रपदप्रयोगः एव न अस्ति? किं वा प्रयोगसत्त्वे अपि आह्लादकत्वावगमः न अस्ति इति? न आद्यः, गौर्वाहिकः इतिवत् चन्द्रः मुखम् इति विधेयस्य चन्द्रस्य आदौ प्रयोगे चन्द्रसदृशे अपि चन्द्रप्रयोगस्य सारोपायाः लक्षणायाः ब्रह्मसृष्टौ अपि दृष्टत्वात् तत्र एव चन्द्रनिष्ठाह्लादकत्वस्य प्रयोजनस्य मुखे प्रतीत्या। न द्वितीयः अपि इति, नियतिकृतेत्यादेः तादृशाः

नियतिशक्त्या नियतरूपा, सुखदुःखमोहस्वभावा, परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा, षड्रसाः, न च हृद्यैव तैः, तादृशी ब्रह्मणो निर्मितिः निर्माणम्, एतद्विलक्षणा

---

व्याख्यायाः विरोधात्। तथा अनन्यपदे प्रतिभापरत्वे व्याख्यानम् अपि अयुक्तं वृत्तिविरोधात्। तथाहि ब्रह्मनिर्मितिपरमाण्वादिकारणपरतन्त्रा तद्विलक्षणा तु कविवाङ्निर्मितिः इति लिखने कविनिर्मितेः समवाय्यादिकारणपरतन्त्रत्वाभावे लब्धे परतन्त्रपदार्थः एव नञर्थान्वयस्य दर्शितत्वात् न तु अन्यपदार्थः इति। नवरसेति। नव रसाः यत्र इति बहुव्रीहिणा नवरसेति एकं विशेषणम्, अतः तत्प्रतियोगितया षड्रसेति ब्रह्मनिर्मितेः विशेषणं वृत्तौ व्याख्यास्यते अन्यथा एव षड्रसैः न हृद्येत्येव व्याख्येयेत न च वृत्तौ एव किमर्थं तथा न व्याख्यातम् इति वाच्यं ? तथा व्याख्याने नवरसैः रुचिरेत्येव प्रकृते अपि समासः स्यात् अन्यथा व्याख्यानव्याख्येयविसंवादापत्तेः। तादृशसमासे च संख्यापूर्वककर्मधारयत्वेन द्विगुत्वात् अपावादित्वाच्च नदादित्वेन नवरसी रुचिरेत्येवम् एव निर्देशापत्तेः। न च नवभिः रसैः रुचिराम् एवेति समासाश्रयेण तद्दोषानवकाशः इति वाच्यं ? त्रिपदतत्पुरुषस्य व्याकरणनिषिद्धत्वात् रुचिराम् इति अपरं विशेषणं आह्लादजनिकाम् इति अर्थकम्। न च इदं विशेषणं कथं ब्रह्मनिर्मितिवैलक्षण्यसाधकं ब्रह्मनिर्मितेः अपि रुचिरत्वात् इति वाच्यं ? रुचिराम् एव इति नियमगर्भत्वे वैलक्षण्यसाधकत्वात्। अत एव न च हृद्यैव तैः इति ब्रह्मनिर्मितौ हृद्यत्वे नियमाभावः दर्शयिष्यते। न च एवं ह्लादमात्रजनिकाम् इति अर्थपर्यवसाने ह्लादैकमयम् इत्यनेन सह पौनरुक्त्यम् इति वाच्यं ? तत्र अलङ्काराधीनह्लादस्य अत्र च रसाधीनह्लादस्य विवक्षितत्वेन अपौनरुक्त्यात्। अत एव न च हृद्यैव तैः इति व्याख्यया रसाधीनह्लादः विवक्षितः शृङ्गारादिरसनवकमधुरादिरसषट्कयोः भेदे अपि श्लिष्टरसपदमहिम्ना एकत्वावभासात्। यद्यपि रसरूपह्लादः वक्ष्यते तथापि रसव्यक्तीनां धारावाहित्वेन पूर्वरसव्यक्त्या अपररसव्यक्तिजननात् रसाधीनत्वं ह्लादस्य बोध्यम्। न च एवं रसैः हृद्यमात्रत्वाभावप्रदर्शनात् नवरसैः रुचिराम् इत्येव समासः प्रदर्शितः इति वाच्यम् ? पृथग्रसपदार्थापेक्षेण एव तत्प्रदर्शनात् कवेः भारती इति अन्वयं आदधती इत्येव अपि कवितरीति अध्याहारञ्च आह चक्रवर्ती आधानं स्वयं निर्माय कवितर्यर्पणात् इति आह। तत् न। कवेः निर्मितिम् इति अन्वयेन एव आधानस्य जननरूपत्वेन एव च सर्वसामञ्जस्ये कवितरीति अध्याहारस्य भारत्याः

तु कविवाङ्निर्मितिः, अत एव जयति, जयत्यर्थेन च नमस्कारः आक्षिप्यते इति ताम् प्रति अस्मि प्रणतः इति लभ्यते।

इह अभिधेयं सप्रयोजनम् इति आह। विधेयं

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।

---

कविनिरपेक्षकर्तृत्वकल्पनस्य च गौरवग्रस्तत्वात् ब्रह्मनिर्मितेः विशेषणप्रदर्शनेन तद्विपरीते कविनिर्मितिविशेषणे भारत्या उत्कर्षं समर्थयितुं ब्रह्मनिर्मितेः विशेषणानि आदौ आक्षिप्य आह नियतिशक्त्येति। नियतेः अदृष्टस्य शक्त्या सामर्थ्येन नियतरूपा पापात् दुःखी पुण्यात् सुखी इत्येवंनियमविशिष्टा इत्यर्थः। मदीयद्वितीयव्याख्यानुमते तु नियतौ संसारे शक्त्या नियमेन जले एव पद्मम् इत्येवं नियतरूपा इत्यर्थः। सुखेति मोहान्तपदम् अत्र तज्जनकपदं बोध्यम्। परमाण्वादीत्यादि पदात् द्व्यणुककपालिकाकपालादिपरिग्रहः। एतानि समवायिकारणानि उपादानं समवायिकारणं कर्म कुम्भकारादेः क्रिया आदिपदात् समवायीतरसमस्तकारणपरिग्रहः तानि सहकारिकारणानि ब्रह्मणः निर्मितिः इति आक्षिप्तनिर्मितिपदम् उपादाय व्याचष्टे निर्माणमिति। कृदभिहितभावत्वात् निर्मीयमाणघटाद्यर्थकम्। श्लोकस्थविशेषणानि अधुना व्याचष्टे एतद्विलक्षणा तु इति, वाङ्निर्मितिः वागुपनिबद्धा शब्दार्थालङ्काव्यरूपा निर्मितिः।

अत एवेति। उक्तविशेषणवैलक्षण्यात् एव इत्यर्थः। स्तुतिरूपमङ्गलम् इदं मानसनमस्काररूपमङ्गलस्य अपि व्यञ्जकम् इति अभिप्रायेण आह जयत्यर्थेनेति। उत्कर्षेण इति अर्थज्ञातोत्कर्षस्य स्वकार्यनमस्कारव्यञ्जकत्वात् तस्य स्तोतृग्रन्थकृन्नमस्कारस्य आकारम् आह तां प्रति इति। लभ्यते व्यञ्जनया बुध्यते श्लोकार्थबोद्धृभिः इति शेषः। ननु काव्यरूपनिर्मित्याधानात् भारत्या उत्कर्षः समर्थितः। तत् च काव्यस्य उपादेयत्वे एव घटते तदेव तु न तस्य निष्प्रयोजनत्वात् इत्यतः काव्यस्य सप्रयोजनत्वं कारिकया उक्तं तत् एव वृत्तिकृत् दर्शयति इहेति। इह कारिकाग्रन्थे आह इति अन्वयः। अभिधेयं कारिकाग्रन्थस्य वाच्यं प्रतिपाद्यमिति शेषः। ध्वन्यादि त्रिविधं काव्यं, तत् सप्रयोजनं प्रयोजनविशेषजनकम् इत्याह इत्यर्थः। सप्रयोजनम् आह इति। कारणशून्यं क्वचित् कपाले काव्यतत्प्रयोजनयोः एकदोक्तिरूपमुक्तौ एव वैशिष्ट्यं बोध्यम्। तथाच उद्दिश्यविषया काव्यं विधेय-

सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥२॥

कालिदासादीनाम् इव यशः, श्रीहर्षादेः धावकादीनाम् इव धनं, राजादिगतोचिताचारपरिज्ञानम् आदित्यादेः मयूरादीनाम् इव अनर्थनिवारणं, सकलप्रयोजनमौलिभूतं समनन्तरम् एव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरम् आनन्दं, प्रभुसम्मि-

---

विधया तत्प्रयोजनम् आह इत्यर्थः। कृते विदेयुजे इति वयः भावक्विबन्तात् चतुर्थी उपदेशयुजे उपदेशयोगाय यशसे इत्यादौ चतुर्थ्यां जनकत्वबोधनात् काव्यं यशःप्रभृति करोति इति व्याचष्टे कालिदासादीनाम् इव इति। यशोजनकत्वस्य प्रमितत्वज्ञापनाय दृष्टान्तः दर्शितः। एवम् अन्यद्वये अपि बोध्यम्। श्रीहर्षः राजा धावकः रत्नावलीकारः कविः तेन राजनाम्ना रत्नावलीकाव्यं कृत्वा धनं लब्धम्। राजादिगतः राजादिसम्बन्धी उचिताचारः प्रजासु राज्ञां राजसु प्रजानाम् आचारः तज्ज्ञानञ्च काव्येन तद्वर्णनात्। शिवेतरस्य अशिवस्य क्षतिं दर्शयति अनर्थनिवारणम् इति। स्तुतिरूपकाव्यप्रीतेन आदित्येन मयूरभट्टस्य कुष्ठनिवारणात्। सद्यःपरनिर्वृतये इति व्याचष्टे सकलेति। सकलेत्यादिकं परपदार्थः सद्यःपदार्थम् आह समनन्तरम् एव इति। काव्यार्थबोधसमनन्तरम् एव इत्यर्थः। निर्वृतिपदार्थम् आह आनन्दमिति। अस्य आनन्दविशेषरूपतापर्य्यवसानाय विशेषणद्वयम् आह रसास्वादेति। यद्यपि आस्वादः एव रसः वक्ष्यते अतः रसस्य न आस्वादः तथापि अत्र रसरूपं यत् आस्वादनं तद्रूपं सत् सम्भूतं समुद्भूतं वा उभयथा अपि जातम् इत्यर्थः। तादृशास्वादकाले विषयान्तरग्रहः नास्ति इति आह विगलितेति। ज्ञानाविषयीभूता इत्यर्थः। उक्तिसौष्ठवाय कान्तासम्मिततया इति विशेषेण व्याख्यानात् पूर्वं काव्यपदं विलक्षणकाव्यपरतया व्याचष्टे प्रभुसम्मितेति। प्रभुः अत्र प्रभोः आदेशः तत्सम्मितं तत्तुल्यं यच्छब्दप्रधानं वेदादिशास्त्रं विधिनिषेधबोधकः वेदः आदिपदात् वैदिकमन्वश्च ततः विलक्षणं यत् काव्यम् इति अन्वयः। चैत्रः समरसिंहतया व्यवह्रियताम् इति प्रभोः आदेशे यथा संग्रामसिंहः इति न शब्दपरावृत्त्या व्यवहारः किन्तु समरसिंहतया एव इति शब्दप्रधानता तथा वेदोक्तशब्देन एव सङ्कल्पोत्सर्गादिवाक्यरचना न तु शब्दपरावृत्त्या तदर्थकशब्दान्तरेण इति शब्दप्रधानता यथा श्रुतिवौहारः इति नियमात् वौहारः वाक्यरचना। सुहृत्सम्मितेति। सुहृत् अत्र सुहृ-

तशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्य्यवत् पुराणादीतिहासेभ्यश्च शब्दार्थयोः गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यं लोकोत्तरवर्णनानिपुणकविकर्म, तत् कान्ता इव सरसतापादनेन अभिमुखीकृत्य रामादिवत् वर्त्तितव्यं, न रावणादिवत् इति उपदेशं च, यथायोगं कवेः सहृदयस्य च करोति इति सर्वथा तत्र यतनीयम्॥

---

दुपदेशः। अर्थतात्पर्य्यवन्तः ये पुराणेषु इतिहासाः तच्छास्त्रेभ्यः तद्बोधकशास्त्रेभ्यश्च विलक्षणम् इति अन्वयः। सुहृदुपदेशस्य इतिहासशास्त्रस्य च अर्थमात्रेण एव व्यवहारः तदर्थकशब्दान्तरपरावृत्त्या अपि इति सुहृदुपदेशसम्मितत्वम् इतिहासशास्त्रस्य इतिहासादिभ्यः इति क्वचित्पाठः तथापि तदीयशास्त्रपरम् एव तथापि तत्पदम्। वेदादिशास्त्रेतिहासशास्त्राभ्यां काव्यस्य वैलक्षण्ये हेतुम् आह शब्दार्थयोरिति। गुणभावः गुणता अनुपादेयता इत्यर्थः। तर्हि काव्ये किं प्रधानम् इति आह रसाङ्गेति। रसस्य अङ्गभूतः बोधकः व्यापारः व्यञ्जनारूपः यस्मै व्यङ्गाय रसाङ्गभूतव्यापारः तत्प्रधानतया इत्यर्थः। व्यापारान्तराप्राधान्यस्य अनुक्तत्वात् व्यञ्जनाव्यापारस्य प्राधान्यकथनानुपयोगेन बहुव्रीहिः अत्र दर्शितः। कविकृतकाव्यस्य एव इति हृदयेन कविभवं काव्यम् इति योगार्थे कविः विलक्षण एव अभिमत इत्याह लोकोत्तरेति। लोकविलक्षणवर्णनायां निपुणः यः कविः तस्य कर्म जन्यम् इत्यर्थः। कान्तासम्मिततया इत्यादिकं व्याख्यातुम् आह तदिति। तत् काव्यं कर्तृ पूर्व्वोक्तं यशआदिकं उपदेशञ्च करोति इति अन्वयः। उपदेशाकारम् आह रामादिवदिति। अत्र धर्म्यकर्मप्रवृत्त्युपदेशः न रावणादिवत् इति अधर्म्यकर्मनिवृत्त्युपदेशः। तत्र च कान्तासम्मितत्वं दर्शयति कान्ता इव इति। काव्येन अपि प्रथमं स्वरसत्वापादानम् अतः कान्तातुल्यता। उक्तानि प्रयोजनानि सर्वाणि न कवेः व्यवहारोपदेशयोः पूर्वज्ञातयोः एव कविना उपनिबद्धत्वात्। न वा बोद्धुः तस्य काव्यात् यशोऽर्थाभावात् किन्तु स्वज्ञानप्रकर्षात् एव तस्य यशोऽर्थलाभात् इत्यतः आह यथायोगमित्यादि। यथासम्भवम् इत्यर्थः। सकृत् यस्य बोद्धुः इत्थं प्रयोजनवत्त्वेन तस्याः काव्यरूपनिर्मितेः उपादेयत्वेन तज्जनकतया भारत्याः उत्कर्षः युज्यते

अस्य कारणम् आह ।

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥

शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां विना काव्यं न प्रसरेत् प्रसृतं वा उपहसनीयं स्यात्, लोकस्य स्थावरजङ्गमा-

---

एव स्वप्रयोजनत्वेन तत्र कविना काव्यबोद्धा च यतनीयं च इति आह सर्वथा तत्रेति। तत्र काव्ये तद्बोधे च यतनीयं कविना तद्बोद्धा च इति शेषः। ननु यत्नमात्रात् न फलसिद्धिः अपि तु कारणान्तरसत्त्वात् एव इति कारणान्तरम् अपि ज्ञातव्यम् अतः तदाह कारिकायाम् इति आह अस्येति। कवेः सहृदयस्य यतनीयत्वे कथनात् अस्य इत्यत्र काव्यस्य काव्यबोधस्य च कारणम् आह इत्यर्थः।

शक्तिरित्यादि। लोकशास्त्राद्यवेक्षणात् निपुणः इत्यत्र अन्वयः। शक्तिपदार्थम् आह कवित्वबीजेति। कवित्वपदम् अत्र शब्दतद्बोधोभयपरं सहृदयस्य अपि यतनीयत्व-कथनेन तद्बोधकारणकथनस्य अपि आकाङ्क्षितत्वात् अत एव अग्रे तदुद्भवः इत्यत्र तस्य काव्यस्य उद्भवे निर्माणे समुल्लासे च इति व्याख्यास्यते। समुल्लासः हि ज्ञानम्। अत एव काव्यज्ञपदस्य काव्यविचारकपरता अपि व्याख्यास्यते च। तथा च संस्कारविशेषः इत्यत्र संस्कारत्वैकत्वात् एकवचनं संस्कारव्यक्तिविशेषौ इति तु परमार्थः। संस्कारपदं च अत्र अतीन्द्रियात्मविशेषणत्वेन पुण्यविशेषपरं, पुण्य-विशेषवतः एव काव्यकर्तृत्वात् काव्यबोद्धृत्वात् च। भावनाख्यसंस्कारपरमिति चक्रवर्ती तत् न। तस्य स्मृतिजनकता एव सिद्धा काव्यतदर्थानुभवयोः अजनकत्वात् पदार्थस्मारकभावनायाश्च सर्वसाधारणत्वेन अव्यावर्त्तकत्वात् काव्याकर्तृकाव्याबोद्धृ-व्यावर्त्तनाय पुण्यविशेषस्य अवश्यवक्तव्यत्वात् च। अन्वयव्यतिरेकयोः कारणताग्राहक-त्वात् अन्वयस्य व्यभिचारिसाधारणत्वेन तम् अदर्शयित्वा व्यतिरेकम् एव दर्शयति प्रसृतं वा इति। जनकशक्त्या प्रसृतं यां बोधिकां शक्तिं विना यां विना इति यां जनिकां शक्तिं विना इत्यर्थः। न प्रसरेत् न जायते इत्थं शक्तिव्यतिरेकात् काव्य-व्यतिरेकं दर्शयित्वा शक्त्यन्तरव्यतिरेकात् काव्यबोधकव्यतिरेकं दर्शयति प्रसृतं वा इति। जनकशक्त्या प्रसृतं यां बोधिकां शक्तिं विना बोधाभावेन उपहसनीयं स्यात् इत्यर्थः। सत्काव्योपहासात् एव बोधव्यतिरेकलाभः। काव्यपदस्य अत्र अनुप-

स्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोषकला-चतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां, काव्यानां च महाकवि-सम्बन्धिनाम्, आदिग्रहणात् इतिहासादीनां च विमर्शनात् व्युत्पत्तिः, काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिः इति त्रयः समुदिताः, न

---

हसनीयकाव्यपरत्वे प्रसृतं वा इति वाकारेण तत्र एव प्रसृतत्वान्वयस्य ग्राहणीयत्व-नियमात् न तु उपहसनीयकाव्यरूपधर्म्यन्तरे। तथा च शक्तिं विना अनुपहसनीयस्य प्रसृतत्वानुपपत्तिः एव बोधकशक्त्यकथने इति यत्र यः तस्य काव्यनिर्माणे समुल्लासे च हेतुः इति वृत्त्यनुपपत्तेश्च त्रयान्तर्गतायाः शक्तेः बोधकारणतानुक्तौ तादृशोप-संहारानुपपत्तेश्च। अतः यां विना इत्यनेन जनकशक्तिव्यतिरेकस्य एव प्रदर्शितत्वेन यां विना प्रसृतं वा इति अनुपन्नं कारणव्यतिरेकेण कार्य्यस्य प्रसरणाभावात् इति दूषणम् अपास्तम् मैथिलाः तु अनुपहसनीयकाव्यस्य एव शक्तिजन्यत्वात् यां विना प्रसृतं काव्यान्तरम् उपहसनीयं स्यात् इति आहुः तत् न। प्रसृतं वा इत्यादेः अना-काङ्क्षताभिधानतापत्तेः शक्तिकाव्यकारणतायां ग्राहितायां शक्तिजन्यकाव्येन एव शक्तिव्यतिरेकानुविधानस्य आकाङ्क्षितत्वात् न शक्त्यजन्यकाव्यस्य उपहसनीयतायाः। यां विना यदि प्रसृतं स्यात् तदा उपहसनीयं स्यात् इति तर्कपरम् इति अन्ये तदपि न। एतस्य यथाश्रुतस्य घटादौ व्यभिचारात्। यदि च यदि यां विना प्रसृतकाव्यं स्यात् इति क्रियते तथापि यां विना प्रसृतकाव्यासिद्धेः प्रसिद्धौ तु अनुपहसनीये तत्र एव व्यभिचारात् मूलशैथिल्यात् उपहसनीयम् इति कर्मणि अनीयः अपकाव्यम् इदम् इति काव्यस्य उपहासात्। चक्रवर्त्ती तु करणे एव अत्र अनीयः काव्येन करणेन तत्कर्तुः एव उपहासात् इति तत् न। बोधकशक्त्य-भावस्य एव उपहासकरणत्वात्। न तु वस्तुतः अदृष्टस्य काव्यस्य लोकशास्त्रादिकं व्याचष्टे लोकशास्त्रकाव्यानाम् अवेक्षणात् इत्युक्तौ एव लक्षणा प्रत्येकं लोकादीनाम् अन्वयं दर्शयन् व्याचष्टे लोकस्येति। लोकदर्शनं न काव्यहेतु किन्तु वर्णनीयार्थ-ज्ञानं स्वरूपस्लोकस्य अवर्णनीयत्वात् इत्यत लोकपदं लोकवृत्तपरतया व्याचष्टे लोक-वृत्तस्येति। अवेक्षणात् इत्यत्र अन्वयः स्थावरवृत्तं च नवपल्लवकलिकाकुसुमोत्पादन-नीरप्रस्रवणादि अभिधानकोषः अमरसिंहादिनामसमुच्चयबोधकशास्त्रम्। कलादौ

तु व्यस्ताः तस्य काव्यस्य उद्भवे निर्माणे समुल्लासे च हेतुः न तु हेतवः ।

---

सर्वत्र लक्षणग्रन्थान्वयः। कला नायिकानां हेलालीलादयः चतुःषष्टिः, चतुर्वर्गः धर्मार्थकाममोक्षाः, खड्गात् इत्यादिपदात् रत्नपरिग्रहः एषां लक्षणग्रन्थज्ञानात् वर्णनीयार्थज्ञानं इतिहासादीनाम् इत्यादिपदात् नाट्याङ्गपरिग्रहः। अवेक्षणात् इत्यस्य व्याख्याविमर्शणात् इति व्युत्पत्तिः लोकवृत्त्यादिरूपविमर्शनीयार्थविषयकः संस्कारः निपुणता पदस्य इयं व्याख्या काव्याङ्गपदं काव्यकर्तृकाव्यबोद्धृउभयपरतया शिक्षापदं च उपदेशपरतया व्याचष्टे काव्यं कर्तुम् इति। करणे प्रयोजने च इति काव्यकर्तुपदेशेन करणे काव्यविचारकोपदेशेन अन्वयबोधरूपयोजने प्रवृत्तिः प्रवृत्तिजन्येन क्रियमाणार्थयोज्यमानार्थविषयज्ञानेन जनितः संस्कारः प्रवृत्तेः अस्थायित्वात्। समुदिता इति च दण्डचक्रन्यायेन परस्परसहिताः एव हेतुः फलोपधायकाः इत्यर्थः। मिलनेन सामग्रीत्वात् एकवचनं न तु व्यस्ता व्रीहियवन्यायेन तृणारणिमणिन्यायेन वा प्रत्येकं न हेतवः न फलोपधायकाः इत्यर्थः स्वरूपयोग्यतारूपं हेतुत्वं तु केवलानां दण्डादीनाम् इव अस्ति एव इति बोध्यम्। मिलितानां तथात्वं तु मन्वाद्यनधीनकाव्यं प्रति एव बोध्यं शिशुकृते काव्ये तु जन्मान्तरीणतत्त्रयम् अस्ति एव इति। अत्र समुदिताः व्यस्ताः इत्युभयोः हेतुः न तु हेतवः इत्यत्र एव अन्वये एकस्मिन् अत्र वाक्ये न तु पदद्वयं पुनरुक्तं अतः अत्र अध्याहारेण वाक्यभेदः एव करणीयः। तथाहि समुदिताः कारिकास्थेन इतिशब्देन परामृष्टा इति अध्याहारात् एकं वाक्यं न तु व्यस्ताः इति आवृत्त्या प्रत्येकं न तु परामृष्टाः इत्यपरं वाक्यं तथा च हेतुः न तु हेतवः इति अपरं वाक्यद्वयम् इति न तु पदद्वयापौनरुक्त्यं एवं च कारिकास्थेति शब्दः अपि व्याख्यातः भवति अन्यथा तु तद्व्याख्यान्यूनता स्यात्। न च इति त्रये इति ग्रन्थकृता व्याख्या एव कृता इति क्व न्यूनता इति वाच्यं ? तथात्वे अपि समुच्चये इतिवत् इति त्रये इत्येव निर्दिश्येत स्वप्रयुक्तेतिशब्देन एव उक्तम् इति त्रये इति उद्भवपदम् उत्पत्तिबोधोभयपरतया व्याचष्टे निर्माणे समुल्लासे चेति। समुल्लासः बोधः। काव्यपदार्थाज्ञाने तदर्थप्रयत्नासम्भवात् कारिकायां काव्यलक्षणम् उक्तं तत् आभाषयति एवम् इति। काव्यतद्बोधोभयकारणस्य उक्तत्वात् एवम् अनयोः कारणम् उक्त्वा अस्य स्वरूपम् आह इत्येव अन्वयस्वरूपं लक्षणम्।

एवम् अस्य कारणम् उक्त्वा स्वरूपम् आह।

**तददोषौ शब्दार्थौ**

**सगुणावनलङ्कृती पुनः क्वापि।**

दोषगुणालङ्काराः वक्ष्यन्ते, क्वापि इत्यनेन तदाह यत् सर्वत्र सालङ्कारौ क्वचित् तु स्फुटालङ्कारविरहे अपि न काव्यत्वहानिः। यथा

---

तददोषाविति। अदोषत्वादिविशिष्टौ शब्दार्थौ तत् इति अन्वयः। तत्पदेन च काव्यं यशसे इत्याद्युक्तं काव्यं परामृष्टम्। एवं च काव्यत्वं विशिष्टवृत्ति न प्रत्येकवृत्ति यत् तु काव्यं शृणोमि इति प्रत्ययात् काव्यत्वं शब्दमात्रवृत्ति इति केचित् आहुः तत् न, अस्य अपि शब्दद्वारा तथा प्रतीतिविषयत्वात् आत्मा श्रोतव्यः इतिवत् न काव्यत्वं व्यासज्यवृत्ति अर्थाज्ञाने अपि शब्दावलीमात्रे काव्यत्वानुभवानुपपत्तेः यावत् आश्रयाविषयदानेन व्यासज्यवृत्ति धर्माविषयीकरणाभावात्। शब्दार्थयोः प्रत्येकं सगुणत्वादिविशेषणबाधात् शब्दानुपनिबद्धार्थतदनिबन्धकशब्दयोः इति व्याप्तेश्च। न प्रत्येकं शब्दार्थौ काव्यं किन्तु परस्परविशिष्टौ एव तौ काव्यम् इत्यर्थः। तत्र क्वचित् शब्दविशिष्टः अर्थः क्वचित् अर्थविशिष्टः शब्दः इति बोध्यं न तु एकः श्लोकः एव द्विधा काव्यत्वम् एकधा काव्यत्वेन एव व्यवहारोपपत्तेः। तद्विनिगमना च यत्र आर्थी व्यञ्जना तदभावे अपि अर्थालङ्कारमात्रं वा तत्रार्थः विशेष्यः। यत्र तु शाब्दी व्यञ्जना तदभावे अपि शब्दालङ्कारमात्रं वा तत्र शब्दः विशेष्यः इति बोध्यम्। उभयालङ्कारसत्त्वे तु तच्चमत्काराधिक्यसापेक्षा विनिगमना बोध्या। अद्रौ अत्र प्रज्वलति अग्निः उच्चैः प्राज्यः प्रोद्यन् उल्लसति अत्र धूमः इत्यादौ नीरसादितया अकाव्यत्वेन स्वयं वक्ष्यमाणे अतिव्याप्तिवारणाय सरसौ इति विशेषणं भङ्ग्या दातुं सगुणौ इति। गुणाः हि माधुर्य्यौजःप्रसादाख्याः त्रयः रसवृत्तयः रसत्वव्यापकधर्माः। ते च रसद्वारा एव काव्यवृत्तयः इत्यतः गुणवत्त्वं द्वारभूतत्वेन रसस्थित्या सरसौ इति पर्य्यवस्यति। न च एवं भावतदाभासादिध्वनौ अव्याप्तिः इति वाच्यं भावतदाभासादीनाम् अपि रतिस्थायिभावकत्वेन रतिस्थायिभावकधर्मा शृङ्गारतुल्यकक्षत्वात् तत्रापि माधुर्य्यगुणाङ्गीकारात् एवं क्रोधमूलकविषादादिभावध्वनौ ओजोगुणस्य रतिमूलके तु माधुर्य्यस्य अङ्गीकारात्। तद्वक्ष्यति "रतिर्देवादिविषया व्यभिचारि-

य: कौमारहर: स एव हि वरस्ता एव चैत्रक्षपा:
ते चोन्मीलितमालतीसुरभय: प्रौढ़ा: कदम्बानिला: ।

---

तयाश्रित:" इति भावप्रोक्त: इति। न च एवम् असूयादि व्यभिचारिध्वनौ अपि अव्याप्ति:। तत्र असूयादे: एव स्थायिभावत्वात् इति वाच्यं तत्रापि रसावश्यम्भावात्। परन्तु भावप्रतीते: प्रौढ़त्वात् भावध्वनितया व्यवक्रियते। तदुक्तं "न भावहीनोऽस्ति रसो न भावो रसवर्जित:। परस्परकृता सिद्धिरनयो रसभावयो:"। इति। एवं वस्त्व-लङ्कारध्वनिगुणीभूतव्यङ्ग्यादौ अपि रसावश्यम्भावात् न अव्याप्ति:। अलङ्कारमात्र-विशिष्टं चित्रकाव्यम् अपि सद्व्यङ्ग्यरसवत्त्वात् अव्याप्तिरहितम् एव तत् वक्ष्यति "शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्" इति लक्षणे अव्यङ्ग्यम् इति स्फुटप्रतीय-मानार्थरहितम् इत्यर्थ:, इति प्रतीयमानार्थ: व्यङ्ग्य: इति स्फुटतद्राहित्यात् ईषत्तदत्ता अवगम्यते प्रकाशयिष्यते च अयम् अर्थ: दशमोल्लासे उपमालङ्कारे। अनलङ्कृती पुन: इत्यत्र पुन: शब्द: अप्यर्थे ईषदर्थे च नञ् तेन ईषदलङ्कृती अपि इत्यर्थ:। अप्यर्थेन प्रौढ़ालङ्कृतिपरिग्रह:, तेन सालङ्कारौ इत्यर्थ: व्याख्यास्यते च एवं वृत्तौ। अलङ्कृतिपदस्य प्रौढालङ्कृतिपरत्वभ्रमनिरासार्थम् इत्यम् उक्ति:। रसवत: अवश्यं सालङ्कारत्वम् इत्येतत्प्रदर्शनाय एव तदुपादानं न तु अव्याप्त्यतिव्याप्तिवारणाय "तत्कान्ये कामयमानं मां न त्वं कामयसे कथम्?" इति दण्ड्युक्तम् अकाव्यम् एव शृङ्गाररसवति अपि तत्र अतिव्याप्तिवारणाय सालङ्कारौ इति तद्विशेषणम् इति वा। वैचित्र्यमात्रस्य एव अलङ्कारत्वेन स्वोक्तालङ्काराभावे अपि अन्योक्तालङ्कारध्रौव्यात् निःशेषेत्यादौ चन्दन-च्यवनादे: वापीस्नानहेतुकत्वात् हेत्वलङ्कारस्य एव सत्ता एवं प्रायश: हेत्वलङ्कारवत्ता एव बहूनां काव्यानाम्। ननु अदोषौ इत्यनेन यदि दोषसत्त्वे काव्यत्वं न इष्यते? तत् किं "तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्" इत्यादि: कृतम् "अनुमतं दृष्टं वा यै: इदं गुरुपातकम्" इत्यादि: च अग्रे स्वयं काव्यत्वेन उदाहरणं कृतं दोषोल्लासे तथा-भूताम् इत्यादि: न्यूनपददोषवत्त्वेन कृतम् अनुमतम् इत्यादिश्च पुनरुक्तदोषवत्त्वेन उदा-हरिष्यमाणत्वात् इति चेत्, न, रसप्रतिबन्धकदोषाणां प्रतिकूलवर्णश्रुतिकटुकष्टानां शाब्दबोधसामग्रीविघटकानां च च्युतसंस्कृति: क्लिष्टा भवन्मतयोगदोषाणाम् अभावस्य एव अत्र विवक्षितत्वात् च्युतसंस्कृतिना साधुत्वज्ञानस्य क्लिष्टेन आसत्तिज्ञानस्य अभवन्मतयोगेन आकाङ्क्षायोग्यताज्ञानयो: च शाब्दबोधकारणानां विघटनात्। दोषान्तरं तु काव्यप्रकर्षकम् 'एव न तु काव्यत्वविघातकम्। केचित् तु एकत्र एव

**सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ**
**रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥**

---

काव्ये दोषवदवयवावच्छेदेन अकाव्यत्वम् अन्यावच्छेदेन तु काव्यत्वम् अतः दोष-सामान्याभाववन्तौ इति एव अर्थम् आहुः। तत् च एकत्र उभयव्यवहारपरात् अनु-पादेयम् एव। दोषाद्यज्ञाने अदोषताद्यग्रहात् आह दोषगुणेति। क्वापीत्यन्ये-नेति समीचीनः पाठः, क्वापीत्यनेनेति बहुपुस्तकपाठेऽपि तथा एव अर्थः बोध्यः। अनलङ्कृती पुनः इत्यादिः अर्थस्यैव यत् सर्वत्रेत्यादिना प्रदर्शितत्वात्। सर्वत्र श्लोके ईषदर्थकनञा अप्यर्थकपुनःशब्देन च ईषदनीषदलङ्कारलाभात् आह सालङ्कारा-विति। अतः स्फुटालङ्कारवत्त्वं लक्षणेन प्रवेशितम् इति आह क्वचित्त्विति। देशविशेषे कृतसङ्केतायाः गृहे स्वयं परामर्शः अयं रेवायाः नद्याः रोधसि तीरे वेतसी-नामकस्य तरुविशेषस्य तले सुरतक्रीड़ाविधिनिमित्तं तथापि चेतः समुत्कण्ठते। ननु विलक्षणरतिक्षमनायकप्राप्त्यर्थं युज्यते एव उत्कण्ठा इत्यत्र आह यः कौमार इति। कौमारं कुमारीत्वं अविवाहितत्वम् इति यावत् तत् यः विवाहेन कृतवान् अर्थात् पतिः सः एव वरः श्रेष्ठः विलक्षणरतिक्षमः एव इत्यर्थः। विलक्षणोद्दीपिकायाः रात्रेः प्राप्त्यर्थं तत्र उत्कण्ठा इत्यपि न इति आह ता एवेति। एवम् अनिल-विशेषप्राप्तिः अपि अत्र एव अस्ति इति आह चैत्रेति। चैत्रपर्यायां कदम्बपुष्पाभावात् कदम्बपदम् अत्र धूलीकदम्बपरम् इति चक्रवर्त्ती। स्थानविशेषमाहात्म्यात् चैत्रे अपि कदम्बपुष्पम् इति अन्ये। मन्दानिलस्य एव उद्दीपकत्वात् प्रौढ़त्वे अपि मान्द्यलाभार्थं कदम्बवृक्षानिलाः इति एव उक्ताः। वृक्षानिलानां प्रौढ़त्वे अपि मन्दत्वात् इति वयम्। तत्र गत्वा अहं विलक्षणरूपा स्याम् ? इत्यपि न इति आह सा चैवेति। अत्र अपि अहं तदवस्था एव अस्मि इत्यर्थः। तथा च तत्र उत्कण्ठाचिन्ताहेतुः का इति भावः। एवं च चित्तस्वभाववैलक्षण्यविषयेण विस्मयेन उद्दीपितः शृङ्गारा-भासः अत्र व्यङ्ग्यः। अत्रेति रसानुगुणे सति शब्दात् साक्षात्प्रतीयमानत्वं स्फुटत्वम्। अत्र तादृशाः त्रयः अलङ्काराः सन्ति। तथाहि रतिक्षमपत्यादिसत्त्वकथनात् उत्कण्ठाकारणं नास्ति इति भङ्ग्या उक्तं, उत्कण्ठारूपं फलं तु दर्शितम् इति विभा-वनालङ्कारः अस्ति। क्रियायाः प्रतिषेधे अपि "फलव्यक्तिर्विभावना" इति तल्ल-क्षणात्। "अप्रदीपोज्ज्वलं गृहम्" इत्याद्यनुरोधेन क्रियापदस्य कारणपरत्वात्। स च अलङ्कारः अत्र शब्दतः साक्षात् न प्रतीयमानः, उत्कण्ठाकारणानां रतिक्षम-

अत्र स्फुटः न कश्चित् अलङ्कारः रसस्य च प्राधान्यात् न अलङ्कारता।

तद्भेदान् क्रमेण आह।

इदमुत्तममतिशयिनि
व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः॥ ४॥

---

पत्याद्यसत्त्वानां पत्यादिसत्त्वकथनेन आक्षेप्यत्वात् एव नञः अनुपस्थापितत्वात्। तथा अनुत्कण्ठाकारणानां रतिक्षमपत्यादिसत्त्वानाम् उक्तौ अपि अनुत्कण्ठारूपफलस्य अभावः उक्तः इति विशेषोक्त्यलङ्कारः अपि अस्ति। "विशेषोक्तिः अखण्डेषु कारणेषु फलावचः" इति तल्लक्षणात्। फलावचः फलाभावोक्तिः। स च अनुत्कण्ठारूपफलस्य नञाभावाकथनात् उत्कण्ठाकथनेन एव आक्षेप्यत्वात् शब्दतः साक्षात् अप्रतीयमानत्वेन अस्फुटः। तथार्कौ मावद्दवी वरः इति रेफानुप्रासः अपि अत्र अलङ्कारः। स च अत्र शब्दतः साक्षात्प्रतीयमानः अपि प्रकृतशृङ्गाराभासरूपरसाननुगुणत्वात् अस्फुटः लघुरूपाणाम् एव माधुर्य्यव्यञ्जकत्वेन शृङ्गारानुगुणत्वात्। तत् वक्ष्यति। "मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू। अवृत्तिर्मध्यवृत्तिर्वा माधुर्य्ये घटना तथा॥" अत्र लघ्वोः रणयोः एव माधुर्य्यव्यञ्जकत्वोक्तेः। ननु रसाभासत्वात् ऊर्जस्विनामालङ्कारः एव अत्र स्फुटः अस्ति? इत्यतः आह रसस्य हीति। रसाभासस्य हि इत्यर्थः परनायकविषयरतेः रसाभासत्वात् प्राधान्यात् पराङ्गत्वाभावात् पराङ्गत्वे एव हि रसवत् प्रेयः ऊर्जस्विनामालङ्कारः एव अत्र स्फुटः अस्ति इत्यतः आह। समाहितनामानः चत्वारः अलङ्काराः वक्ष्यन्ते। काव्यसामान्यज्ञाते तदीयप्रभेदे जिज्ञासा जायते इति तद्भेदविबोधिका कारिका आभाषयति तद्भेदान् आह इति इदमिति। वाच्यात् अतिशयिनि वाच्यात् अधिकास्वाद्ये व्यङ्ग्ये सति इदं काव्यम् उत्तमं तत् एव च बुधैः ध्वनिः कथितः इत्यर्थः। ननु ध्वनिपरिभाषा क अपि केन अपि न कृता तत्कथम् अलङ्कारशास्त्रे सा कृता? इति आकाङ्क्षायां वैयाकरणरूपबुधसंवादं दर्शयन् व्याचष्टे बुधैः वैयाकरणैरिति। एवञ्च न इयं कारिकास्थबुधपदव्याख्या इति अवधेयम्। अत्र अयम् अर्थः अनेकवर्णात्मकस्य कलसादिपदस्य प्रत्यक्षं न सम्भवति आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावेन तन्मेलकात्मनः पदस्य गृहीतम् अशक्यत्वात्। न च प्रत्येक-

इदमिति काव्यं, बुधैः वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिः इति व्यवहारः कृतः, ततः तन्मतानुसारिभिः अन्यैः अपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य । यथा

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।

---

वर्णानुभवजन्यसंस्कारैः सकलवर्णात्मनः पदस्य समूहालम्बनस्मृतिः एव नैयायिकमतसिद्धा अस्तु इति वाच्यं वर्णपदयोः एकदेशैकदेशिभावेन भिन्नत्वात् वर्णविषयकसंस्कारैः पदस्मरणजननाशक्यत्वात् इति अभिप्रायवद्भिः वैयाकरणैः पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितेन अनुभूयमानचरमवर्णेन श्रोत्रे व्यञ्जनाख्यः व्यापारः जन्यते। तेन एव व्यापारेण नष्टवर्णघटितम् अपि पदं स्फोटपरिभाषितं श्रोत्रेण साक्षात् क्रियते इत्युच्यते तत् आह बुधैः वैयाकरणैः इति । अर्थप्रत्यायकत्वात् एकदेशित्वात् च पदं वर्णापेक्षया प्रधानभूतं स्फोटसञ्ज्ञकं च तद्रूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य अन्त्यवर्णात्मनः इत्यर्थः । अतः तन्मतेति चरमवर्णात्मनि शब्दे तेषां ध्वनिव्यवहारः 'आलङ्कारिकाणाम् अपि काव्यात्मनि शब्दे ध्वनिव्यवहारः इति शाब्दे व्यवहारसाम्यात् मतानुसरणम् अन्ये वा आलङ्कारिकरूपैः बुधैः । कारिकास्थबुधपदव्याख्यानम् इदं न्यग्भावितं स्वस्मात् अनिष्कृष्टीकृतं वाच्यं येन पदार्थेन तद्व्यञ्जनक्षमस्य इत्यर्थः । वाच्यात् अतिशयिनि व्यङ्ग्ये सति ध्वनित्वस्य कारिकोक्तत्वात् । शब्दार्थयुगलस्य इति परस्परविशिष्टयोः शब्दार्थयोः काव्यत्वेन उक्तत्वात् । विशेष्यविशेषणभावापन्नयोः तयोः एव च मुख्यगौणभावेन व्यञ्जकत्वात् । तत्र शब्दविशिष्टार्थस्य अतिशयास्वाद्यव्यङ्ग्यव्यञ्जकत्वेन ध्वनिकाव्यम् उदाहरति निःशेषेति । उपनायकम् आनेतुं प्रेषितां तेन एव सम्भुक्तां तम् अनासाद्य स्नात्वा आगता अस्मि इति उक्तवतीं दूतीं प्रति नायिकायाः उक्तिः इयम् । यत्नात् अपि स न आयातः इति मिथ्यावादिनि ! हे दूति ! बान्धवजनस्य मम नायकानागमने यत्पीड़ागमः तम् अज्ञातवती त्वम् स्नातुम् इतः वापीं गता असि न पुनः तस्य अधमस्य अन्तिकम् इति अन्वयः । दूतीप्रस्थापनसापेक्षत्वेन तस्य अधमत्वम् । वापीस्नानसाधकानि आह निःशेषेत्यादि । तव स्तनतटं यतः निःशेषेण च्युतं चन्दनं यत्र तादृशं एवम् उत्तरत्र अपि समासः । दूरम् अतिशयं इयं दृश्यमाना

मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीड़ागमे !
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

---

तन्वी चीणा तव तनुः पुलकिता स्नानजाड्येन अत्रेति प्राधान्येन दर्शितं व्यङ्ग्यं वाच्यापेक्षया प्रधानत्वेन शब्दविशिष्टेन अर्थेन व्यज्यते इत्यर्थः। शब्दोपनिबन्धे वाच्यार्थे अवगते सति उक्तव्यङ्ग्यावगमात्। तथाहि चन्दनस्य निःशेषच्युतिः अतिशयमर्दनात् एव स्नाने तु चालनम् एव न च्युतिः। तथा स्तनस्य तटं प्रान्तभागः तव आलिङ्गनस्पृष्टत्वात् तादृशं स्नाने तु समस्तस्तनः एव तादृशः स्यात्। तथा चुम्बनात् एव रागः निर्मृष्टः भवति स्नाने तु चालितः इव स्यात्। तथा अधरस्य उत्तानत्वात् चुम्बनस्पृष्टत्वेन तव एव निर्मृष्टरागत्वम् उक्तं न तु न्युब्जे पूर्वौष्ठे अपि स्नाने तु द्वयम् एव तथा स्यात्। तथा दूरं प्रान्तभागं व्याप्यैव अनञ्जने चुम्बनस्पृष्टत्वात् स्नाने तु सर्वावच्छेदेन एव तथा स्यात्। तथा इयम् इदानीं दृश्यमाना तनुः पुलकिता इत्यनेन इदानीम् एव पुलकः नीचरतात् नीचरतं हि नायिकायाः पश्चात् भावोद्बोधेन प्रकृते च विलम्बे नायिकायाः एव स्वयम् आगमनसम्भावनया सभयरतित्वेन प्रथमं भावानुद्बोधेन न उच्चरतं कार्य्यनिर्वाहे सति तु भयाभावेन पश्चात् भावोद्बोधः स्नाने तु तदानीम् एव पुलकः स्यात् वर्णयिष्यमाणात् तु तन्निवृत्तेः एव तथाधमत्वं मादृशोत्तमनायिकापेक्षया दूतीप्रसक्तत्वात्। केचित्तु क्वचित् पुस्तके प्राधान्येन अधमपदेन व्यज्यते इति पाठं दृष्ट्वा दूतीगमनत्वात् एव अधमत्वस्य उपपत्तिः। अन्यथा दूत्यगमने तस्य अपराधाभावेन अधमत्वोक्तेः अनुपपन्नत्वात् अधमपदस्य अन्यापेक्षया प्राधान्येन व्यञ्जकत्वं वर्णयन्ति तत्, न, वाच्यापेक्षया अतिशयिनः पदार्थयुगलेन व्यज्यमानस्य उदाहरणे दर्शयितव्ये अतिशयित्वरूपप्राधान्यस्य व्यङ्ग्ये एव वक्तुम् उचितत्वात्। न तु व्यञ्जके अधमपदे दूतीप्रख्यापनसापेक्षत्वेन अपि अधमत्वोपपत्त्या व्यञ्जकान्तरापेक्षया तस्य प्राधान्याभावात् च। यत्तु पञ्चमोल्लासे व्यक्तिवादिना तु अधमपदसहायानाम् एषां चन्दनच्यवनादीनां व्यञ्जकत्वम् उक्तम् इत्युक्तम् ग्रन्थकृता, तत्र अपि अधमपदस्य सहायता एव उक्ता न तु प्राधान्यं न हि दण्डसहायं चक्रं घटजनकम् इत्युक्ते दण्डस्य प्राधान्यम् अवगम्यते। तस्मात् अधमपदेनेति पाठः तत्त्वानवबोधप्रभवः एव। अत्र केचित् तदन्तिकागमनस्य वाच्यार्थस्य बाधितत्वे तेन स्वविरोधिनः तदन्तिकगमनस्य कथं व्यञ्जना ? बाधितत्वे अनवगतः वाक्यार्थः। कथं तदन्तिकम् एव इत्यादिकं व्यनक्ति

अत्र तदन्तिकम् एव रन्तुं गता असि इति प्राधान्येन अधमपदेन व्यज्यते।

अताद्दशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।

अताद्दशि वाच्यात् अनतिशयिनि। यथा
ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥

---

इत्यतः लक्ष्यम् इति पूरयित्वा ग्रन्थं समर्थयन्ति। तया च तदन्तिकं गता असि इति लक्ष्यं वर्णं व्यज्यते रमणं व्यज्यते इत्यर्थः इत्याहुः तत् न। प्रथमम् अबाधितत्वे अपि यथोक्तविशेषणतात्पर्य्यप्रतिसन्धाने सति स्वविरोधिनः तदन्तिकगमनस्य व्यञ्जने सति वाच्यार्थबाधे अनुपपत्त्यभावात्। तदुक्तम् अन्यत्र "क्वचिद्बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम्। एकत्र लक्षणैव स्यादन्यत्र व्यञ्जनैव तु॥" इति। किञ्च लक्ष्यम् इति पूरयित्वा अन्यसमर्थनम् अपि असम्भवम्। तथाहि, तदन्तिकं गता असि इति लक्ष्यम् इति यदुक्तं तत्र कुत्र पदे गमनं लक्षणा गमधातोः स्वार्थत्वात् एव गमनस्य नत्रा नञि गमनलक्षणा गतासि इत्यनेन पौनरुक्त्यापत्तेः लक्षणां विना अपि वापीं स्नातुं न गता असि तस्य अधमस्य अन्तिकं पुनर्गता असि इति अन्वये अपि तदर्थसिद्धेः। किञ्च पञ्चमोल्लासे निःशेषेत्यादौ विधिः व्यङ्ग्यः एव इति गमनविधेः व्यङ्ग्यत्वस्य ग्रन्थकृदुक्तस्य विरोधः तैः गमनस्य लक्षत्वोक्तेः।

अताद्दशीति। व्यङ्ग्ये अताद्दशि तु सति काव्यं मध्यमम्। तत् च गुणीभूतव्यङ्ग्यं बुधैः कथितम् इति लिङ्गव्यत्ययेन अनुषङ्गः। वाच्यात् अनतिशयश्च द्विधा भवति। वाच्यन्यूनचमत्कारित्वे वाच्यतुल्यचमत्कारित्वे च इति। तत्र वाच्यन्यूनचमत्कारित्वे उदाहरति ग्रामतरुणमिति। नवा नवीना या वञ्जुलमञ्जरी अशोककलिका तत्-सनाथकरं तद्युक्तकरं ग्रामतरुणं मुहुः पश्यन्त्याः तरुण्याः मुखच्छाया मुहुः मलिना नितरां भवति इत्यन्वयः। अशोकतरुतले कृतसङ्केतं तत्र गत्वा तदीयमञ्जरीम् आदाय प्रतिनिवृत्तं दृष्ट्वा गृहव्यापारावेशात् स्वकृतसङ्केतभङ्गात् स्वापराधभावनया मलीमुख्या वर्णनम् इदं नायिकासम्मुखे अपरिचितपुरुषस्य अपस्थाने अन्येषां शङ्को-दयात् आह ग्रामेति। तरुणतरुण्योरिव तथौचित्यप्रतिपादनाय उभयत्र तरुणत्वो-पादानं मञ्जर्य्या अनवत्वापादानं प्रथमजातमञ्जर्य्यां सर्वेषां दिदृक्षासत्त्वेन तद्दिदर्श-

अत्र वञ्जुललतागृहे दत्तसङ्केता न आगता इति व्यङ्ग्यं गुणीभूतं, तदपेक्षया वाच्यस्य एव चमत्कारित्वात्।

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यन्त्ववरं स्मृतम् ॥ ५ ॥**

चित्रम् इति गुणालङ्कारयुक्तम्। अव्यङ्ग्यम् इति स्फुटप्रतीयमानार्थरहितम्। अवरम् अधमम्। यथा

---

यिषया तद्युक्तकरणत्वेन परेषां न शङ्कोदयः इत्येतदर्थम्। मुहुः दर्शनम् अनुरागात् मुहुः मालिन्यं स्वापराधभावनया अवेति। एतच्च व्यङ्ग्यं स्त्रीकार्यबोद्धृसामाजिकबोधविषयः वाक्यव्यङ्ग्ययोः चमत्कारित्वं च प्रकृते विप्रलम्भपुष्टिकारित्वात् एव तत्र दर्शितं व्यङ्ग्यं न स्वयं तत्पुष्टिकारि सङ्केतस्थलगमनाभावस्य मुहुर्दर्शनजन्य मुहुर्मालिन्यं वाच्यार्थम् अनपेक्ष्य विप्रलम्भाव्यञ्जकत्वात् तादृशकार्य्यत्यागे अपि तत्सम्भवात् अगतसङ्केतस्थलाया: मुहुर्नायकदर्शनात् मुखमालिन्येन वाच्यार्थेन एव विप्रलम्भव्यञ्जनात् इति व्यङ्ग्यार्थस्य निःशेषेत्यादौ तदन्तिकम् एव इत्यादेः इव वाच्यार्थनिरपेक्षरसपोषकत्वाभावात् गुणीभूतत्वं मुहुर्दर्शनात् मुहुर्मुखमालिन्यं तु वाच्यार्थः अनुरागात् एव जायते इति स्वातन्त्र्येण रसपोषकत्वात् भवति एव उक्तव्यङ्ग्यापेक्षया चमत्कारी। न च त्यक्तस्य पुनरागमने क्रोधात् अपि मुखमालिन्यं जायते इति वाच्यार्थः अपि व्यङ्ग्यसहकृतः इति पोषकः इति वाच्यम्? स्वयं कृतसङ्केतायाः तस्याः तद्दर्शनेन क्रोधानुदयात्। अनुरागात् एव मुहुर्दर्शनात् क्रोधात् तु सकृद्दर्शनात् एव।

शब्दचित्रमिति। अव्यङ्ग्यं काव्यं पूर्वोक्तद्वयापेक्षया अवरम् अधमम्। तत्र शब्दचित्रं वाच्यचित्रञ्च इति द्विधा बुधैः कथितम् इति अनुषङ्गः। एतेन उभयम् एव चित्रम् इति गम्यते। तत् एव उद्धृत्य व्याचष्टे चित्रम् इतीति गुणालङ्कारेति। न च स्वीकृतमाधुर्य्यौजःप्रसादाख्याः गुणाः रसवृत्तयः एव अव्यङ्ग्यत्वे न च स्फुटं रसानुपलम्भात् गुणयुक्तत्वं कथं लक्षणे दत्तम् इति वाच्यम्। स्फुटानुपलम्भे अपि उपलभ्यमानत्वात् एव इति दशमोल्लासे उपमाग्रन्थे वक्ष्यमाणत्वात्। शब्दालङ्कारवत्त्वे अपि शब्दचित्रत्वम् अर्थालङ्कारवत्त्वे वाच्यचित्रत्वम् उभयसत्त्वे तु सङ्करः इति बोध्यम्। प्रतीयमानार्थः व्यङ्ग्यार्थः। न च वाच्यसिद्ध्यङ्गम् अस्फुटम् इति यत् अस्फुटव्यङ्ग्यगुणीभूतव्यङ्ग्यकाव्यं वक्ष्यते तदभेदापत्तिः इति वाच्यम्? स्फुटालङ्कारत्वे चित्रमस्फुटालङ्कारत्वे तु गुणीभूतव्यङ्ग्यम् इति भेदात् सर्वथा वैचित्र्याभावात् निरलङ्कारं तु अकाव्यम् एव सालङ्कारत्वघटितकाव्यत्वभावात्।

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः ।
भिन्द्यादुद्यदुदारदर्दुरदरीदैर्घ्यादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥
विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेष-
निर्णयः नाम प्रथमः उल्लासः ।

---

स्वच्छन्देति । मन्दाकिनी वः युष्माकं मन्दतां पापेन अपकृष्टतां अह्नाय झटिति भिन्द्यात् इति आशीः । भिद्यात् इति पाठे आशिषि एव लिङ् सप्तमी । कीदृशी मन्दाकिनी स्वच्छन्दम् अप्रतिरुद्धम् उच्छलत् अच्छं निर्मलं गिरिकच्छकुहरैः छाते-तरं बलिष्ठं यत् अम्बु तच्छटया तत्कान्त्या मूर्च्छन्तः नश्यन्तः मोहाः अज्ञानानि येषां तादृशैः महर्षिभिः हर्षेण विहितं स्नानसन्ध्याह्निकं यस्यां तादृशी । तथा प्रवाहवृद्धि-वशात् जलप्रवेशेन उपरिभागभङ्गात् उद्यत् व्यक्तीभवत् उदाराणां दर्दुरदरीणां दैर्घ्यं यस्यां तादृशी । तथा दरिद्राणां अक्षीणानां महतां द्रुमाणां द्रोहोद्रेकेण ये महो-र्मयः तैः मेदुरः पुष्टः मदः प्रवाहचापल्यं यस्यां तादृशी । उच्छलदिति । शलगतौ "अमांसो दुर्बलश्छातः" इत्यमरः । अत्र छकारस्य महर्षिहर्षेत्यस्य आह्निकाह्ना-येत्यस्य दकारस्य मन्दमन्देत्यस्य च अनुप्रासः शब्दालङ्कारः । मन्दाकिनीविषयः भावस्तु दर्दुरदरीत्याद्यपुष्टार्थविशेषणवशेन दीर्घसमासेन च अस्फुटीकृतः अस्फुट-तद्वृत्ते गुणवत्त्वं च बोध्यम् । अथेचित्रम् आह विनिर्गतमिति । मानदमित्यत्र दादो-धातुद्वयः श्लेषः तेन अयं शिवाणां मानदातारं शत्रूणां मानखण्डनञ्च यदृच्छया आत्म-मन्दिरात् विनिर्गतम् उपश्रुत्य परम्परया श्रुत्वा ससम्भ्रमेण इन्द्रेण पातिता अर्गला यस्याः अमरावती तादृशी सती भयात् निमीलिताक्षी इव भवति इति अन्वयः । अत्र उत्प्रेक्षार्थालङ्कारः राजविषयास्फुटभावसत्त्वाच्च तद्व्यक्तिगुणवत्ता । नचेन्द्रभीतिजनकत्वेन पौरुषख्यापकविशेषणवत्त्वेन पुष्टार्थविशेषणवत्त्वात् अत्र भावः स्फुटः एवेति वाच्यं ? तदेवं स्यात् यदि भावव्यञ्जके वाक्यविश्रान्तिः स्यात् किन्तु निमीलिताक्षी इव भवति इति उत्प्रेक्षावाचकवाक्ये एव विश्रान्तिः इति तस्यैव प्रथमम् अवभासात् प्रौढत्वम् इति

# द्वितीयः उल्लासः ।



क्रमेण शब्दार्थयोः स्वरूपम् आह ।

**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

अत्र इति काव्ये । एषां स्वरूपं वक्ष्यते ।

**वाच्यादयस्तदर्थाः स्युः**

वाच्यलक्ष्यव्यङ्ग्याः ।

**तात्पर्य्यार्थोऽपि केषुचित् ॥ ६ ॥**

---

भावस्य तेन तिरोहितत्वात् अस्फुटत्वं पातितार्गला भवति इति न अन्वयः । तदा निमीलिताक्षी इव इत्यत्रापि तत्क्रियानुषङ्गापत्तेः । अतः अननुषङ्गाभिप्रायेण एव इदम् उदाहरणं बोध्यं भावस्य प्रतीतिविलम्बेन अस्फुटत्वं च अभिप्रेत्य उक्तं वस्तुतः तु शत्रुस्त्रीभीतिजन्यक्रियोत्प्रेक्षया अपि राजविषयभावपर्य्यवसानम् एव इत्यतः आपाततः एव इदम् उदाहरणम् उक्तं षष्ठोल्लासे ते दृष्टिमात्रपतिताः इत्यादिकं यदर्थचित्रोदाहरणं वक्ष्यते तदेव उदाहरणं बोध्यम् ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यविरचिते काव्यप्रकाशादर्शे

प्रथमः प्रतिविम्बः ॥ १ ॥

---

ननु बोधकबोध्ययोः एव शब्दार्थयोः काव्यत्वं वक्तव्यम् अबोधकाबोध्ययोः तयोः वैशिष्ट्यस्य एव अभावात् ? बोधकबोध्यभावश्च वृत्त्या एव भवति इति कया वृत्त्या शब्दानां बोधकत्वं अर्थानाञ्च बोध्यम् इत्यत्र उक्तां कारिकाम् आभासयति क्रमेणेति। स्वरूपम् अत्र लक्ष्यम् । काव्ये इति । काव्ये विचार्य्ये अलङ्कारशास्त्रे इत्यर्थः । शास्त्रान्तरे तु व्यङ्ग्यार्थस्य अनुमितिगम्यत्वम् इति भावः । तथाच शब्दः शक्त्या लक्षणया व्यञ्जनया च प्रतिपादकः इत्यर्थः । एषां स्वरूपम् इत्यत्र स्वरूपं लक्षणम् । केषुचित् नैयायिकेषु । तन्मते उपस्थितपदार्थसंसर्गकपदस्य तात्पर्य्यार्थस्य शब्द-वृत्त्यविषयत्वं दर्शयति आकाङ्क्षेति । अभिधानापर्य्यवसानम् आकाङ्क्षा अन्वया-

आकाङ्क्षासन्निधियोग्यतावशात् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्य्यार्थः विशेषवपुः अपदार्थः अपि वाक्यार्थः समुल्लसति इति अभिहितान्वयवादिनां मतम्, वाच्यः एव वाक्यार्थः इति अन्विताभिधानवादिनः ।

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।**

तत्र वाच्यस्य यथा

माए! घरोबअरणं अज्ज हु ण त्थित्ति साहिअं तुमए ।

---

ऽबाधः योग्यता अव्यवधानेन अन्वयप्रतियोग्युपस्थानं सन्निधिः एतत्त्रयवशात् पदार्थानां समन्वये बोद्धव्यः इति शेषः । समन्वयरूपः एव तात्पर्य्यार्थविशेषवपुः विलक्षणस्वरूपं समुल्लसति भासते इत्यर्थः । जात्यादिः जातिः एव इति । पदार्थाः वक्ष्यमाणाः इत्याह वक्ष्यमाणेति । तात्पर्य्यार्थस्य विलक्षणस्वरूपत्वं दर्शयति अपदार्थः इति । पदार्थात् अन्यः इत्यर्थः । तर्हि स कस्य अर्थः इत्यत आह वाक्यार्थः इति । शक्त्यविषयः अपि वाक्यप्रतिपाद्यः इत्यर्थः । संसर्गस्य इयं मर्य्यादा यदशक्यः अपि असौ वाक्यात् भासते इति । तस्य संसर्गमर्य्यादालभ्यत्वव्यवहारः । अभिहितेति । वृत्त्या पदैरुपस्थापितम् अभिहितं तेषाम् अन्वयः पश्चात् अवगम्यते इति वादिनः नैयायिकाः तेषाम् इत्यर्थः । केषुचित् इत्यनेन वृत्तिविषयात् पृथक् अर्थः न अस्ति इति मतभेदः सूचितः तम् आह वाच्यः एवेति । वाक्यार्थः संसर्गः वाच्यः एव पदवृत्तिविषयः एव न तु संसर्गमर्य्यादालभ्यः इत्यर्थः । घटपदम् इतरान्विते शक्तम् इति सामान्यतः शक्तिग्रहे सति घटमानय इत्यादिसमभिव्याहारवशात् इतरविशेषम् आदाय अन्वयबोधः इति तेषां मतम् अतः ते अन्विताभिधानवादिनः मीमांसकाः । ननुशब्दः अत्र व्यञ्जकः इत्यनेन शब्दस्य व्यञ्जकत्वम् उक्तम् ? तच्च न घटते वाच्यार्थं बोधयित्वा एव शब्दस्य विरतत्वात् अतः अर्थबोधनद्वारा एव शब्दस्य व्यञ्जकत्वं वक्तव्यम् । तच्च अर्थस्य अव्यञ्जकत्वे द्वारत्वानुपपत्त्या न घटते इत्यतः अर्थानाम् अपि व्यञ्जकत्वम् आह सर्वेषाम् इति । अर्थानाम् अपि इत्यपिकारान्वयः । घटम् आनय इत्यादौ अव्यञ्जकस्य शब्दस्य अर्थः अपि अव्यञ्जकः इत्यतः प्रायशः इति उक्तम् । तत्र वाच्यस्येति व्यञ्जकत्वमिति कारिकास्थे अन्वयः । एवम् उत्तरत्र अपि । माए इत्यादि ।

ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥

अत्र स्वैरविहारार्थिनी इति व्यज्यते ।

लक्ष्यस्य यथा

साहेन्ती सहि ! सुहअं खणे खणे दूणिआसि मज्झ कए ।
सब्भावसिणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वम् आचरितम् इति लक्ष्यं, तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् ।

---

मातर्गृहोपकरणमद्य हि नास्तीति साधितं त्वया ।
तद्भण किं करणीयमेवमेव न वासरः स्थायी ॥ इति संस्कृतम् ।

गृहोपकरणं गृहकर्म साधितं प्रतिपादितं एवम् एव अनिर्व्यापारः एव वासरः दिवसः न स्थायी न स्थास्यति । तथाच व्यापारमादिशेति व्यङ्ग्यं बहिर्व्यापारम् आदाय एव पर्य्यवस्यति इत्यतः आह अत्रेति । अत्र सर्वे एव अर्थाः अलक्ष्यत्वे न वाच्याः एव । साहेन्तीति ।

साधयन्ती सखि ! सुभगं चणे चणे दुनोषि मम कृते ।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥ इति संस्कृतम् ।

नायकं स्वयम् एव उपभुज्य क्लिष्टायातां दूतीं प्रति नायिकायाः सोल्लुण्ठा उक्तिः इयम् । सद्भावः क्लिष्टता स्नेहः वात्सल्यं तयोः करणीयस्य सदृशम् उचितं विरचितं कृतम् । अत्रेति प्रमाणान्तरात् अवगतापकारिणीं प्रति एतादृशोक्तिबाधात् इयं लक्षणा । ननु दर्शितः लक्ष्यार्थः कस्य पदस्य लक्षणया गम्यः ? तदितरपदार्थस्य तत्र अन्वयासम्भवात् । अत्र सुबुद्धिमिश्राः सद्भावस्नेहपदयोः असद्भावा स्नेहलक्षणा । एवं साधयन्ती इत्यत्र स्वरमणार्थं साधयन्ती इत्यर्थः । मम कृते इत्यत्रापि स्वस्य कृते इत्येव लक्ष्यार्थः । दर्शितार्थस्तु तन्मूलकव्यङ्ग्यः एव । अतः लक्ष्यम् इत्यत्र लक्षणामूलव्यङ्ग्यम् इत्येव अर्थः । न चैवं लक्ष्यार्थव्यङ्ग्योदाहरणं तत् एव पर्य्याप्तम् इति तेन च कामुकेत्यादि प्रदर्शनम् अफलम् इति वाच्यम् ? अप्रकृतोदाहरणतया तत्प्रदर्शनाभावे अपि व्यङ्ग्यस्य अपि व्यङ्ग्यम् अत्र अस्ति इति प्रसङ्गात् एव दर्शितत्वात् । तत् न, लक्ष्यार्थम् अदर्शयित्वा तन्मूलकव्यङ्ग्यार्थप्रदर्शनस्य स्वायत्ते शब्दप्रयोगे लक्षणामूलव्यङ्ग्यम् इति अनुक्त्वा लक्ष्यम् इत्युक्तौ तेन च इत्यादिप्रकृतानुपयोगिप्रदर्शनस्य च अनौचित्यात् । चक्रवर्त्ती

व्यङ्ग्यस्य यथा

उअ णिच्चल ! णिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्तिव्व ॥

अत्र निष्पन्दत्वेन आश्वस्तत्वं तेन च जनरहितत्वम्। अतः सङ्केतस्थानम् एतत् इति कयाचित् कञ्चित् प्रत्युच्यते। अथवा मिथ्या वदसि 'न त्वम् अत्र आगतः अभूः' इति व्यज्यते।

---

तु "मत्प्रियं रमयन्त्या" इति हेतुप्रदर्शनम् आक्षिप्य एवं कृतम्। आचरितमिति। विरचितपदवाच्यार्थः एव शत्रुत्वम् इत्येव सदृशपदलक्ष्यम्। तथाच मत्प्रिय रमयन्त्या त्वया आचरितं शत्रुत्वं लक्ष्यम् इति वृत्त्यर्थः इत्याह। तदपि न सद्भावस्नेहकरणीयशत्रुत्वम् इत्यन्वयासम्भवात् अचेतनस्य करणीयस्य शत्रुत्वभावात् सद्भावस्नेहयोः करणीयं शत्रुत्वम् इति समासस्य अपि असम्भवात् मित्रत्वस्य एव तयोः करणीयत्वात् न शत्रुत्वस्य। वयं तु सदृशपदे विसदृशलक्षणा। तत्र विसदृशत्वं लक्ष्यतावच्छेदकम् अपहाय लक्ष्यमात्रं विसदृशं विवृत्य दर्शितं मत्प्रियम् इत्यादि। तेन व्यङ्ग्यं दर्शयति तेन च इति। कामुकीत्यत्र एकशेषः। तथाच कामुककामुकीविषयेत्यर्थः। यद्यपि सापराधत्वरूपम् एव व्यङ्ग्यं दूतीविषयः न तत्प्रकाशनं तथापि तत्प्रकाशनपर्य्यन्तं सामाजिकबोधविषयः इति तत् एव प्रदर्शितम् उअ णिच्चलेति।

पश्य निश्चल ! निष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥ इति सं।

उपनायके सङ्केतस्थलं प्रदर्शयन्त्याः तत्र गत्वा नायिकाम् अनासाद्य प्रतिनिवृत्त्य आगतः अस्मि इति नायकोक्तेः मिथ्यात्वप्रदर्शिकायाः वा दूत्याः उक्तिः इयम्। उअ वितर्कय पश्य इत्यर्थः। निश्चल इति सम्बोधनं चलनस्पन्दाववयवावयविक्रियाद्वयं तद्रहितेति तु मिश्रः, निश्चला पृथिवी सा इव निष्पन्दा इति तु चक्रवर्त्ती तत् न। अचलापदस्य परिवृत्त्यक्षमत्वेन निश्चलापदस्य पृथिव्यवाचकत्वात् अन्यथा दोषोल्लासे निष्कम्पात् अस्य पृथिव्यवाचकत्वं ग्रन्थकृद्वक्ष्यमाणं न उपपद्येत। अत्र निष्पन्दत्वेन आश्वस्तत्वम् इति ग्रन्थकृदुक्त्यनुपपत्तेः। निश्चलानिष्पन्दत्वेन इत्येव तदुक्त्यौचित्यात्। शङ्खशुक्तिः शङ्खकपालम्। अत्रेत्यादि कञ्चित् प्रत्युच्यते प्रतिपाद्यते। प्रतिपादनं च वाच्यव्यङ्ग्यसाधारणं बोध्यम्। अतः सङ्केतस्थानम् इत्यत्र पक्षान्तरम् आह अथवा मिथ्येति। एषां स्वरूपं वक्ष्यते इत्युक्तत्वात्। इदानीं वाचकस्य लक्षणम् आह।

वाचकादीनां क्रमेण स्वरूपम् आह।

**साक्षात्सङ्केतितं योऽर्थ-**
**मभिधत्ते स वाचकः॥ ७॥**

---

साक्षादित्यादि। सङ्केतः पदपदार्थयोः सम्बन्धरूपा वृत्तिः साक्षात् सङ्केतितम् उपस्थित्यन्तराव्यवधानेन गृहीतस्वसङ्केतं यम् अर्थं यः प्रतिपादयति तस्य अर्थस्य सः वाचकः। यः अयम् अर्थं प्रतिपादयति इत्येतावन्मात्रकरणे व्यञ्जनया अशक्यार्थप्रतिपादके अपि तद्वाचकतापत्तिः स्यात् अतः सङ्केतितमिति, गृहीतस्वसङ्केतम् इत्यर्थः। सङ्केतः हि वृत्तिः व्यङ्ग्यार्थस्तु न तादृशः अगृहीतायाः एव व्यञ्जनायाः बोधकत्वात्। "गङ्गायां घोषः" इत्यादौ प्रवाहवाधीपस्थितेः व्यवधानेन एव तीरे लक्षणारूपसङ्केतग्रहात् न लाक्षणिकेति व्याप्तिः। न च सङ्केतः शक्तिः एव। तथाच सङ्केतितं गृहीतस्वशक्तिकं यम् अर्थं यः प्रतिपादयति इत्येतावता एव लाक्षणिकवारणे किं साक्षात् इत्यनेन इति वाच्यं स्यात्? वाचकः इत्याद्युक्तस्य शक्त्या प्रतिपादकस्य एव लक्षतावच्छेदकत्वलक्षणेन बुभुत्सितत्वात् अर्थे गृहीतस्वशक्तिकत्वप्रवेशे आत्माश्रयापत्तेः। अर्थनिष्ठगृहीतस्वशक्तिकत्वशब्दनिष्ठशक्तिकरणकप्रतिपादकत्वयोः एकवित्तिवेद्यत्वात्। न हि वाचकसंज्ञकत्वम् अत्र लक्षतावच्छेदकम् अनेन लक्षणेन ग्राह्यं येन गृहीतशक्तिकत्वप्रवेशेन न आत्माश्रयः स्यात्। अतएव यस्य यत्र शक्तिः सः तस्य वाचकः इत्यपि न कृतम्। अत एव च अभिधत्ते इत्यत्र प्रतिपादयति इत्येव अर्थः, न तु अभिधया प्रतिपादयति इति। तथात्वे अपि तद्दोषः तादवस्थ्यात् साक्षात् गृहीततीरपदसङ्केतस्य तीरस्य प्रतिपादके गङ्गापदे अतिव्याप्तिवारणाय गृहीतस्वसङ्केतत्वम् उक्तं साक्षादगृहीतस्वसङ्केतस्वार्थप्रतिपादकस्य शब्दस्य अन्यार्थस्य वाचकतावारणाय यः अयम् अर्थं स तस्येति यत्तत् प्रवेशः गृहीतत्वम् अप्रवेश्य साक्षात्स्वसङ्केतविषयमात्रप्रवेशे सङ्केते असाक्षात्त्वाभावात् साक्षादित्यस्य अनुपादेयत्वापत्तेः। तदनुपादाने च लाक्षणिकस्य अवारणम् एव स्यात्। गृहीतत्वप्रवेशे तु लाक्षणिकशब्दार्थे व्यवधानेन एव सङ्केतग्रहात् भवति एव। तद्वारणाय अत्र च स्वसङ्केतविषयम् अर्थं यः साक्षात् अभिधत्ते इतिना अन्वयः। अभिधत्ते इत्यस्य उक्तयुक्त्या प्रत्यायकत्वपरत्वेन स्वपरलाक्षणिकशब्दमात्रे एव अतिव्याप्त्यप्रापत्तेः लक्षणाग्रहानन्तरसाक्षात् एव प्रतिपादकत्वात् तेषाम्। न च शक्तिभ्रमात् अशक्यार्थप्रतिपादके शब्दे अतिव्याप्तिः इति वाच्यम्?

इहागृहीतसङ्केतस्य शब्दस्य अर्थप्रतीतेः अभावात् सङ्केत-सहायः एव शब्दः अर्थविशेषं प्रतिपादयति इति यस्य यत्र अव्यवधानेन सङ्केतः गृह्यते स तस्य वाचकः।

**सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा।**

यद्यपि अर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिः एव। तथापि आनन्त्यात् व्यभिचारात् च तत्र सङ्केतः कर्तुं न

---

सङ्केतप्रमायाः एव विवक्षितत्वात्। सङ्केतप्रमा अपि सङ्केतभ्रमानुपरक्ता बोध्या। अन्यथा शक्यार्थे यदि बोद्धुः शक्तिभ्रमः वक्तृतात्पर्य्यात्मकलक्षणरूपसङ्केतप्रमा च तत्र अतिव्याप्त्यापत्तेः। अपभ्रंशे तु शक्तिः अभ्युपगम्यते एव इति दिक्। ननु सङ्केतग्रहस्य कारणत्वे भवति एवं लक्षणार्थः तत्र एव किं प्रमाणम्? इत्यत्र आह इह गृहीतेति। इह संसारे सङ्केतसहायः गृहीतसङ्केतसहायः। सः च सङ्केतः बोध्यतया तात्पर्य्यरूपः उक्तः एव॥ तच्च तात्पर्य्यं शक्तपदे ईश्वरीयं लाक्षणिकपदे च वक्तुः इति बोध्यं, तद्वारणाय चासहायस्य यत्र अव्यवधानेन इति यत् तत् प्रवेश-प्रयोजनं च दर्शितम् एव। एवञ्च अन्वयव्यतिरेकः एव सङ्केतग्रहस्य कारणत्वे प्रमाणम्। ननु अव्यवहितव्यवधानेन सङ्केतग्रहः किं धर्मिणि, किं तदीयधर्मे वा, विशिष्टे वा? इत्यत्र आह।

सङ्केतित इति। साक्षात् गृहीतस्वसङ्केतः तेन वाच्यार्थस्य इव चतुर्विधत्वं कारिकार्थः। जातिक्रिया यदृच्छोपाधिरूपचतुर्भेदः इत्यर्थः। तदुक्तम् "शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः" इति। तत्र च द्रव्यपदं यदृच्छोपाधिपरम्। व्यक्तीभविष्यति च इदम् अग्रे महाभाष्यकारमतम् इदम्। "जातिरेव वा" इति मतान्तरम्। ननु अर्थस्य हानोपादानाय शब्देन अर्थः बोध्यते हानोपादानञ्च न जाति-क्रियादेः किन्तु व्यक्तेः एव इति? तद्बोधाय प्रयुज्यमानस्य शब्दस्य तत्र एव सङ्केत-ग्रहः उचितः इति अभिप्रायम् उद्भाव्य जात्यादिषु एव सङ्केतं द्रढयति यद्यपीति। अर्थः प्रयोजनं जलाहरणादि तदर्थं क्रिया घटादेः आनयनादि तत्कारितया तन्निर्वाहकतया व्यक्तिरेव इति अनन्तरं तत्र एव सङ्केतग्रहः वक्तुम् उचितः इति पूरणीयम्। तथापीति। आनन्त्यभावादिव्यक्तेः अनन्तत्वेन सङ्केतग्रहकाले सकल-तद्ग्रहासम्भवात् इत्यर्थः॥ ननु तदानीम् उपस्थितव्यक्तिषु एव सङ्केतः गृह्यताम्?

युज्यते इति। "गौः शुक्लश्चलः डित्थः" इत्यादीनां विषयविभागः न प्राप्नोति इति च तदुपाधौ एव सङ्केतः। उपाधिश्च द्विविधः वस्तुधर्मः वक्तृयदृच्छया सन्निवेशितश्च। वस्तुधर्मः अपि द्विविधः सिद्धः साध्यश्च। सिद्धः अपि द्विविधः पदार्थस्य प्राणप्रदः विशेषाधानहेतुश्च। तत्र आद्यः जातिः। उक्तं हि वाक्यपदीये "न

---

इत्यतः आह व्यभिचाराच्चेति। अगृहीतसङ्केतायाम् अपि गवादिव्यक्तौ गवादिपदात् बोधस्य सङ्केतग्रहरूपकारणव्यभिचारित्वात् इत्यर्थः। सङ्केतः कर्तुम् इति। सङ्केतग्रहीत्रा ग्रहीतुम् इति बहवः। तत् न, व्यभिचाराच्च इति असङ्गत्यापत्तेः। न हि बालकेन दृष्टव्यक्तौ सङ्केतग्रहे व्यभिचारग्रहः तद्विघटकः तत्काले तस्य व्यभिचारणभावकल्पने च क्व आनन्त्यं क्व वा व्यभिचारः? इत्यतः आह गौरित्यादि। ईदृशशब्दचतुष्टयस्य एकस्यां व्यक्तौ व्यक्तिग्रहे गोत्वादिप्रकारकत्ववैलचण्यं न स्यात् इत्यर्थः। न च यस्य यस्य येन येन प्रकारेण शक्तिग्रहः तेन तेन प्रकारेण एव ततः ततः शब्दात् एकस्याः एव गोव्यक्तेः उपस्थितौ विषयविभागोपपत्तिः स्यात् इति वाच्यम्? शक्तिग्रहस्य सप्रकारकत्वे प्रकारांशे शक्तिः आयाता इति विशिष्टशक्तिवादापत्त्या निष्प्रकारकस्य एव तदभिप्रेतत्वात् इदं दूषणम् इति भावात्। एवञ्च व्यभिचाराच्च इति उक्तदूषणम् अपि अनुद्धृतम् एव बोध्यं शक्तिग्रहकाले प्रकाराग्रहेण उक्तरीत्या तदुद्धारासम्भवात्। न प्राप्नोति इति न भवति इत्यर्थः। भवतेः प्राप्त्यर्थकवत् प्राप्तेः अपि भवत्यर्थकत्वात्। यद्वा न प्राप्नोति उपपत्तिम् इति शेषः। क्वचित् तु विषयविभागः अपि न स्यात् इति एव पाठः। तदुपाधौ एव इति। तस्य व्यक्तेः उपाधौ धर्मे सङ्केतः गृह्यते इति शेषः। तथाच गृहीतसङ्केतस्य उपाधिः अविनाभूतः आश्रयः शाब्दानुभवस्य एव विषयः न पदार्थस्मृतेः इति भावः। तदुक्तं "जातिशक्तं पदव्यक्तिम् अनुभावयति इति ईदृशः एव कार्य्यकारणभावः यद्धर्मशक्तात् पदात् तद्धर्म्यनुभवः" इति। एवञ्च "गौः शुक्लः" इत्यादौ समानविभक्तिकपदद्वयस्य पदार्थद्वयाभेदान्वयबोधकत्वम् इति न तन्मते व्युत्पत्तिः किन्तु पदार्थद्वयाश्रययोः एव अभेदान्वयबोधकत्वम् इति तन्मते व्युत्पत्तिः इति बोध्यम्। विभक्तिविभागेन उपाधिः जातिगुणक्रियायदृच्छोपाधिरूपतां दर्शयन् आह उपाधिश्चेति। वस्तुधर्मः वस्तुनः व्यक्तेः धर्मः वास्तवः धर्मः इत्यर्थः। तथा च जातिगुणक्रियारूपः इत्युक्तं भवति जातिवद्गुणानाम् अपि

हि गौः स्वरूपेण गौः, न अपि अगौः, गोत्वाभिसम्बन्धात् तु गौः इति। द्वितीयः गुणः, शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते। साध्यः पूर्वापरीभूतावयवः क्रियारूपः। डित्थादिशब्दानाम् अन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्ता यदृच्छया डित्थादिषु अर्थेषु उपाधित्वेन सन्निवेश्यते इति। सः अयं संज्ञा-

---

तैः नित्यत्वाङ्गीकारात्। तदुक्तम् "एकाः एव एव हि शुक्लारुणादिव्यक्तयः" इति। एवञ्च संयोगादयः अपि गुणा एव तैः नित्याः स्वीक्रियन्ते। आविर्भावतिरोभावौ एव उत्पत्तिविनाशौ इति तन्मतम्। साध्यः जन्यः। तथाच क्रियारूपः इत्युक्तं भवति। द्विविधं सिद्धं पुनर्विभजति सिद्धः अपि इति पदार्थस्येति। यद्यपि धर्मः एव सङ्केतितत्वात् पदार्थः तथापि पदाद्यनुभूयमानत्वात् व्यक्तिः अपि अत्र पदार्थः तस्य हानोपादानम् एव प्राणः तत्प्रदः तन्निर्वाहकः इत्यर्थः। एतेन जातिरूपः इत्युक्तं भवति। जातिः गुणभिन्नः अखण्डोपाधिरूपगोत्वेदन्त्वाभावत्वजातित्वाकाशत्वादिरूपः बोध्यः। गोत्वेदन्त्वादिरूपस्य तस्य वैशिष्ट्यग्रहं विना गोव्यक्तेः हानोपादानाभावात्। गोप्राणप्रदः गोत्वेदन्त्वादिः विशेषाधानं हानीयोपादानीयसामान्यस्य अवान्तरविशेषबुद्धिजननं तद्धेतुः इत्यर्थः। एतेन गुणरूपः इत्युक्तं भवति। प्राणप्रदस्य स्वरूपं दर्शयति आद्यः इति। जातिः अखण्डोपाधिः वाक्यपदीयं ग्रन्थविशेषः। तत्र गोत्वस्य इदन्त्वस्य वा गोहानोपादानहेतुत्वम् उक्तम् इत्यर्थः। तदुक्तिं दर्शयति गौः स्वरूपेणेति। स्वरूपेण गोत्वेदन्त्वनिरपेक्षनिर्विकल्पकविषयीभावेन न गौः न गोव्यवहारविषयः न अपि अगौः न अपि अश्वादिव्यवहारविषयः इत्यर्थः। प्रमाधीनगोव्यवहारः गोभ्रमाधीनाश्वव्यवहारः वा न निर्विकल्पकगृहीतगोव्यक्तौ किन्तु गोत्वेन इदन्त्वेन वा उपस्थितव्यक्तौ एव तादृशव्यवहारः इति आह गोत्वाभिसम्बन्धात् तु इति। अभिसम्बन्धात् ज्ञातात् इति शेषः। गोत्वविशिष्टज्ञानात् एव इत्यर्थः। एवं इदन्त्वाभिसम्बन्धात् तु गौः इति अपि बोध्यं शुक्लादेः तु न एवं प्राणप्रदत्वं शुक्लगुणाग्रहे अपि इदन्त्वगोत्वग्रहात् एवं शुक्लस्य व्यवहार्यत्वात् शुक्लत्वेन ग्रहः एव तदपेक्षणात्। न च गोत्वेन ग्रहः एव गोत्वस्य अपेक्षानाश्रयत्वेन ग्रहः इति वाच्यम्? आश्रयत्वेन ग्रहे अपि प्राणप्रदान्तरस्य इदन्त्वस्य अपेक्षणात् एव। इदन्त्वं च प्राणप्रदः एव न विशेषाधानहेतुः इति दिक्।

रूप: यदृच्छात्मक: इति। "गौ: शुक्लश्चलो डित्थ:" इत्यादौ "चतुष्टयी शब्दानां प्रवृत्ति:" इति महाभाष्यकार:। परमाण्वादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्। गुणक्रियायदृ-

---

विशेषाधानहेतो: स्वरूपं दर्शयति द्वितीय: इति। तस्य विशेषाधानहेतुत्वं ग्राहयति शुक्लादिना हि इति। लब्धसत्ताकं प्राणप्रदेन गोत्वादत्वादिना व्यवहार्यतां प्रापितं गवादिरूपं वस्तु शुक्लादिना विशिष्यते विलक्षणगवादित्वेन ज्ञायते इत्यर्थ:। साध्य: इति। पूर्वापरीभूत: अवयव: एकदेश: यस्या: पाकादिक्रियाया: तादृशक्रियारूप: इत्यर्थ:। स्पन्दमात्ररूपे कर्मणि सङ्केतग्रहोक्तौ पचिगम्यो: एकार्थतापत्ति: अत: पूर्वापरीति। तेन अधिश्रयणाद्यवतारणान्तस्पन्दधारा एव पचिक्रिया। तत्र एव पचधातो: सङ्केतग्रह: इत्यर्थ:। यदृच्छोपाधिम् आह डित्थादीति। डित्थादि शब्दानां स्वरूपम्। वक्ता यदृच्छया डित्थादिषु अर्थेषु पुत्रगवादिरूपेषु उपाधित्वेन सन्निवेश्यते इति अन्वय:। ननु आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावात् तन्मेलकार्थकं डित्थादिशब्दानां स्वरूपं वक्ता एव न ज्ञायते कथं तेन सन्निवेश्यताम्? इत्यत: आह अन्त्यबुद्धीति। पूर्वपूर्ववर्णानुभव-जन्यसंस्कारसचिवया अन्त्यवर्णबुद्धे: अनिर्ग्राह्यं समस्तेन ग्राह्यम् इत्यर्थ:। स्फोटरूपस्य पदस्य चरमवर्णानुभवेन ग्राहणस्य प्रागुक्तत्वात्। ननु चरमवर्णेन अपि क्रमिकवर्णग्रहक्रमेण ग्राहणे कथं पदस्वरूपग्रह:? इत्यत: आह संहृतेति। तेन एकदा एव ग्राहणात् क्रमसंहार: इत्यर्थ:। केचित्तु अन्त्यबुद्धिपदज्ञानानन्तरीणा बुद्धि: पदार्थस्मृतिरूपा डित्थादिसंज्ञाया: पदपदार्थोभयरूपत्वेन तथा डित्थादि-पदस्य एव विषयीकरणात् तादृशबुद्धिनिर्ग्राह्यम् इत्यर्थ:। गवादिपदार्थस्मृत्या तु गोत्वादि: एव विषयीक्रियते न गवादिपदं तत्र पदपदार्थयो: भेदात् इति वैलक्षण्यं तथा संहृतिक्रमं ईश्वराद्युत्तरोत्तरवक्तृप्रयुक्तत्वं रूपक्रमरहितं आधुनिकसंज्ञारूपत्वात् इति व्याचक्षते, तत् न, तत्कथनस्य प्रकृतानुपयोगित्वात्। स: संज्ञारूप: इति। तथाच डित्थादिसंज्ञासु अन्यवाच्या वाचिका च डित्थादिधर्मिणां तु आक्षेपेण एव बोध: इति नामविशिष्टनामि बोध:। यद्यपि समवायिसमवेतयो: एव अविनाभाव: स: एव आक्षेपहेतु: तथापि अविनाभाव: अपि असन् एव वक्त्रा यदृच्छया आरोपिता धर्म्याक्षेपहेतु: इति बोध्यम्। यदृच्छात्मक: इति। यदृच्छया आत्मा स्वरूपं यस्य तादृश: इत्यर्थ:। न तु यदृच्छया एव उपाधि:

च्छानां वस्तुतः एकरूपाणाम् अपि आश्रयभेदात् भेदः इव लक्ष्यते। यथा एकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्।

हिमपयःशङ्खाद्याश्रयेषु परमार्थतः भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्लः इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिः तत् शुक्लत्वादिसामान्यं, गुड़तण्डुलादिपाकादिषु एवम् एव पाकत्वादि।

---

संज्ञायाः एव उपाधित्वेन उक्तत्वात् प्रवृत्तिः प्रवृत्तिविषयपरमाणुशब्दवाच्यस्य परमाणुत्वोपाधेः किं गुणत्वं किं वा अखण्डोपाधित्वेन जातित्वम्? इति आकाङ्क्षायाम् आह परमाण्वादीनामिति। परमाणुत्वादीनाम् इत्यर्थः। गुणमध्येति अणु महत् दीर्घं ह्रस्वञ्चेति। परिमाणरूपगुणमध्ये पाठात् पारिभाषिकमिति। परिभाषणात् एव तस्य गुणत्वसिद्धिः न तु तत्र गुणत्वसाधकं प्रमाणम् अस्ति इति सूचितम्। ननु आनन्त्यात्व्यभिचाराच्च व्यक्तौ सङ्केतग्रहम् अयुक्ता उपाधिषु एव तद्ग्रहः उक्तः तथापि तौ एव आनन्त्यव्यभिचारौ गुणादीनां प्रतिव्यक्तिभिन्नत्वे न तथात्वात्? इत्यतः आह गुणक्रियेति। यदृच्छया इच्छानिवेशितः उपाधिः। न च एवं क्रियायाः अपि एकत्वेन आविर्भावतिरोभावौ एव तदुत्पत्तिविनाशौ इति; सिद्धः गुणः सिद्धः क्रिया साध्या इति विभागः कथम् उपपद्यताम् इति वाच्यम्? महाप्रलये आकाशपरमाण्वादिसंयोगादीनां स्थितिः न तु क्रियायाः महाप्रलये परमाणूनाम् अपि निष्क्रियत्वेन अनित्यत्वं इति, अनियत्वे रूपस्य तस्याः साध्यत्वस्य उक्तत्वात्। तैलाद्यालम्बनेति। आलम्बनम् आश्रयत्वेन ज्ञातं न तु आश्रयः एव खड्गादीनां वस्तुतः मुखाश्रयत्वाभावात्। जातिः एव वा इति मतिं व्याचष्टे।

हिमपय इति। आश्रयान्तो बहुव्रीहिः। अभिन्नाभिधानेति। अभिधानं शब्दः प्रत्ययः प्रत्यक्षं सामान्यम् इति। तथाच ततः एव सङ्केतग्रहः इति पूरणीयं पाकादित्वं पक्वत्वादि बालादि स्वरवैलक्षण्यात्। डित्थादिशब्दानाम् अनेकत्वं साधयित्वा तत्र एव डित्थत्वजातिं स्वीकृत्य तत्र एव सङ्केतग्रहः डित्थशब्दः डित्थरूपार्थयोः तु आक्षेपः इति हृदयेन आह बालवृद्धेति। ननु एवं परम्परया आश्रयस्य डित्थस्य आक्षेपात् सिद्धौ घटपदात् भूतलस्य कपालस्य च प्रतीत्यापत्तिः शुक्लपदात् पटादिप्रतीतेः लक्षणाधीनत्वेन तत्र अनुयोगाभावात्? इत्यतः आह प्रतिक्षणमिति। क्षणः अत्र बाल्ययौवनाद्यवस्थाकालः तत्र वृद्धिह्रासदर्शनेन

बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वादि अस्ति इति सर्वेषां शब्दानां जातिः एव प्रवृत्तिनिमित्तम् इति अन्ये।

"तद्वान्, अपोहो वा शब्दार्थः" कैश्चित् उक्तः इति ग्रन्थगौरवभयात् प्रकृतानुपयोगात् च न दर्शितम्।

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥८॥**

स: इति साक्षात्सङ्केतितः। अस्य इति शब्दस्य।

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽऽरोपिता क्रिया ९**

---

धर्मिभेदस्वीकारात्। क्षणभङ्गुरादौ तु क्षणरूपविशेषणाभेदात् भेदः। डित्थत्वादिजातेः अनेकव्यक्तिवृत्तित्वोपपादनाय व्यक्तिभेददर्शनं डित्थादित्वं डित्थत्वादि। इत्यत्र क्लिष्टशब्देन शब्दार्थवृत्तिजातिद्वयस्य तत्त्वेण कथनम्। नैयायिकमतम् आह तद्वानिति। प्रकारीभूतधर्मविशिष्टः इत्यर्थः। अपोहः अतद्व्यावृत्तिः बौद्धमतम् इदम्। न दर्शितं न साधकबाधकदर्शनेन प्रदर्शितम् इत्यर्थः।

मुख्यार्थबाधे इत्यादि। लक्षणालक्षणे नैयायिकमतोक्तमुख्यार्थस्य प्रवेशयिष्यमाणत्वात् तत्परिचयाय आह स मुख्यः इति। स नैयायिकमतोक्तः तद्वान्। यद्यपि तत्र मुख्यार्थपदं मुख्यतावच्छेदकेन प्रकारेण इत्यर्थकं भविष्यति तथापि मुख्यार्थज्ञानार्थम् इदम् उक्तं प्रकरणादिना नानार्थशब्दस्य एकार्थनियन्त्रणे सति तदीयद्वितीयार्थे मुख्ये अपि शाब्दी व्यञ्जना वक्ष्यते। तथा मुख्यार्थे अपि अजहत्स्वार्था उपादानलक्षणा वक्ष्यते तद्वारणाय व्यापारे मुख्यत्वम् उपात्तं, तच्च व्यापारान्तरबाधकं विना एव कल्प्यत्वं बोध्यम् लक्षणाव्यञ्जनयोस्तु शक्तिबाधेन एव कल्प्यत्वात् न मुख्यत्वम्।

लाक्षणिकशब्दलक्षणं कर्त्तुं लक्षणासामान्यलक्षणम् आह मुख्यार्थबाधे इति। यदिति यया इत्यर्थे अव्ययम्। तथाच मुख्यार्थबाधे तद्योगे च ज्ञाते सति रूढिज्ञानात् प्रयोजनज्ञानात् वा ज्ञातया यया वृत्त्या अन्यः अर्थः अर्थान्तरं लक्ष्यते

"कर्मणि कुशलः" इत्यादौ दर्भग्रहणाद्ययोगात् "गङ्गायां घोषः" इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासम्भवात् मुख्यार्थस्य बाधे । विवेचकत्वादौ सामीप्ये च सम्बन्धे । रूढ़ितः प्रसिद्धेः । तथा "गङ्गातटे घोषः" इत्यादेः प्रयोगात् येषां न तथा

---

प्रतिपाद्यते, सा वृत्तिः लक्षणा । सा च वक्तृतात्पर्य्यात्मिका एव । केचित् तु लक्ष्यार्थस्मारकं मुख्यार्थबाधतद्योगज्ञानम् एव लक्ष्यार्थस्मृतिः एव तु लक्षणा सा तु अनुभाविका एव न स्मारिका । तथाच लक्ष्यते इति । क्रियायाः विशेषणम् एव यत् इति या पदार्थस्मृतिः इत्यर्थः । तत् न लक्ष्यार्थस्मृतेः पदासम्बन्धलक्ष्यार्थविषयत्वेन पदपदार्थसम्बन्धरूपत्वाभावेन तस्याः पदनिष्ठत्वाभावे तद्भूः लाक्षणिकः शब्दः इति इति वक्ष्यमाणम् अनुपपन्नं स्यात् । किञ्च लक्ष्यार्थस्मृतेः अगृहीतायाः एव शाब्दबोधजनकत्वेन परम्परया अपि तद्ग्रहाभावात् तद्वारणाय साक्षात् सङ्केतितम् इति वाचकलक्षणे साक्षात्पदवैयर्थ्यापत्तेः । पदार्थोपस्थितित्वेन या कारणता तया एव शाब्दबोधोपपत्तौ लक्षणात्वेन पृथक्कारणताकल्पनानुपयोगाच्च । आरोपितपुरुषतात्पर्य्यात्मिकायाः तदबोधकशब्दे अपि तद्बोधकतया पुरुषेण आरोपितक्रियाबोधकतासम्बन्धरूपा वृत्तिः । "गङ्गायां घोषः" इत्यादौ मुख्यार्थस्य प्रवाहस्य प्रत्यक्षसिद्धत्वेन बाधाभावात् पदार्थान्तरस्य मुख्यार्थे अन्वयबाधः इत्यर्थः । तथापि "यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा" इत्यादौ आम्रत्वेन लाक्षणिकस्य द्वितीयमित्रपदस्य अर्थान्तरसंक्रमितवाच्यलक्षणायाम् अव्याप्तिः तच्छक्यार्थस्य पूर्वमित्रपदार्थे अभेदान्वयस्य अबाधितत्वात् अतः मुख्यार्थतावच्छेदकरूपेण अन्वयबोधानुपपत्तौ इत्यर्थः । तत्र तु पौनरुक्त्यस्य एव अनुपपत्तित्वात् न अव्याप्तिः । तथापि "छत्रिणः गच्छन्ति" "कुन्ताः प्रविशन्ति" इत्यादौ छत्रित्वेन कुन्तत्वेन च मुख्यतावच्छेदकेन रूपेण गमनप्रवेशयोः अन्वयस्य अनुपपत्त्यभावात् अव्याप्तिः । अतः तात्पर्य्यविषयीभूतान्वयस्य मुख्यतावच्छेदकेन रूपेण तात्पर्य्यवशात् एव तल्लाभात् इति वाच्यं तीरादौ घोषाद्यन्वयस्य तात्पर्य्यविषयस्य अनुपपत्त्यभावेन असम्भवापत्तेः । मुख्यतावच्छेदकेन तु प्रवाहत्वादिना तीरादौ अन्वयः अनुपपन्नः एव इति न असम्भवः । मुख्यार्थान्वयानुपपत्तिः ज्ञानमात्रानुलक्षणा किन्तु मुख्यार्थयोगज्ञानम् अपि अन्वयव्यतिरेकसिद्धम् अपेक्षणीयम् । अतः आह तद्योगे इति । तद्योगे अपि ज्ञाते इत्यर्थः ।

प्रतिपत्तिः। तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः

---

घटसंयुक्तपटानयनार्थं तात्पर्य्यसत्त्वे अपि पटानयनार्थं घटमानय इति न केनचित् विदग्धेन प्रयुज्यते। अतः रूढ़िप्रयोजनयोः एकतरज्ञानात् एव लक्षणया प्रयोगः इत्यतः अन्वयव्यतिरेकसिद्धं रूढ़िप्रयोजनयोः एकतरज्ञानम् अपि हेतुः इत्यतः आह रूढ़ितः इति। अथशब्दः वार्थः। रूढ़ितः प्रयोजनात् वा ज्ञातात् इत्यर्थः। अन्यः अर्थः इति। मुख्यार्थतावच्छेदकभिन्नरूपावच्छिन्नः इत्यर्थः। तेन "यस्य मित्राणि मित्राणि" इत्यादौ द्वितीयमित्रपदेन आश्वस्तत्वेन रूपेण मुख्यार्थस्य मित्रस्य एव लक्षणात् न अव्याप्तिः। रूढ़िहेतुकायाः प्रयोजनहेतुकायाश्च उदाहरणद्वयम् एकदा एव दर्शयन् लक्षणं व्याचष्टे कर्मणीति। कुशलसाध्ये कर्मणि इत्यर्थः। कुशं लाति इति व्युत्पत्त्या कुशलपदं कुशग्राहिणि शक्तम्। दक्षे तु रूढ़िलाक्षणिकं तदभिप्रायेण एतत् दर्शयति न च एवं गच्छति इति गौः इत्यर्थे गमेर्डोप्रत्यये गोशब्दसिद्धेः गच्छति इति गवि शक्तिः। "गौः शेते" इत्यादौ तु सुप्ते गवि लक्षणा स्यात् इति वाच्यं प्रायिकव्युत्पत्त्या एव उणादिप्रत्ययान्तप्रयोगाणां साधितत्वेन तत्र अवयवशक्तेः अग्राह्यत्वेन समुदायः एव गोत्वेन रूपेण शक्तिग्रहाङ्गीकारात्। अत एव पञ्चपादिकाख्यान् उणादिप्रत्ययान् सङ्क्षिप्य "उणादयो बहुलम्" इत्येकेन एव सूत्रेण लिखतः भगवतः पाणिनेः अपि अयम् अभिप्रायः इत्युक्तम्। शब्दचिन्तामणौ चिन्तामणिकारेण कुशलपदं तु नामधातुभ्याम् अवयवाभ्यां सिद्धम् इति तत्र अवयवशक्तिः ग्राह्या एव इति अभिप्रायः। वस्तुतस्तु वैयाकरणमतानुसारेण एव रूढ़िलक्षणोदाहरणम् इदम् उक्तं विचारतस्तु दक्षे शक्तिः अस्ति एव। अन्यथा मण्डं पिबति इति व्युत्पत्त्या कुण्डं लाति इति व्युत्पत्त्या च मण्डपपदकुण्डलपदयोः मण्डपातरि कुण्डग्राहके च एव शक्तिः स्यात्। गृहविशेषभूषणविशेषयोस्तु लक्षणा एव स्यात् इति। तथा च "मञ्चाः क्रोशन्ति" "कलिङ्गः साहसिकः" इत्यादिकम् एव रूढ़िलक्षणोदाहरणं मन्तव्यम्। दर्भग्रहणान्वयोगात् घोषाद्यधिकरणत्वासम्भवाच्च उभयत्र मुख्यार्थबाधः इति अन्वयः। सम्बन्धं दर्शयति विवेचकत्वादौ इति। साद्रकमूलत्वादिविवेचनात् विवेचकत्वं कुशग्राहिणः धर्मः दक्षस्य अपि भद्राभद्रविवेचनात् तद्वत्त्वम् अस्ति इत्येकधर्मवत्त्वं सम्बन्धः विविच्यमानभेदेन विवेचनाभेदेन च विवेचकत्वभेदे अपि एकशब्दवाच्यत्वात् एकोपाधिस्वीकारात् इदम् उक्तम्। गङ्गातटयोः सम्बन्धम् आह सामीप्ये च इति।

प्रयोजनात् च मुख्येन अमुख्यः अर्थः लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठः लक्षणा।

---

कुशलपदं लक्षणायाम् आह रूढ़ितः इति, प्रसिद्धेः इति। तद्वृत्तिः गङ्गापदं लक्षणायाम् आह तथा गङ्गेति, तथा प्रतिपादनात्मनः इति। तटगतत्वेन प्रतिपादनात्मनः इत्यर्थः। प्रयोजनात् ज्ञातात् इति शेषः। लक्ष्यार्थबोधद्वारा लक्षणायाः एव प्रयोजनात् ज्ञातात् इत्यर्थः। क्वचित् तु प्रतिपाद्यमाने पावनत्वादौ अपि प्रयोजनपदम् उपचारात् एव प्रयोक्ष्यते इति अवधेयम्। मुख्येन इति। बाधप्रतियोगितया उपस्थितेन मुख्येन सहकारिभूतेन सह अमुख्यः मुख्यतानवच्छेदकधर्मावच्छिन्नः लक्ष्यते। शब्देन एव इति शेषः। न च मुख्येन अर्थेन लक्ष्यते लक्षणया प्रत्याय्यते इत्येन अर्थः अस्तु। तथाच शब्दतदर्थयोः एव लक्षणाव्यासज्यवृत्तिः ग्रन्थकृदभिप्रेता इति वाच्यम्? अनेन शब्देन अयम् अर्थः बोध्यताम् इति वक्तृतात्पर्यात्मिकायाः लक्षणायाः मुख्यार्थाविषयत्वेन विषयतासम्बन्धेन तस्याः तदवृत्तित्वात्। मुख्यार्थयोगहेतुकत्वं लक्षणायाः यावद्भिः आलङ्कारिकैः शक्यसम्बन्धः लक्षणा इति नैयायिकोक्तायाः लक्षणायाः अनादरणेन वक्तृतात्पर्यस्य एव लक्षणात्वस्वीकारात्। शक्यप्रतियोगिकसम्बन्धस्य शक्यावृत्तित्वेन नैयायिकोक्तलक्षणायाः अपि मुख्यार्थावृत्तित्वाच्च। यदिति वृत्तौ अपि यत्पदं यया इत्यर्थे अव्ययम्। आरोपिता क्रिया इति व्याचष्टे स आरोपितः इति वृत्तित्वारोपवान् इत्यर्थः। वक्त्रा जनितः इति वा। तथाच अजन्यायाः शक्तितः व्यावृत्तिः सान्तरेति। स व्यवधानोपस्थितार्थः तटादिनिष्ठः इत्यर्थः। अत्र निष्ठापर्य्याप्तिबोधकता इति यावत् तटादिबोधकः इत्यर्थः। यद्वा अनेन शब्देन अयम् अर्थः बोध्यताम् इति वक्त्रिच्छारूपायाः लक्षणायाः बोध्यं तया अर्थविषयत्वात् तेन सम्बन्धेन अर्थनिष्ठः इत्यर्थः। इत्थं सामान्यतः लक्षणम् उक्त्वा तद्विशेषेषु वक्तव्येषु तद्विशेषद्वयम् आह स्वसिद्धये इति। उपादानं लक्षणञ्च इति। नामद्वयेन द्विधा उक्ता लक्षणा शुद्धा एव शुद्धपरिभाषिता एव न तु वक्ष्यमाणलक्षणाद्वयवत् सम्बन्धभेदवशात् शुद्धगौणोभयपरिभाषिता इति एवकारार्थः। मुख्यार्थः अपि उपादीयते अनया इति उपादानं करणयुड्न्तत्वात् नपुंसकलिङ्गम्। एवं मुख्यार्थानुपादानेन लक्ष्यते उपलक्ष्यते अनया इति लक्षणम्। अथ उपादानम् आह।

## स्वसिद्धये पराक्षेपः,
## परार्थं स्वसमर्पणम् ।

स्वसिद्धये इति । स्वं मुख्यार्थः तस्य सिद्धये तस्य अतात्पर्यविषयान्वयसिद्धये परस्य मुख्यतानवच्छेदकधर्मावच्छिन्नसाक्षेपप्रतिपादनं यया इति शेषः । सा लक्षणा उपादानं स्वार्थस्य कुन्तादेः प्रवेशान्वयसिद्धये तु न परस्य कुन्त्यादेः आक्षेपः किन्तु कुन्तित्वेन रूपेण तात्पर्यात् तत्सिद्धये एव इत्यतः तात्पर्येति उक्तम् । लक्षणलक्षणाम् आह परार्थः इति । परस्य स्वभिन्नतीरादिशब्दस्य अर्थे तीरादौ स्वसमर्पणं स्वार्थता-समर्पणं तीरादिः एव गङ्गादिशब्दार्थः भवति इत्यर्थः । स्वार्थस्तु घोषाद्यन्वये त्यज्यते इति पर्यवसितार्थः । अत्र उपादानलक्षणोदाहरणं दर्शयन् तां व्याचष्टे कुन्ता इति कुन्ता-दिभिरिति । तात्पर्यविषयीभूतान्वयबाधज्ञानविषयीभूतैः इति शेषः । तादृशैः तैः सह-कारिभिः सह कुन्तादिपदैः एव तत्संयोगिनः कुन्त्यादयः आक्षिप्यन्ते लक्ष्यन्ते इत्यर्थः । तदिति । तत् तस्मात् उपादानेन प्रवेशान्वये मुख्यार्थस्य कुन्तादेः उपादानेन अन्वयित्वप्रापणेन इयं लक्षणा इत्यर्थः । उपादानेनेति । भावयुङन्तम् अत्र बोध्यम् । इयम् अजहत्स्वार्थसंज्ञिका च बोध्या । ननु एवं धर्मशक्तस्य पदस्य धर्मिणि लक्षणया विशिष्टान्वयसिद्धौ जातिशक्तिवादे गोपदम् अपि गोत्वशक्तं गवि लाक्षणिकं स्यात् ? तथाच लौकिकप्रयोगात् वैदिकप्रयोगे अपि उपादान-लक्षणया एव सिध्यतु इति आशङ्क्य निषेधति गौः अनुबन्ध्यः इति । इदं विवाहे गवानुबन्धनविधिवाक्यम् । तत्र गोशब्देन गोलक्षणायां तन्मुख्यार्थस्य गोत्वस्य स्वान्वयबाधज्ञानद्वारा सोपयोगितां दर्शयन् लक्षणाम् उपपादयति श्रुतिदेशित-मिति मे इति । गोत्वजातेः प्राणित्वापचारेण औपचारिकी तस्याः भावना जात्या गोत्वरूपया मुख्यार्थेन सह आक्षिप्यते लक्षणया प्रतिपाद्यते । गोशब्देनेति शेषः । ननु व्यक्तौ अपि शक्तिः एव अस्तु । तथापि च गोशब्देन गोत्वम् उपस्थाप्य गौः अपि शक्त्या एव उपस्थाप्यताम् ? इत्याशङ्कां निरस्यति नतशब्देन इति ? विशेष्यं गोव्यक्तिं अभिधाय गोशब्दस्य शक्तिः न गच्छेत् न विषयी-करोति । तत्र हेतुम् आह क्षीणेति । विशेषणे गोत्वे उपस्थापिते क्षीणशक्तिः क्षीणसामर्थ्या इत्यर्थः । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् इति भावः । एकदा एव विशेष्यविशेषणोपस्थापनं तु विशिष्टशक्तिवादः एव न प्रकृतिविशेषणशक्तिवादे इति तन्नाशङ्कितम् इति अवधेयम् । इत्थं विशेष्ये शक्तौ निरस्तायाम् आशङ्कितः

उपादानं लक्षणञ्चे-
त्युक्ता शुद्धैव सा द्विधा ॥ १० ॥

"कुन्ताः प्रविशन्ति" "यष्टयः प्रविशन्ति" इत्यादौ कुन्तादिभिः आत्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषाः आक्षिप्यन्ते । तदुपादानेन इयं लक्षणा ।

"गौरनुबन्ध्यः" इत्यादौ श्रुतिसञ्चोदितम् अनुबन्धनं कथं मे स्यात् ? इति जात्या व्यक्तिः आक्षिप्यते नतुशब्देन उच्यते "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति न्यायात् इति उपादानलक्षणा तु न उदाहर्त्तव्या । न हि अत्र प्रयोजनम् अस्ति न वा रूढ़िः इयं व्यक्त्यविनाभावित्वात् तु जात्या व्यक्तिः आक्षिप्यते । यथा क्रियताम् इत्यत्र कर्त्ता, कुरु इत्यत्र

---

उपादानलक्षणा एव पर्य्यवसितार्थः तां निरस्यति इत्युपादानेति । इतिरीत्या उपादानलक्षणा तु अत्र न उदाहर्त्तव्या न वक्तव्या इत्यर्थः । तत्र हेतुम् आह न हि अत्रेति न वेति । ननु गोशब्दस्य गवि भूरिप्रयोगः प्रसिद्धः एव तत्कथमियं रूढ़िः ? इति । अत्र चक्रवर्त्ती आधुनिकदेवदत्तादिशब्दे रूढ़िः न अस्ति इत्यनेन दर्शितम् इति, तत् न, गोशब्दस्य गवि लक्षणायां रूढ़ेः खण्डितत्वात् । न वा रूढ़िः अत्र इत्येव लिखनौचित्याच्च । अत्र वयं न वा रूढ़िः इयम् इत्यनेन भूरिप्रयोगमात्रम् । न लक्षणाहेतुः रूढ़िः किन्तु लक्ष्यार्थविनिर्मुक्तशक्यार्थे प्रयुक्तस्य शब्दस्य लक्ष्यार्थे भूरिप्रयोगः एव रूढ़िः । यथा लक्ष्यार्थीभूतैः कलिङ्गदेशस्थमञ्चस्थपुरुषदक्षैः विनिर्मुक्तेषु देशमञ्चकुशशयाहिप्रयुक्तानां कलिङ्गमञ्चकुशशब्दानां कलिङ्गदेशस्थमञ्चस्थपुरुषदक्षेषु भूरिप्रयोगरूपा एव रूढ़िः लक्षणा हेतुः इति गोव्यक्तिविनिर्मुक्ते शक्यार्थे गोत्वे अप्रयुक्तस्य तु गोशब्दस्य गोव्यक्तौ भूरिप्रयोगः न रूढ़िः इति उक्तं न वा रूढ़िः इयम् इत्यनेन व्यक्तौ लक्षणायाः अभावे अपि तत्प्रतीत्युपायम् आह व्यक्त्यविनेति । जातिशक्तात् पदात् व्यक्त्यनुभावः जात्युपस्थापनद्वारा एव इति, जातिस्मृतेः अपि द्वारत्वेन कारणत्वबोधिका जात्या इति तृतीया । जातिशब्दः जातिस्मृत्यर्थः । आक्षिप्यते अनुभाव्यते इत्यम् उपात्त-

कर्म, प्रविश पिण्डम् इत्यादौ गृहं भक्षय इत्यादि च। पीनः देवदत्तः दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्तेः अर्थापत्तेः वा तस्य विषयत्वात्।

"गङ्गायां घोषः" इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थम् अर्पयति। इत्येवम् आदौ लक्षणेन एषा लक्षणा। उभयरूपा च इयं शुद्धा उपचारेण अमिश्रितत्वात्। अनयोः लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां गङ्गादि-

---

पदशक्त्यविषयस्य अपि व्यक्तेः। शब्दबोधविषयतामात्रे दृष्टान्तम् आह यथेति कर्त्तेति। कर्त्तुः उपात्तशब्दशक्त्यविषयस्य अपि अध्याहारात् एव बोधः कर्मणः तु आख्यातशक्तिविषयता एव इति भावः। कुरु इत्यत्रेति। अत्र कर्त्तुः वा ख्यातशक्तिविषयता एव अत्र कर्त्तृत्वकर्मत्वरूपेण सामान्यतः अध्याहारं दर्शयित्वा विशेषरूपेण अपि अध्याहारं दर्शयति प्रविशेति। "प्रविश गृहं" "पिण्डं भक्षय" इति अन्वयः। पिण्डं ग्रासम्। ननु एवम् उपात्तशक्त्यविषयस्य अपि शाब्दबोधविषयत्वे अर्थापत्त्युच्छेदः अर्थापत्तिलभ्यार्थस्य अपि शाब्दबोधविषयत्वेन एव तदुपपत्तेः इत्यतः आह। पीन इति। न लक्ष्यते न प्रतीयते शाब्दबोधोत्तरप्रतीति विषयत्वात् एव तस्य इति भावः। शाब्दी हि आकाङ्क्षा शब्देन एव प्रपूर्यते इत्यतः अर्थापत्तिलभ्यार्थस्य अपि अध्याहृतशब्देन बोधनम् इति मते श्रुतार्थापत्तिः, अतादृशमते तु अर्थापत्तिमात्रम् इत्यम् उपादानलक्षणां व्याख्याय लक्षणलक्षणां व्याचष्टे गङ्गायाम् इति। स्वार्थं स्वार्थताम् अर्पयति तीरशब्दार्थः इति शेषः। लक्षणेन स्वार्थोपलक्षणेन स्वार्थस्य अन्वये अप्रवेशात् लक्ष्यार्थबोधने स्वार्थस्य उपलक्षणत्वात् लक्षणेनेति भावयुङन्तम्। इत्युक्ता शुद्धा इत्यर्थः। लक्ष्यार्थे शक्यार्थाभेदारोपराहित्यम् एव शुद्धत्वम्। शुद्धत्वे हेतुम् आह उपचारेणेति। लक्ष्यार्थे शक्यार्थाभेदारोपरूपं प्रयोजनम् उपचारः तदमिश्रितत्वात् तत्प्रयोजनाभावात् इत्यर्थः। न हि कुन्तस्य कुन्तिनि प्रवाहस्य वा तीरे अभेदारोपः। प्रयोजनम् अत्र लक्षणात्वे वक्ष्यमाणसारोपासाध्यवसानयोस्तु सादृश्यहेतुकत्वे शक्यस्य लक्ष्यार्थे अभेदारोपः एव प्रयोजनम् इति वक्ष्यति। अत्र गौणभेदयोः भेदे अपि तादूप्यप्रतिपत्तिः प्रयोजनम् इत्यनेन। ननु अनयोः लक्षणाप्रभेदयोः ईदृशोपचाररूपप्रयोजनराहित्यात् न

शब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजन-सम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ "गङ्गातटे घोषः" इति मुख्यशब्दाभिधानात् लक्षणायाः कः भेदः ?

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा।**

---

सप्रयोजनकत्वज्ञानाधीनः लक्षणाधीनालक्ष्यार्थबोधः, किन्तु शक्यलक्ष्यसम्बन्ध-मात्रज्ञानाधीनः एव रूढ़िस्तु नास्ति एव। तथाच रूढ़िप्रयोजनशून्या नेयार्थ-लक्षणा एव इयम्। सा च न विदग्धैः प्रयुज्यते इति तदुत्पादनमफलम् इति भ्रान्तशङ्कायाम् आह अनयोरिति। अनयोः लक्षणाप्रभेदयोः इत्यर्थः। तटस्था लक्षणा शक्यार्थरूपोदासीनप्रत्यायकत्वात् ताटस्थ्यं लक्षणात्वम्। भेदरूपम् इत्यत्र च भेदः भेदमात्रम् अभेदातिरिक्तसम्बन्धमात्रम् इत्यर्थः। मात्रगर्भता च स्वयम् एव प्रकाशयिष्यते। तथाच अनयोः उक्तलक्षणाप्रभेदयोः ताटस्थ्यं लक्षणात्वम् अभेदातिरिक्तसम्बन्धमात्रात् रूपं स्वरूपं यस्य न तादृशम्। तथाच शक्यलक्ष्य-सम्बन्धज्ञानमात्रज्ञाप्यं न इत्यर्थः। किन्तु सप्रयोजनकत्वज्ञानेन अपि ज्ञाप्यते इति भावः। सप्रयोजनसत्त्वे एव सप्रयोजनकत्वज्ञानं भवति इत्यतः प्रयोजनं दर्शयति तटादीनामिति। प्रतिपादने इति सति सप्तमी। तथाच तटादीनां गङ्गादिशब्दप्रतिपादने आरब्धे सति तत्त्वप्रतिपत्तौ शब्दबोधे जनिते सति इत्यर्थः। प्रतिपिपादयिषितः प्रतिपादयितुम् इष्टस्य प्रयोजनस्य पावनत्वादेः सम्प्रत्ययः इत्यर्थः। अत्र प्रतिपत्तिरूपप्रयोजनसम्बन्धात् प्रतिपाद्यमानपावनत्वादौ अपि प्रयोजनपदं प्रयुक्तम् इति बोध्यम्। एवम् उत्तरत्र अपि भेदरूपम् इत्यत्र मात्र-गर्भतां प्रकाशयन् दर्शितभ्रान्ताशङ्कां निरस्यति गङ्गासम्बन्धमात्रेति। कः भेदः ? कः विशेषः। तल्लक्षणाचतुष्टयं विवक्षुः एकाम् आह।

सारोपेति। सारोपा लक्ष्यार्थे शक्यार्थभेदारोपपूर्विका। शक्यलक्ष्ययोः तुल्यविभक्तिनिर्देशवशेन प्रथमं तयोः अभेदे ज्ञाते ततः एव तद्बाधप्रतीत्या वक्तृ-तात्पर्य्यरूपा लक्षणा ज्ञानात् अन्या उक्तलक्षणाद्वयतः भिन्ना। तथाच कर्मणि कुशलः पुरुषः" इत्यत्र "कलिङ्गः साहसिकः" इत्यत्र "मञ्चाः पुरुषाः" इत्यत्र कुन्ता-स्सृष्टयश्च पुरुषाः इत्यत्र च शक्यलक्ष्ययोः तुल्यविभक्तिकत्वनिर्देशसत्त्वे सारोपा एव लक्षणा, न तु उपादानलक्षणारूपे लक्षणे इति हृदयम्। कुशलादिः मञ्चादिः

आरोप्यमाणः आरोपविषयश्च यत्र न अनपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा।

विषय्यन्तःकृतेऽन्यस्मिन्
सा स्यात् साध्यवसानिका ॥ ११ ॥

विषयिणा आरोप्यमाणेन अन्तःकृते निगीर्णे अन्यस्मिन् आरोपविषये सति सा साध्यवसाना स्यात्।

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ**

---

कुन्तादेश्च विशेष्यस्य पुरुषस्य अनुपादाने कलिङ्गः सदृशं करोति इति करणे च एव उपादानलक्षणलक्षणलक्षणे बोध्ये सारोपायुक्तलक्षणाद्वयस्य एव अवान्तरविशेषः इति तु दर्पणकारः। उक्तौ कथितौ तुल्यविभक्तिकतां विना लक्ष्यार्थ उक्तेः एव असम्भवात् तुल्यविभक्तिकतया उक्तौ इत्यर्थः विषयी शक्यार्थः आरोप्यमाणः विषयः लक्ष्यार्थः आरोपाधिकरणं व्याचष्टे आरोप्यमाणः इति, अनपह्नुतभेदौ इति। तुल्यविभक्तिकद्वयेन आपाततः एव भेदापह्नवः क्रियते। बाधप्रतिसन्धाने तु तदपह्नवः एव इत्यर्थः। अपह्नुतभेदौ इति पाठे तु आपाततः तदपह्नवम् आदाय व्याख्येयम्। सामानाधिकरण्यतुल्यविभक्तिकता।

सारोपायाः एव प्रभेदम् आह विषय्यन्तः कृते इति व्याचष्टे विषयिणा इति। आरोपविषये निगीर्णे सति इति अन्वयः। निगीर्णता च स्वशब्देन अनुपादानं विषयिविषयौ पूर्वव्याख्यातौ एव। उत्कटविषय्यारोपेच्छावशेन विषयस्य स्वशब्देन अनुपादानात् विषय्युपादानेन इव तत्कृतम् इति अध्यासात् निगरणे विषयिणः कारणता इति तद्बोधिका। विषयिणा इति तृतीया। स्वशब्देन अनुपादाने अपि न सर्वथा अनुपादानम्। तथात्वे समानविभक्तिकत्वासम्भवे न आरोपस्य एव अभावात् अतः सर्वनाम्ना उपादानं पर्यवस्यति इति बोध्यम्। तत् वक्ष्यति। गौः अयम् इत्यत्र इति अध्यवसानम् उत्कटः आरोपः स्वशब्देन उपादाने तु भेदकधर्मस्य वाहिकत्वादेः बोधात् आरोपे न उत्कटत्वं सम्बन्धविशेषज्ञानञ्च यत्ववशात् अनयोः द्विरूपत्वम् आह।

इमौ आरोपाध्यवसानरूपौ सादृश्यहेतू भेदौ । "गौर्वाहिकः" इत्यत्र "गौरयम्" इत्यत्र च ।

अत्र हि स्वार्थसहचारिणः गुणाः जाड्यमान्द्यादयः लक्ष्यमाणाः अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तम् उपयान्ति इति केचित् । स्वार्थसहचारिगुणाभेदेन परार्थगताः गुणाः एव लक्ष्यन्ते न तु परार्थः अभिधीयते इति अन्ये । साधा-

---

भेदौ इमौ इति आरोपाध्यवसानरूपौ इति आरोपाध्यवसानाख्यं रूपं परिचयः ययोः तौ सा आरोपाध्यवसानारूपौ इत्यर्थः । सादृश्यहेतू भेदौ इति गौणौ इति कारिकास्थे अन्वयः । यथासंख्यम् उदाहरणद्वयम् आह गौः वाहीकः इत्यत्र इत्यादि । अत्र गोपदस्य गोसदृशे लक्षणा । न च एवंरूपकोच्छेदः, मुखचन्द्रः इत्यत्र अपि चन्द्रपदे तत्सदृशत्वेन गौणसारोपा लक्षणा एव अस्तु इति वाच्यम् ? "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति रूपके नियमात् । यत्र मुख्यस्य वाहीकस्य वा अनुवाद्यस्य प्राङ्निर्देशः तत्र रूपकम् एव । यत्र तु विधेयस्य चन्द्रस्य गौर्वा प्राङ्निर्देशः तत्र गौणसारोपा इति विषयविभागात् वाहीकः अनवाहकः जाड्यमान्द्यरूपगोसादृश्यात् तत्र गोसदृशे लक्षणा । तथाच गोसादृश्यसम्बन्धः लक्ष्यतावच्छेदकश्च बोध्यम् । लक्षणीयस्तु सदृशत्वेन रूपेण वाहीकः एव । अत एव मतभेदम् आह अत्र हीति अत्र तु इत्यर्थः । उक्तं प्रति वक्ष्यमाणस्य हेतुत्वासम्भवात् । स्वार्थः गोत्वं तत्सहचारित्वसम्बन्धेन गोवाहीकोभयनिष्ठजाड्यमान्द्यादौ एव लक्षणा । ततश्च वाहीकव्यक्तिप्रतिपत्त्यर्थं लक्ष्यमाणेन तेन रूपेण वाहीकव्यक्तौ शक्तिग्रहः ततः जाड्यमान्द्यविशिष्टवाहीकप्रतीतिः इति तेषां मतं तदुक्तम् एतावता, न च शक्तिग्राहककोषाद्यभावात् कथं व्यक्तौ शक्तिग्रहः इति वाच्यम् ? धर्मलक्षणायाः एव धर्मिणि शक्तिग्राहकत्वस्य तैः अभ्युपगमात् । अत्र मते जातिशक्ता च पदात् व्यक्त्याक्षेपवत् धर्मलाक्षणिकात् पदात् धर्मिणः आक्षेपात् एव सिद्धौ अत्र शक्तिकल्पनागौरवं प्रतिव्यक्तिजाड्यमान्द्यव्यक्तिभेदेन लक्ष्यमाणस्य गोवृत्तिजाड्यमान्द्यस्य गोवाहीकवृत्तित्वाभावेन तस्य शक्यतावच्छेदकत्वानुपपत्तिश्च, दूषणं तद्द्वयं परिहरन्तां मतम् आह स्वार्थसहचारिगुणेति । अभेदः अत्र साजात्यं परार्थगता इत्यत्र गतत्वं सहचारित्वं वाहीकत्वस्य एव वाहीकपदार्थतया तैः उक्तत्वेन जाड्यमान्द्यादेः तत्सहचारित्वात् एव पूर्वमतोक्तां व्यक्तेः अभिधेयतां निरस्यति नतु इति ।

रणगुणाश्रयत्वेन परार्थः एव लक्ष्यते इति अपरे। उक्तं च अन्यत्र "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते। लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥" इति। अविनाभावः अत्र सम्बन्धमात्रं न तु न अन्तरीयकत्वम्। तथात्वे हि मञ्चाः क्रोशन्ति इत्यादौ न लक्षणा स्यात्। अविनाभावे च आक्षेपेण एव सिद्धेः लक्षणायाः न उपयोगः इति उक्तम्।

---

अत्र मते जाड्यमान्द्यस्य गोपदार्थत्वे तुल्यविभक्तिकत्ववशात् जाड्यमान्द्यवाहीकः इत्यन्वयबोधापत्तेः दूषणम् इति चक्रवर्त्ती। तत् न, गौः शुक्लः इति अत्र इव तुल्यविभक्तिकपदार्थाश्रययोः एव तैः अभेदान्वयबोधस्वीकारे तद्दोषस्पर्शाभावात्। वस्तुतस्तु एतन्मते यदि जाड्यमान्द्ये लक्ष्यतावच्छेदकेन रूपेण लक्षणा इति, स्वपक्षपातिनां मतम् आह साधारणेति। एकधर्मावच्छिन्नगुणाश्रयणात् इत्यर्थः। तेन जाड्यमान्द्यव्यक्तिभेदे अपि तस्य साधारणत्वम् उपपन्नं परार्थ इति। "तद्वानेव पदार्थः" इति नैयायिकमतावलम्बनेन जड़त्वमन्दत्वविशिष्टा जड़मन्दरूपपरपदार्थः इत्यर्थः। न परे अपरे इति व्युत्पत्त्या अपरे स्वपक्षपातिनः। एतावता प्रबन्धेन सादृश्यरूपात् शक्यसम्बन्धात् लक्षणायाः गौणीत्वेन उक्तेः शक्यसम्बन्धे सति एव इत्यर्थः। लक्षणा सा तु वक्तृतात्पर्य्यात्मिका एव न तु शक्यसम्बन्धरूपा। तद्योग इत्यनेन तस्य लक्षणातः पृथक्कथनात् शक्यसम्बन्धः सत्येव लक्षणेत्यत्र संवादप्रदर्शकम् इदम् अर्द्धं अत्र बहुव्रीहिणा लक्ष्यार्थप्रत्यायिका लक्षणा इत्युक्तम्, सा च तत्र एव तादृशी इति बोध्यम्। गृहीतस्यैव तात्पर्य्यस्य एव बोधकत्वात्। केचित्तु अभिधेया विना भूतम् अभिधेयस्य सम्बन्धः तस्य प्रतीतिः एव स्वरूपसती प्रत्यायिका लक्षणा इति व्याचक्षते। अन्ये तु अभिधेया विना भूतस्य अभिधेयसम्बन्धस्य लक्ष्यार्थस्य प्रतीतिस्मृतिः एव लक्षणा, सा च अज्ञाता एव शाब्दबोधस्य इव जनिका इति व्याचक्षते। तद्द्वयम् अपि न रुचिरं, तं तादृश्याः प्रतीतेः पदासम्बन्धलक्ष्यार्थविषयत्वेन पदाश्रयत्वाभावेन तन्मूलाक्षणिकः शब्दः इति अनुपपत्तेः। यदि च तदर्थं तत्पदतात्पर्य्यम् एव पदपदार्थसम्बन्धः इति लक्ष्यार्थः पदसम्बन्धः एव इति उच्यते तदा पदपदार्थसम्बन्धरूपत्वेन तस्य एव लक्षणारूपवृत्तित्वौचित्यात् शक्तिवत् सादृश्यसम्बन्धेन लक्षणाया गौणीत्वे तु संवादप्रदर्शकं परार्द्धम्। तत्र च गुणाः

"आयुर्घृतम्" आयुः एव इदम् इत्यादौ च सादृश्यात् अन्यत् कार्य्यकारणभावादि सम्बन्धान्तरम्। एवम् आदौ च—

कार्य्यकारणभावादिलक्षणपूर्वम् आरोपाध्यवसाने। अत्र गौणभेदयोः भेदे अपि ताद्रूप्यप्रतीतिः सर्वथा एव अभेदावगमश्च

---

शक्यधर्माः लक्ष्यमाणाश्च ते चेति द्वन्द्वः तैः परस्परं योगात् ज्ञातायाः वृत्तेः लक्षणायाः गौणता इष्टा इत्यर्थः। केचित्तु लक्ष्यमाणस्य शक्यगुणैः योगात् इति समर्थयन्ति तत् न, लक्ष्यमाणस्य इत्यस्य योगात् इत्यत्र अन्वयः गुणैः सह तु समासः इति व्युत्पत्तेः युक्तार्थत्वाभावे समासासम्भवात्। तदुक्तं "नाम्नां समासो युक्तार्थः" इति। न अन्तरीयकत्वं तदभावे तदभावरूपा व्याप्तिः। आक्षेपेण एव इति अनुमानिना एव इति बहवः। तत् न, जातिशक्तात् गवादिपदात् गोत्वोपस्थित्यव्यवहितम् एव गोव्यक्त्यनुभवात्। मध्ये अनुमानाव्याप्तिस्मरणादिस्वीकारासम्भवात्। तस्मात् आक्षेपात् जातिशक्तपदस्य व्यक्त्यनुभवकारकतारूपात् सामर्थ्यात् इत्यर्थः इत्युक्तम् इति उपादानलक्षणाप्रसङ्गेन गौः अनुबन्ध्य इत्यादौ सम्बन्धान्तरहेतुकत्वे शुद्धयोः अनयोः उदाहरणम् आह।

आयुरित्यादि। अत्र आयुःपदम् आयुर्जनके लाक्षणिकम्। यद्यपि उभयरूपा च इयं शुद्धा उपचारेण अमिश्रितत्वात् इत्युक्त्वा उपचारमिश्रणे शुद्धाभावः प्रत्येतुम् उचितः इत्यतः तुल्यविभक्तिकतया प्राथमिकोपचारमिश्रिता। आयुर्घृतमिति लक्षणा अपि न शुद्धा भवितुम् अर्हति। तथापि शुद्धेत्यत्र शुद्धा एव इत्यर्थेन केवलशुद्धत्वे उपचारामिश्रणस्य हेतुत्वप्राप्त्या उपचारमिश्रणे तथार्थस्य व्याहत्तिः प्रतीयते। शुद्धगौणीभयरूपस्य तु न व्याहत्तिः इति सारोपायाः सम्बन्धभेदेन उभयरूपत्वात् आयुर्घृतम् इति शुद्धा। आयुरिदम् इत्येव मैथिलपुस्तके पाठः सुष्ठुः। आयुरेवेति गौड़ीयपुस्तके पाठे तु प्राथमिकाभेदोपचारस्य उत्कटत्वसूचकः एव एवकारः। गौरयम् इत्यत्र तादृशपाठाभावात्तु न असौ समीचीनः। लक्षणपूर्वम् इति लक्षणं परिचयः तत्पूर्वं तस्य पूर्वं तुल्यविभक्तिकवशात् अभेदारोपाध्यवसाने इत्यर्थः। अध्यवसानम् उत्कटः आरोपः इत्युक्तम् एव। लक्षणापूर्वम् इति पाठे कार्य्यकारणभावादिना या लक्षणा तस्याः पूर्वम् इत्यर्थः। गौणसारोपासाध्यवसानयोः प्रयोजनम् आह अत्र गौणेति। भेदः प्रभेदः भेदे अपि गोसदृशलक्षणावशात् गोभेदप्रतीतौ अपि ताद्रूप्यप्रतीतिः आहार्य्यारोपरूपा गोबुद्धिः

प्रयोजनम्। शुद्धभेदयोः तु अन्यवैलक्षण्येन अव्यभिचारेण च कार्य्यकारित्वादि। क्वचित् तादर्थ्यात् उपचारः। यथा "इन्द्रार्थाः स्थूणाः" इन्द्रः क्वचित् स्वस्वामिभावात्। यथा राजकीयः पुरुषः राजा। क्वचित् अवयवावयविभावात्। यथा "अग्रहस्तः" इत्यत्र अग्रमात्रे अवयवे हस्तः। क्वचित् तात्कर्म्यात्। यथा "अतक्षा तक्षा"।

**लक्षणा तेन षड्विधा ॥ १२ ॥**

आद्यभेदाभ्यां सह। सा च।

---

प्रयोजनम् इत्यर्थः। सर्वथा एव आरोपे उत्कटत्वं दर्शितम्। तत्र चशब्देन वाहीकत्वादिभेदकर्मानुपस्थितिः बीजम्। शुद्धसारोपाध्यवसानयोः प्रयोजनं दर्शयति। शुद्धभेदयोस्त्वित्यादि कार्य्यकारित्वे अन्यवैलक्षण्यज्ञानेन अपि कारणान्तरसापेक्षत्वज्ञानम् अस्ति एव अव्यभिचारज्ञाने तु कारणान्तरसापेक्षत्वज्ञानम् अपि न अस्ति इति विशेषः। आयुःपदस्य आयुर्जनकः लक्षणवशात् एव कार्य्यकारित्वलाभः। तत्र अन्यवैलक्षण्यम् अव्यभिचारः प्रयोजनं बोध्यम्। सम्बन्धान्तरं पल्लवयति क्वचिदिति। उपचारः लक्षणाहेतुबाधप्रतियोग्यभेदस्यारोपस्थूणा स्तम्भः इन्द्रध्वज-संज्ञः। तत्र च इन्द्रस्थूणा इन्द्रः अयम् इति यथोक्तद्वैविध्यं बोध्यम्। इन्द्रवत् पूजनीयत्वं सर्वथा तथात्वं च प्रयोजनं बोध्यम्। एवम् उत्तरत्र रीतिः ऊह्या। अग्रहस्तः इत्यत्र तथा प्रयोगदर्शनात् एव समासेन निर्दिष्टम्। असमासे तु हस्तस्य अग्रं हस्तस्य इदम् इति द्वैरूप्यं बोध्यम्। अग्रहस्तः इत्यत्र अनुवाद्यस्य अग्रस्य प्राङ्निर्देशः अपि तादृश्या प्रतीत्या न रूपकम् अतः अत्र शुद्धसारोपा एव तादृश्यप्रतीतौ हि अनुवाद्यस्य प्राङ्निर्देशे शुद्धसारोपाबाधकं रूपकम् इति मन्तव्यम्। अतक्षा ब्राह्मणादिः। आद्यभेदाभ्यां सह इति शुद्धगौणभेदेन सप्रयोजनकत्वज्ञाने हेतुभूते सति। ननु प्रयोजनवती लक्षणा कथं व्यङ्ग्येन व्यञ्जनाव्यापारगम्येन सहिता? इत्यतः आह प्रयोजनं हि इति। गूढं यथा इति। सहृदयैकवेद्यं गूढम्। सुखम् इत्यादिवत् हर्षे इन्दुवदनायाः स्तनौ तरुणिम्नः तारुण्यस्य उद्गमः इङ्गितभावत्वात् उद्गतं तारुण्यम् इत्यर्थः। मोदते उत्कर्षभाक् भवति इत्यर्थः। तत्र ज्ञापकहेतून् आह सुखमित्यादि। विकसितं विस्फुटं स्मितं यत्र तत् तादृशं

**व्यङ्ग्येन रहिता रूढ़ौ सहिता तु प्रयोजने।**

प्रयोजनं हि व्यञ्जनव्यापारगम्यम् एव।

**तच्च गूढ़मगूढं वा**

तच्चेति व्यङ्ग्यम्। गूढ़ं यथा

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
वतेन्दुवदनातनौ तरुणिमोद्गमो मोदते॥

अगूढ़ं यथा

श्रीपरिचयाज्जड़ा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि॥

---

मुखं तथा वशितः स्वायत्तीकृतः वक्रिमा येन तत् तादृशं प्रेक्षितं तथा समुच्छलितः समुद्गतः विभ्रमः यत्र सा तादृशी गतिः शलगतौ तथा संस्था नियता एकविषयता सा अपास्ता यत्र सा तादृशी मतिः मुकुलितः मुकुलतुल्यः धर्मौ स्तनः यत्र तत् उरः तादृशम् अंशबन्धेन प्रत्यङ्गविभाग-प्राप्त्या यतः जघनम् उद्धुरम् उत्तुङ्गम् अङ्गविभागेन मध्यकार्श्यात् जघनस्य उत्तुङ्गस्य अपि उत्तुङ्गता। अत्र मोदस्य प्राणिधर्मत्वेन तारुण्ये तद्बाधे उत्कृष्टे लक्षणा स्वाश्रयप्रकर्षकत्वं शक्यमोदलक्ष्योत्कृष्टयोः स्वाश्रयाश्रयस्य इन्दुवदनायाः प्रकर्षः सहृदयैकवेद्यः व्यङ्ग्यः प्रयोजनम् इयम् अपि लक्षणलक्षणा अत्यन्ततिर-स्कृतवाच्यध्वनिः अयं श्लोकः। अगूढ़ं यथा इति। विदग्धाविदग्धवेद्यम् इत्यर्थः। श्रीपरिचयात् इति जड़ाः अपि जनाः विदग्धचरितानां अभिज्ञाः श्रीपरिचयात् लक्ष्मीसम्बन्धात् भवति इत्यर्थः। अत्र दृष्टान्तालङ्कारम् आह उपदिश-तीति। यौवनमदः एव कामिनीनां ललितानि उपदिशति ज्ञापयति इत्यर्थः। अत्र गुरूपदेशं विना अपि यथा ललितशिक्षा कामिनीनां तथा विदग्धचरितशिक्षा अपि जड़ानाम् इत्येवंरूपः दृष्टान्तालङ्कारः। अत्र परप्रवर्त्तकवागात्मनः उप-देशस्य चेतनगुरुधर्मत्वात् यौवनमदे अचेतने तद्बाधात् ज्ञापने लक्षणाज्ञापनस्य

अत्र उपदिशति इति ।

तद्देषा कथिता त्रिधा ॥ १३ ॥

अव्यङ्ग्या गूढ़व्यङ्ग्या अगूढ़व्यङ्ग्या च ।

तद्भूर्लाक्षणिकः

शब्दः इति सम्बध्यते । तद्भूः तदाश्रयः ।

तत्र व्यापारो व्यञ्जनात्मकः ।

कुतः ? इति आह

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ १४ ॥
फले शब्दैकगम्ये च व्यञ्जनान्नापरा क्रिया ।

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगः तत्र नान्यतः तत्प्रतिपत्तिः अपि तु तस्मात् एव शब्दात् न च अत्र व्यञ्जनात् ऋते अन्यः व्यापारः । तथाहि

---

ज्ञानोत्पत्त्यनुकूलव्यापारः, स च यौवनमदे ललितज्ञानप्राक्स्थितिरूपः एव । ज्ञेयविषयकप्रवर्त्तकत्वं तु शक्योपदेशलक्ष्यज्ञापनयोः सम्बन्धज्ञानजनने ज्ञातुः अनायासः शक्योपदेशधर्मः व्यङ्ग्यः प्रयोजनं वाच्यार्थवत् सर्वप्रतीयमानत्वात् अगूढः । परोपदेशेन ज्ञाने स्वप्रणिधानाधीनज्ञानापेक्षया अनायाससाध्यत्वस्य सर्ववेद्यत्वात् । अत्र अनायासशिक्षादानम् अभिधेयवत् स्फुटं प्रतीयते इति मूले एव क्वचित् पुस्तके पाठः । तत्र शिक्षादानं ज्ञानजननम् इयम् अपि लक्षणलक्षणा अगूढ़ाख्यगुणीभूतव्यङ्ग्यप्रभेदः इदं काव्यम् । गूढ़ागूढ़व्यङ्ग्या इत्यत्र व्यङ्ग्यपदस्य गूढ़ागूढ़योः द्वयोः अपि सम्बन्धः । सम्बध्यते इति शब्दः अत्र व्यञ्जकः त्रिधा इत्यर्थः । फले शब्दैकगम्ये इत्यत्र फलपदं फलीभूतज्ञानविषयपरम् इति प्राक् एव दर्शितम् । लक्षणया शब्दप्रयोगः इति समीचीनः पाठः । लक्षणाशब्देति पाठे तु लक्षणाश्रयशब्देत्यर्थः । तत्र न अन्यतः इति शब्दैकेत्यस्य व्याख्या व्यञ्जनात् ऋते इति व्यञ्जनात् न अपरेत्यस्य व्याख्यासमयाभावात् इत्यत्र समयः कोषादिभिः शक्तिग्रहणम् अतः न साध्याविशेषः । सङ्केतिताः कोषादिद्याहितसङ्केताः । मुख्यार्थेति मुख्यार्थे बाधः तद्योगः रूढ़िप्रयोजनयोः

**नाभिधा समयाभावात्**

"गङ्गायां घोषः" इत्यादौ ये पावनत्वादयः धर्माः तटादौ प्रतीयन्ते, न तत्र गङ्गादिशब्दाः सङ्केतिताः ।

**हेत्वभावान्न लक्षणा ॥ १५ ॥**

मुख्यार्थबाधादित्रयं हेतुः । तथाच

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।**
**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥**

यथा गङ्गाशब्दः स्रोतसि सबाधः इति तटं लक्षयति, तद्वत् यदि तटे अपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत्, न च तटं

---

एकतरस्य इति। एवं तत्र घोषान्वयार्थं प्रवाहबाधेन तटे लक्षिते पावनत्वादिषु लक्षणायां तटे घोषान्वयबाधे एव अपेक्षणीयः। तदबाधे तत्र एव घोषान्वयेनान्य-लक्षणानुपयोगात् इत्यतः तटान्वयबाधस्य एव मुख्यार्थबाधत्वेन वक्तव्यत्वं द्विधा। तदिदम् आह।

लक्ष्यम् इति। अर्थबाध एव लक्षणाहेतुः न तत्र मुख्यत्वप्रवेशः इत्युक्तौ अपि आह।

नाप्यत्र इति। बाधः घोषान्वयस्य इति शेषः। चक्रवर्त्ती तु तटे पावनत्वा-द्यन्वयस्य प्रतीयमानत्वात् तटादौ न पावनत्वाद्यन्वयबाधा इति व्याचष्टे तत् न, शक्यलक्ष्ययोः अन्वयबाधनस्य लक्षणाहेतुत्वाभावात्। किन्तु घोषाद्यपरपदार्था-न्वयबाधस्य एव फलेन पावनत्वादिना न योगः गङ्गाधर्मस्य तस्य तटे आरोप्यत्वेन अवान्तरत्वात् एव इत्यर्थः। ननु एवं गङ्गादिशब्दः पावनत्वान्यबोधकः एव स्वौक्रियतां वृत्त्यसम्भवात् इत्यत आह न च शब्द इति। स्वभावः न स्खलद्बोधकत्व-स्वभावः इत्यर्थः। अनुभवसिद्धतद्बोधकत्वात् व्याचष्टे यथा गङ्गा इति। तटे अपि सबाधः घोषान्वयबाधवान् इत्यर्थः। न अपि अत्र बाधा इति घोषान्वयस्य इत्यर्थः। लक्षणीयैः सम्बन्ध इति। गङ्गाधर्माणां तेषां तटे आरोप्यत्वात् एव अवान्तरत्वात् इति भावः। न च शब्दः स्खलद्गतिः इति व्याचष्टे न च गङ्गाशब्दः इति। तटं प्रतिपादयितुं यथा समर्थः तथा प्रयोजनं पावनत्वादिकं प्रतिपादयितुम्

मुख्यः अर्थः, न अपि अत्र बाधः, न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैः लक्षणीयैः सम्बन्धः, न अपि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्, न अपि गङ्गाशब्दः तटम् इव प्रयोजनं प्रतिपादयितुम् असमर्थः।

**एवमप्यनवस्था स्याद् या मूलक्षतिकारिणी।**

एवम् अपि प्रयोजनं चेत् लक्ष्यते तत्प्रयोजनान्तरेण तत् अपि प्रयोजनान्तरेण इति प्रकृताप्रतीतिकृत् अनवस्था भवेत्।

ननु पावनत्वादिधर्मयुक्तम् एव तटं लक्ष्यते गङ्गायाः तटे घोषः इत्यतः अधिकस्य अर्थस्य प्रतिपत्तिश्च प्रयोजनम् इति विशिष्टे लक्षणा तत् किं व्यञ्जनेन ? इति आह

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १७ ॥**

---

असमर्थः न इति। व्यतिरेकेण दृष्टान्तः अनुभवसिद्धः तत्प्रतिपादनसामान्यम् अस्खलितम् इव इत्यर्थः। तथाच लक्षणया तत्प्रतिपादकत्वासामर्थ्ये अपि व्यञ्जनया एव तत्प्रतिपादनसमन्वयः इत्यर्थः। प्रयोजनं प्रतिपादयितुं समर्थः इति पाठे तटम् इव लक्षणया इति शेषः इत्याहुः तत् न, तथार्थस्य स्खलद्गतित्वव्याख्यारूपत्वासम्भवेन तथा पाठस्य एव प्रामादिकत्वात्। ननु विवक्षितार्थान्वयानुपपत्तिः एव लक्षणाहेतुः विवक्षितार्थः। तीरे घोषः इति अन्वयानन्तरं तीरं पावनम् इति अन्वये पावनत्वादिः एव। अतः लक्षणां विना तदन्वयानुपपत्त्या आरोप्य तद्योगेन केन अपि प्रयोजनान्तरेण च पावनत्वादौ लक्षणा अस्तु इत्यतः आह।

एवमपीति। या मूलेति व्याचष्टे प्रकृतेति। प्रकृता तटलक्षणा उत्तरोत्तरप्रयोजनलक्षणा सापेक्षत्वात् तदप्रतीतिः। इत्थं क्रमशः लक्षणायां दूषितायां पावनत्वविशिष्टतटलक्षणा एव आस्ताम् इति आशङ्कते ननु इति कारिकया तत् निरस्यति।

प्रयोजनेनेति। प्रयोजनीभूतज्ञानविषयीकृतेन पावनत्वादिना सहितं तटादिकम् इत्यर्थः। तस्य लक्षणीयत्वायुक्तत्वोक्त्या च तत्र लक्षणायाः एव अयुक्तत्वम् उक्तम्। अयं भावः। लक्षणाप्रयोजनं तावत् तज्जन्यलक्ष्यार्थज्ञानभिन्नम् एव जन्यजनकयोः भेदनियमात् त्वया तु शब्दप्रयोगार्थाधिकार्थस्य लक्षणाविषयार्थस्य प्रति-

कुतः इति आह

ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।

प्रत्यक्षादेः नीलादिः विषयः फलं तु प्रकटता संवित्तिर्वा।

विशिष्टे लक्षणा नैवं

व्याख्यातम्।

विशेषाः स्युस्तु लक्षिते॥ १८॥

तटादौ ये विशेषाः पावनत्वादयः ते च अभिधातात्पर्य्यलक्षणाभ्यः व्यापारान्तरेण गम्याः। तच्च व्यञ्जनध्वननादिशब्दवाच्यम् अवश्यम् एषितव्यम्।

एवं लक्षणामूलं व्यञ्जकत्वम् उक्तम्। अभिधामूलं तु आह

---

पत्तिः एव प्रयोजनम् इत्युक्तं तत् च स्वविषयार्थप्रतिपत्तिरूपप्रयोजनवत्यां शक्तौ रूढ़िहेतुकलक्षणायाञ्च अविशिष्टमिति प्रयोजनवत्त्वस्याव्यावर्त्तकत्वम् एव उपपद्यते लक्षणाजन्यलक्ष्यार्थज्ञानस्य प्रयोजनं लक्ष्यार्थज्ञानम् एव इति च पर्य्यवसितं स्यात्। तच्च न युज्यते फलफलिनोः अभेदस्य अदृष्टचरत्वम्। तत्र हेतुम् आह ज्ञानस्येति। हिशब्दः अत्र इवार्थे अव्ययत्वात्। तथाच ज्ञानस्य विषयः यथा ज्ञानात् अन्यः तथा फलम् अपि तदन्यत् एव उदाहृतं उदाहरणेषु दृष्टम् इत्यर्थः मत्ततज्ज्ञानम् एव तज्ज्ञानफलम् इति भावः। तत् एव दर्शयति प्रत्यक्षादेर्हीति। प्रकटता ज्ञातता संवित्तिः अनुव्यवसायः तौ यथा नीलादिप्रत्यक्षात् भिन्नौ इत्यर्थः। हिशब्दस्तु न हेतौ विषयान्यत्वस्य फलान्यत्वाप्रयोजकत्वात् ज्ञानविषययोर्भेदे अपि ज्ञानतत्फलयोः अभेदसम्भवात्। ज्ञानस्येति च प्रकृताभिप्रायेण एव स्वफलस्ययोः भेदस्य समस्तपदार्थस्य साधारणत्वात्। चक्रवर्त्ती तु प्रयोजनेन सहितम् इत्यादिना पावनत्वविशिष्टलक्षणायाः अयुक्तत्वम् उक्त्वा तत्र हेतुमाह ज्ञानस्येति। त्वया पावनत्वविशिष्टलक्षणायाः पावनत्वं लक्षणाजन्यज्ञानविषय उक्तः। फलपदस्याच फलीभूतज्ञानविषयपरत्वेन फलीभूतज्ञानविषयरूपं फलम् अपि पावनत्वम् एव उक्तम्। तच्च ज्ञानविषयतत्फलयोः एकत्वम् अदृष्टम् इत्याह।

ज्ञानस्येति। यतः ज्ञानविषयतत्फलीभूतज्ञानविषयौ परस्परभिन्नौ इत्यर्थः। ननु फलपदस्य अत्र फलीभूतज्ञानविषयपरतया व्याख्याने प्रकटतासंवित्त्योः विषया-

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥१९॥

संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इति उक्तदिशा

सशङ्खचक्रः हरिः अशङ्खचक्रः हरिः इति उच्यते। "रामलक्ष्मणौ" इति दाशरथौ। "रामार्जुनगतिस्तयोः" इति भार्गव-

---

न्यत्वदर्शनानुपपत्तेः तयोः अज्ञेयत्वेन फलीभूतज्ञानविषयत्वाभात् फलीभूतज्ञानालीकत्वात् च प्रतिपत्तिप्रयोजनम् इति आशङ्कया फलपदस्य ज्ञानपरत्वात् च। विशेषाः स्युः इति अर्थे लक्षिते सति अर्थान्तररूपविशेषाः व्यापारान्तरेण एव गम्याः स्युः इति पूरणात् व्याख्येयम्। ते च विशेषाः क्वचित् लक्ष्यार्थतीरादिषु आरोप्यमाणाः एव पावनत्वादयः। क्वचित्तु लक्ष्यार्थस्थितविस्तारादिवृत्तयः मनोहरत्वादयः। क्वचित् तु अन्यवृत्तयः अपि इति बोध्यम्। व्याचष्टे तटादौ इति तत्रेति व्यापारान्तरम् इत्यर्थः। ध्वननादीति आदिना प्रत्यायनाञ्जनव्यक्त्यादिशब्दपरिग्रहः।

अनेकार्थस्य इति। संयोगाद्यैः वाचकत्वे नियन्त्रिते इति अन्वयः। नियन्त्रणं च एकार्थकस्य अपरार्थबोधनम्। अवाच्यार्थ इति वस्तुतः वाच्यत्वे अपि अवाच्यतापन्नार्थेत्यर्थः। अञ्जनं व्यञ्जनम् अत्र पदस्य इति अनुपादाय शब्दस्य इति उपादानं तिग्मरुचिरप्रताप इत्यादि सभङ्गश्लेषरूपवाक्यस्य इन्द्रशत्रुः इत्यादि समासभेदादीनानेकार्थसमासवाक्यस्य च परिग्रहाय इति तत्तदुदाहरणावसरे अवधेयम्।

ग्रन्थान्तरोक्तान् एव संयोगादीन् दर्शयति संयोग इति। संयोगविप्रयोगौ पदार्थान्तरस्य सम्बन्धतद्ध्वंसौ साहचर्य्यं विरोधित्वे अपि पदार्थान्तरस्य अर्थः निर्दिष्टक्रियायाः प्रयोजनं लिङ्गं निर्दिष्टधर्म शब्दस्य समानविभक्तिकस्य सामर्थ्यं निर्दिष्टविशेषेण जनेन औचिती उचितत्वं तात्पर्य्यनिर्वाहकता व्यक्तिः शब्दस्य पुंनपुंसकादि लिङ्गम् अनवच्छेदे अनेकत्वे। एषां पदार्थविशेषस्मृतिं प्रति एव हेतुता इति मीमांसकानुसारिणाम् आलङ्कारिकाणां मते तदाह विशेषस्मृतिहेतव इति। नैयायिकमते

कार्त्तवीर्य्ययोः । "स्थाणुं भज भवच्छिदे" इति हरे । "सर्वं जानाति देवः" इति युष्मदर्थे । "कुपितो मकरध्वजः" इति कामे । "देवस्य पुरारातेः" इति शम्भौ । "मधुना मत्तः कोकिलः" इति वसन्ते । "पातु वो दयितामुखम्" इति सांमुख्ये । "भात्यत्र परमेश्वरः" इति राजधानीरूपात् देशाद्राजनि । "चित्रभानुर्विभाति" इति दिने रवौ रात्रौ वह्नौ । "मित्रं भाति" इति सुहृदि । "मित्रो भाति" इति रवौ । इन्द्रशत्रुः" इत्यादौ वेदे इव काव्ये न स्वरः विशेषप्रतीतिकृत् । आदि-ग्रहणात् ।

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं ॥

---

तु अनेकार्थपदात् समस्तार्थस्मृतिः एव अन्वयबोधे तु एभिः तात्पर्य्यबोधिते तेन नियन्त्रणम् इति । इत्युक्तदिशा इति । इति अपरग्रन्थोक्तरीत्या दर्शयिष्यमाणोदाहरणेषु वाचकत्वनियामकाः संयोगादयः इत्यर्थः । "अशङ्खचक्रः" इत्यत्र त्यागार्थे नञ् अच्युते अर्थे हरिपदस्य नियमनम् इत्यर्थः । एवम् उत्तरत्र बोध्यम् । उदाहरणानि च यथासख्यं बोध्यानि । परन्तु उक्तानां स्फूर्त्तिक्रमेण एव नियन्त्रकता । अत एकत्र एव अनेकसङ्करे अपि अदोषः । युष्मदर्थे इति । यद्यपि युष्मत्पदार्थे देवपदं न शक्तं तथापि प्राकरणिकस्य राज्ञः एव युष्मत्पदार्थत्वात् राज्ञि इत्यर्थः । कुपित इति । मकरध्वजपदार्थस्य कन्दर्पस्य कोपः लिङ्गं न च मकरध्वजपदार्थस्य समुद्ररूपदेवस्य अपि कोपः लिङ्गम् एव तत्पदार्थस्य जलाशयविशेषस्य निधुवने कायावान् लिङ्गम् इति उभयत्र समानम् इति वाच्यम् ? विरहिण्यां कुपितः इत्यर्थात् एव पीतवणिजि कुपितः इत्यत्र समुद्र एव नियमनं बोध्यं दयितामुखम् इत्यत्र मुखे अपि अन्वयः सम्भवति एव तात्पर्य्यन्तु साम्मुख्ये एवेति भवत्यौचिती । एद्दहेति ।

एतावन्मात्रस्तनिका एतावन्मात्रैरक्षिपत्रैः ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥ इति संस्कृतम् ।

बालिकायाः पश्चाज्जातावस्थाप्रदर्शकाभिनयार्थकम् इदं वाच्यम्, प्रोषिते पत्यौ

इत्यादौ अभिनयादयः। इत्थं संयोगादिभिः अर्थान्तराभिधायकत्वे निवारिते अपि अनेकार्थस्य शब्दस्य यत् क्वचित् अर्थान्तरप्रतिपादनं तत्र न अभिधा नियमनात् तस्याः। न च लक्षणा मुख्यार्थबाधाद्यभावात् अपि तु अञ्जनं व्यञ्जनम् एव व्यापारः। यथा—

---

स्तनप्रदर्शने दाड़िमबिल्वाद्याकारकः हस्ताभिनयः एतावत्पदार्थः, अक्षिपत्रं विशिष्टेत्यर्थः। अत्र पद्मदलाकारः हस्ताभिनयः एतावत्पदार्थः, अवस्थाप्रदर्शने मध्यक्षीणत्वनितम्बस्थूलत्वादिप्रदर्शकः हस्ताभिनयः एतावत्पदार्थः, दिवसप्रदर्शने अङ्गुलगणनाप्रदर्शकः हस्ताभिनयः एतावत्पदार्थः, एभिः अभिनयैः एतावत्पदस्य अर्थान्तरबोधप्रतिबन्धः। न च एतावत्पदं पुरोवर्त्तित्वेन एकेन एव रूपेण बोधकत्वात् कथम् अनेकार्थम् अनेकव्यक्तिः बोधकत्वेन तथात्वे तु घटपदस्य अपि तथात्वापत्तिः इति वाच्यम्? पुरोवर्त्तित्वस्य एकस्य अभावात् तेन रूपेण बोधस्य अननुभवाच्च। वस्तुतः पुरोवर्त्तिन्यो या या व्यक्तयस्तत्वेन तत्वेनैव तस्य बोधकत्वात् अनेकार्थतानपायात् अभिनयादयः इत्यादिपदात् अभिनयविरहः अपि क्वचित् नियन्त्रकः इति दर्शितम्। यथा "प्रियेण पृच्छमानाया निस्पन्दत्वं तदुत्तरम्" इति अत्र परकालप्रत्युत्तरीभयार्थकस्य उत्तरपदस्य प्रत्युत्तरे अर्थे नियन्त्रकः स्पन्दाभावः। चक्रवर्त्ती तु "इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्" इति। अत्र चेष्टापरिग्राहकम् आदिपदम् इति आह, तत् न, चेष्टायाः अभिनयत्वात् एव। यत् क्वचिदिति। समभिव्याहारविशेषात् अनुभवसाक्षिके स्थले इत्यर्थः। केचित्तु अर्थान्तरप्रतिपादनतात्पर्य्यके स्थले इत्याहुः, तत् न, "सरेऽती भुङ्क्ष्व विप्रेदं सुरामोदकरोदनम्" इति सुहृदः वाक्यात् इतः सरे सुराणाम् आमोदकरम् ओदनं भुङ्क्ष्वेत्ययमर्थकादतात्पर्य्यविषयस्य वेतः सङ्कृते मदिरागन्धकरम् ओदनं भुङ्क्ष्वेत्यर्थस्य अपि बोधात्। नियमनादिति प्रतिरुद्धत्वात् इत्यर्थः। अप्रतिबोधे प्रथमम् एव तद्बोधापत्तेः इति भावः। न च प्रथमार्थबोधः द्वितीयार्थबोधे प्रथमम् अप्रतीतार्थबोधे उत्तेजकः अङ्गीक्रियताम् इति वाच्यम्? निष्कम्पप्रवर्त्तकात् शक्तिजन्यबोधात् तथा अप्रवर्त्तकस्य व्यञ्जनाधीनबोधस्य वैलक्षण्यानुभवेन तत्र व्यञ्जनया एव बोधस्वीकारावश्यकत्वेन उत्तेजकत्वासम्भवात्।

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्॥

**तद्युक्तो व्यञ्जकः शब्दः**

तद्युक्तो व्यञ्जनाव्यापारयुक्तः।

**यत्सोऽर्थान्तरयुक् तथा।**

**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः॥२०॥**

तथेति व्यञ्जकः।

इति श्रीकाव्यप्रकाशे शब्दनिर्णयः नाम द्वितीयः उल्लासः।

---

भद्रात्मन इति। यस्य राज्ञः करः हस्तः दानाम्बूनां वितरणजलानां सेकेन सततं सुभगः अभूत्। कीदृशस्य भद्रात्मनः, मङ्गलस्वरूपस्य दुरधिरोहा परैः अधृष्या तनुः यस्य तादृशस्य विशाले महति वंशे कुले उन्नतिः उत्पत्तिः यस्य तादृशस्य तथाकृतः शिलीमुखानां बाणानां संग्रहः सम्यक् मन्त्रपूर्वकं ग्रहणं येन तादृशस्य तथा अनुपप्लुता उपद्रवरहिता गतिः अवस्था यस्य तादृशस्य तथा परेषां शत्रूणां वारणस्य निवारणस्य। प्रकरणात् इत्थं राजनि अवगते व्यञ्जनया हस्तिरूपः अपि अर्थः प्रतीयते। यथा परवारणस्य प्रकृष्टहस्तिनः यस्य करः शुण्डादानाम्बुनः मदजलस्य सेकेन सततं सुभगः अभूत् इति। अत्र पक्षे वारणः गजजातिविशेषः विशालवंशः उच्चवंशः तद्वदुन्नतिः उच्चता यस्य अत एव दुरधिरोहतनोः शिलीमुखाः मदजललुब्धभ्रमराः अनुपप्लुता गभीरा हस्तिप्रतीतौ स इव राजा इति उपमापि प्रतीयते इति उपमाध्वनिः इयं शब्दशक्तिमूला॥०॥

इति द्वितीयः उल्लासः॥२॥

---

## तृतीय: उल्लास: ।



अर्था: प्रोक्ता: पुरा तेषाम्

अर्था: वाच्यलक्ष्यव्यङ्ग्या: । तेषां वाचकलाक्षणिकव्यञ्जकानाम् ।

अर्थव्यञ्जकतोच्यते ।

कीदृशी ? इति आह

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधे: ॥२१॥
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥२२॥

बोद्धव्य: प्रतिपाद्य: । काकु: ध्वने: विकार: । प्रस्ताव: प्रकरणम् । अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मन: । क्रमेण उदाहरणानि ।

अइ पिउलं जलकुम्भं घेत्तूण समागदह्मि सहि ! तुरिअं ।
समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥

---

अर्थव्यञ्जकतोच्यते इति । सर्वेषां प्रायश: अर्थानाम् इत्यादिना अर्थानां व्यञ्जकता उक्ता एव अत: अत्र यै: सहायै: व्यञ्जकता तद्विशिष्टा सा उच्यते इत्यर्थ: । कीदृशी इति । कीदृशी तद्विशिष्टा इत्यर्थ: । वक्त्रित्यादि । कालादिपर्य्यन्तानां वैशिष्ट्यात् वैलक्षण्यात् प्रतिभाजुषाम् अन्यार्थधीहेतु: य: अर्थस्य व्यापार: सा व्यक्ति: व्यञ्जना एव इत्यर्थ: । वाक्यवाच्यान्यसन्निधेरित्यत्र समाहारद्वन्द्वे अपि नपुंसककार्य्याभाव: विरामभञ्जनादौ इति सूत्रनिर्देशसामर्थ्यात् अवसेय: । प्रतिपाद्य इति । उत्पादनीयप्रतिपत्तिको जन: इत्यर्थ: । न तु प्रतिपादनीयार्थ: । क्रमेणेति । वक्तृबोद्धव्यादिक्रमेण इत्यर्थ: । न तु वाच्यादिक्रमेण वाच्यार्थस्य एव अत्र व्यञ्जकत्वस्य दर्शयिष्यमाणत्वात् । अइ पिउलमित्यादि ।

अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि हे सखि ! त्वरितम् ।

अत्र चौर्य्यरतगोपनं गम्यते।

ओग्गिद्दं दोब्बल्लं चिन्ताअलसत्तणं सणीससिअं।
मह मन्दभाइणीए केरं सहि! तुहवि अहह! परिहवइ॥

अत्र दूत्याः तत्कामुकोपभोगः व्यज्यते।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्याऽपि कुरुषु॥

---

श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम्॥ इति संस्कृतम्। जलाहरणवर्त्मनि उपनायकसम्भुक्तायाः तच्चिह्नसंवरणाय सख्याम् उक्तिः इयम्। श्रमाद्यौ स्वेदसलिलनिःश्वासौ ताभ्यां निःसहा दुर्बला अपृष्टा प्राकरणिककथनात् अत्र वक्तृवैलक्षण्यम्। बोद्धव्यवैलक्षण्ये आह ओग्गिद्दमिति।

औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम्।

मम मन्दभागिन्याः कृते सखि! त्वामपि अहह परिभवति॥ इति संस्कृतम्।

नायकोपभुक्तां दूतीं प्रति नायिकायाः सोल्लुण्ठोक्तिः इयम्। मम मन्दभागिन्याः कृते औन्निद्र्यादिकं कर्त्तृ त्वाम् अपि परिभवति इति अन्वयः। उद्देश्यासिद्ध्या मन्दभागित्वेन स्वनिन्दा स्वकार्य्योत्कण्ठया औन्निद्र्यादिकं मां परिभवतु मदर्थं समस्तरात्रिप्रार्थनया त्वाम् अपि इति अपिकारार्थः वाच्यार्थे मत्कार्य्यसिद्धेः एव तव चिन्ता व्यङ्ग्यार्थे तु तद्भावनारूपा एव सा। अत्र प्रतिकूलकर्त्तृत्वात् बोद्धव्यवैलक्षण्यं तथात्वं च अतथात्वे एवम् उक्तेः वैचित्र्याभावात् अवसेयं, यद्वा व्यङ्ग्यार्थबोधोद्देश्यत्वात् एव बोद्धव्यवैलक्षण्यम्। काकुवैलक्षण्ये आह तथाभूतामिति। न मय्यामीत्यादौ अपरनञ् व्यञ्जककाक्वन्तरापेक्षया अनौचित्यव्यञ्जिकायाः अस्याः काकोः विलक्षणता इति अवधेयम्। दुर्य्योधनेन सह सन्धिकरणविमुखं भीमं प्रति आर्य्यः कदाचित् खिद्यते गुरुरिति। सहदेवस्य उक्तौ पुनः भीमस्य उक्तिः इयं पाञ्चालतनयां द्रौपदीं तथाभूतां रजस्वलां सभामध्ये दुःशासनाकृष्टकेशाम् आकृष्यमाणवस्त्राञ्च वने द्वैतवने वल्कलधरैः अस्माभिः व्याधैः सार्द्धं सुचिरम् उषितञ्च अनुचितारम्भैः द्यूतसूपकारादिवेशैः निभृतं गुप्तं स्थितञ्च दृष्ट्वा अद्यापि अज्ञातवासे गते प्रत्यपकर्त्तुं क्षमता-

अत्र मयि न योग्यः खेदः कुरुषु तु योग्यः इति काका प्रकाश्यते। न च वाच्यसिद्ध्यङ्गम् अत्र काकुः इति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्, प्रश्नमात्रेण अपि काकोः विश्रान्तेः॥

तइआ मह गण्डत्थलणिमग्गां दिट्ठिं ण णेसि अण्णत्तो।
एह्णिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी॥

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतः ते दृष्टिः अन्या एव अभूत् चलितायां तु तस्याम् अन्या एव जाता इति अहो प्रच्छन्नकामुकत्वं ते इति व्यज्यते।

---

काले अपि। अत्रेति तत्प्रीतिकरणाय प्राप्ततादृशदुःखे मयि अप्रीतिकारितया खेदभजनस्य अयोग्यता वस्तुतः अप्रीतिकारिषु कुरुषु तु योग्यता च काका सहकारीभूतया वाच्यार्थेन प्रकाश्यते इत्यर्थः। ननु वाक्यार्थः अवगतः एव प्रकाशकः प्रकृते च खेदभजनायोग्ये मयि खेदं भजति इति वाक्यार्थः प्रथमं प्रतीतः अपि अनुपपन्नतया एव प्रतीतौ विश्राम्यति। अतः तद्व्यङ्ग्येन मयि न योग्यः इत्यादिना सहान्वयेन एवं मयि खेदं भजते इत्ययोग्यमिति। वाक्यार्थस्य सिद्धत्वात् इदं वाच्यसिद्ध्यङ्गाख्यगुणीभूतव्यङ्ग्योदाहरणम् एव सम्भवति न काकुसहकृतवाच्यार्थव्यङ्ग्योदाहरणं वाक्यार्थस्य शब्दात् अप्रमितत्वात् इति आशङ्कते न च वाच्यसिद्ध्यङ्गमिति काकुः? काकुव्यङ्ग्यं मयि न योग्यम् इत्यादिकं वाच्यसिद्ध्यङ्गं शब्दे वाच्यसिद्धिनिर्वाहकम्, समाधत्ते प्रश्नमात्रेण अपि इति। काकोः व्यङ्ग्येन प्रश्नमात्रेण अपि वाक्यार्थस्य विश्रान्तेः योग्यतया शब्दात् अवगतेः इत्यर्थः। तथाहि तत्प्रीतिकरणाय खिन्ने मयि अप्रीतिकरत्वेन खेदं कथं भजते? इति काकुव्यङ्ग्यप्रश्नान्वयितया योग्ये वाक्यार्थे शब्दात् एव प्रतीते पुनःस्मृतया अस्मरणे अपि प्रश्नद्वारिकया एव अकाङ्क्षा सहकारीभूतया तेन वाक्यार्थेन मयि न योग्यः इत्यादिकं व्यज्यते इत्यर्थः। एवञ्च प्रश्नांशे गुणीभूतव्यङ्ग्यत्वम् एव मयि न योग्यम् इत्याद्यंशे तु काकुसहकृतस्वतःसम्भवि वस्तु व्यङ्ग्यवस्तुध्वनिः इति बोध्यम्। वाक्यवैलक्षण्ये आह। तइआ इति।

झटिति आकूतस्फोरकविशेषणवत्त्वम् एव वाक्यस्य वैलक्षण्यम्।

तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र।
इदानीं सा चैवाहं तौ च कपोलौ न सा दृष्टिः॥ इति संस्कृतम्।

नायिकायाः कपोलप्रतिबिम्बिताम् उपनायिकां दृष्टवन्तं नायकं प्रति तस्याम्

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि! ते वान्ति वाताः
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः॥
अत्र रतार्थं प्रविश इति व्यङ्ग्यम्।
णोल्लेइ अणस्समणा अत्ता मं घरभरम्मि सअलम्मि।
खणमेत्तं जइ संज्झाइ होइ ण व होइ बीसामो॥

---

अवगतायां नायिकायाः उक्तिः इयम्। तदा उपनायिकासत्त्वकालिनिमग्नां रागात् चलाम् इदानीं तदपगमकालेन सा नमत्कपोलनिमग्ना अवेति व्यज्यते विलक्षणे-तद्वाक्यसहकृतेन वाक्यार्थेन इति शेषः। उपनायिकासत्त्वासत्वयोः झटिति व्यञ्ज-काभ्यां तदेदानीम्पदाभ्यां विशिष्टत्वात् वाक्यस्य अत्र वैलक्षण्यम्। वाच्यवैलक्षण्ये उदाहरति।

उद्देशोऽयमिति। प्रकर्षणविशेषणवत्त्वं वाच्यस्य वैलक्षण्यं तथाच स्ववैलक्षण्यात् स्वस्य व्यञ्जकत्वम् इत्यर्थः। रतार्थं प्रार्थ्यमानां नायिकां प्रति नायकस्य उक्तिः इयम्। नर्मदायाः अयम् उद्देशः प्रदेशः तस्य प्रकर्षकाणि विशेषणानि सरसेत्यादीनि सरसकदलीश्रेणिशोभया अतिशायी अतिशयशीलः इत्यर्थः। कदलीनां सरसत्वोपादा-नात् अभग्नपत्रैः अच्छिद्रतालाभः तेन च सञ्चरताम् अदृश्याभ्यन्तरत्वं रत्युपयुक्तं गम्यते रमणीविभ्रमाङ्कुरप्रदर्शनात्तव अपि रमण्याः विभ्रमाङ्कुरः अत्र जायताम् इति भावः। प्रकर्षान्तरम् आह किञ्चेति। एतस्मिन् प्रदेशे सुरतसुहृदः सुरत-प्रवर्त्तकाः ते वाताः वान्ति येषाम् अग्रे कामिजनं प्रति धृताकस्मिककोपः मनोभूः सरति धावति। तथाच एभिः उद्दीपकैः अत्र रतम् उचितम् अतः अत्र रतार्थं प्रविश इति व्यङ्ग्यम् इति आह अत्रेति वाच्यवैलक्षण्यम् अत्र उद्दीपकविशेषणैः। अन्यसन्निधेः वैलक्षण्ये आह।

णोल्लेइ इति। वाच्यार्थमात्रबोद्धृभिन्नस्य सान्निध्यम् अन्यसन्निधिः तस्य व्यङ्ग्यार्थबोधोद्देश्यत्वम् एव वैलक्षण्यम्।

नुदति अनन्यमनाः श्वश्रूर्मां गृहभारे सकले।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः॥ इति संस्कृतम्।

अत्र सन्ध्यासङ्केतकालः इति तटस्थं प्रति कयाचित् द्योत्यते।

सुणइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण।
एअमेअ कित्ति चिट्ठसि ता सहि! सज्जेसु करणिज्जम्॥

अत्र उपपतिं प्रति अभिसर्त्तुं प्रस्तुता न युक्तम् इति कयाचित् निवार्य्यते।

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः॥

---

अत्र गृहकर्मदुःखोद्धारपरः वाच्यार्थः तद्गृहस्थिता जनाः तत्र बोद्धारः तदन्योपनायकसान्निध्यात् तु सङ्केतकालत्वेन सन्ध्यायाः द्योतनं सामाजिकैः व्यञ्जनया अवगम्यते उपनायकसान्निध्यलाभस्तु तद्भावे एतदुक्तेः वैचित्र्याभावात् एव। अत्रेति। तटस्थं वाच्यार्थबोधे उदासीनम् उपनायकं द्योत्यते इति। तथाच तया द्योतनम् एव सामाजिकानाम् अन्यसन्निधिगम्यम् इति भावः। व्यञ्जनया उपनायकस्य सङ्केतकालबोधस्तु वक्तृवैलक्षण्यात् एव, अइपिहुलमित्यादिवत्। चक्रवर्त्ती तु वक्त्रन्यस्य उपनायकस्य सान्निध्यात् तेन एव सङ्केतकालः व्यञ्जनया बुध्यते इति आह। तत् न, अइपिहुलम् इत्यतः भेदानुपपत्तेः। प्रकरणवैलक्षण्ये उदाहरति।

सुव्वइ इति। प्रकरणस्य व्यङ्ग्यार्थविषयत्वम् एव वैलक्षण्यम्।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।

एवमेव किमिति तिष्ठसि तत् सखि! सज्जय करणीयम्॥ इति संस्कृतम्।

सम्प्रक्रान्ताभिसारनिवर्त्तिकायाः सख्याः उक्तिः इयम्। एवमेवेति। वाच्यार्थपक्षे तत्परिचर्य्योपक्रमरहिता एव इत्यर्थः। व्यङ्ग्यार्थपक्षे तु अभिसारोपक्रमयुक्ता एव इत्यर्थः। करणीयं रन्धनादिव्यापारोपयुक्तसामग्रीम्। वार्य्यते इति वारणं व्यज्यते इत्यर्थः। प्रकरणात् अभिसारोपस्थितौ एव तद्वारणव्यञ्जनाप्रकरणं तत्र सहायम्। देशवैलक्षण्ये उदाहरति।

अन्यत्र यूयमिति। देशः विधेयकरणत्वेन निर्दिष्टस्थानं तेन उद्देशः अयम् इत्यत्र वाच्यवैलक्षण्यम् एव न देशवैलक्षण्यं तत्र च किञ्चैतस्मिन् इति अद्देन अधिकरणत्वनिर्देशः न प्रकृतिविधेयक्रियायाः इति अवधेयम्। तादृशस्य देशस्य च व्यङ्ग्यार्थोपयोगिधर्मवत्तया उक्तिवैलक्षण्यम्। बहुसखीपुष्पावचयाधिकरणदेशकृत-

अत्र विविक्तः अयं देशः इति प्रच्छन्नकामुकः त्वया अभिसार्य्यताम् इति आश्वस्तां प्रति कयाचित् निवेद्यते।

गुरुअणपरवस पिअ ! किं
भणामि तुह मन्दभाइणी क्खु अहम्।
अज्ज पवासं वजसि वज्ज
सअं ज्जेव्व जाणसि करणिज्जम्॥

---

सङ्केतायाः प्रतिहतागतां दूतीं दृष्ट्वा सखीप्रत्युक्तिः इयम्। अस्मि इति अहमर्थे अत्र अहं कुसुमावचायं करोमि इत्यर्थः। एतदुक्तौ व्यङ्ग्यरूपत्वनिरासाय आह नाहमिति। अत एव सर्वासां कुसुमावचये तु कुसुमानाम् अल्पत्वम् एव बाधकम् इति ऊर्ध्वं वः इति, बहुवचनम् अञ्जलिः इत्येकवचनं च सामर्थ्यसूचकं प्रत्येकम् अञ्जलिकरणस्य अपि सामर्थ्यप्रयुक्तत्वात्। अत्रेति अभिसार्य्यताम् आनीयतां आश्वस्तां दूतीम् इति विशेषः। निवेद्यते इति। तथाच तन्निवेदनम् एव, सख्यपसारणधर्मविशिष्टदेशवैलक्षण्यात् सामाजिकव्यञ्जनागम्यम् इत्यर्थः न तु वाच्यदेशवैलक्षण्यम् अत्र देशस्य अत्र उद्देशः अयम् इत्यत एव प्रकर्षकविशेषणवत्तया विधेयत्वेन अनुक्तत्वात्, न अपि अन्यसन्निधिवैशिष्ट्यम् अन्यसन्निधेः अपि देशवैशिष्ट्ये एव न अपि उपस्थापनात् दूतीसान्निध्योपस्थितिं विना एव वाच्यार्थस्य नायिकासौकुमार्य्यव्यञ्जनया एव विचित्रत्वात् निवेद्यार्थस्तु ज्ञातप्रकरणया दूत्या तद्वैलक्षण्यात् एव प्रतीयते इति बोध्यम्। कालवैलक्षण्ये आह।

गुरु अणेति। कालः ऋतुः तस्य वैलक्षण्यं व्यङ्ग्योपयोगि स्वभावता वसन्तत्वादिः।

गुरुजनपरवश प्रिय ! किं भणामि तव मन्दभागिनी खल्वहम्।

अद्य प्रवासं व्रजसि व्रज स्वयमेव ज्ञास्यसि करणीयम्॥ इति संस्कृतम्।

पित्राद्याज्ञया प्रवसितुम् उद्यतं नायकं प्रति नायिकाया उक्तिः इयम्।

अद्य वसन्ते स्वाभीष्टोद्यमात् मन्दभागिनीति स्वनिन्दा गुरुजनपरवशत्वेन अनिवर्त्तनीयता अतः निवर्त्तनचेष्टाम् अकृत्वा तस्मिन् एव करणीयपरिभावनभावो दत्तः। अद्य इति किं भणामि म्रिये इत्यर्थः। तवत्विति गुरुजननिदेशम् उल्लङ्घ्य अपि कृत्यु हेतुक्रियातः जनैः निवर्त्तितव्यं तव तदकरणात् तु ज्ञास्यसि इत्यर्थः। गतिम् अवस्थां व्यज्यते इति। मधुमासरूपकालस्य विरहमारकत्वरूपवैल-

अत्र अद्य मधुसमये यदि व्रजसि तदा अहं तावत् न भवामि तव तु न जानामि गतिम् इति व्यज्यते। आदिग्रहणात् चेष्टादेः। तत्र चेष्टायाः यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्य्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।
आनीतं पुरतः शिरोऽंशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते॥

अत्र चेष्टया प्रच्छन्नकान्तविषयः आकूतविशेषः ध्वन्यते। निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनःपुनः उदाह्रियते।

---

लक्षणात् नायकेनैव व्यञ्जनया अवगम्यते इत्यर्थः। सामाजिकैः तु तदवगमः एव वक्त्रादिवैलक्षण्यात् प्रतीयते इति बोध्यम्।

द्वारोपान्तेत्यादि। नायिकायाः भावपरीक्षकस्य सख्युः सख्याम् उक्तिः इयम्। मयि द्वारोपान्ते निरन्तरे अत्यन्तसन्निहिते सति तया नायिकया ऊरुयुगं प्रोल्लास्य परस्परसमासक्तम् अन्योन्यासङ्गं समासादितं प्रापितम् इत्यर्थः। तया शिरोऽंशुकं पुरतः आनीतं चले लोचने अधः क्षिप्ते वाचः तत् प्रसरणं वारितं दोर्लते च सङ्कोचिते, तया कीदृश्या सौन्दर्य्यसारा श्रीः यस्याः तादृश्या। समासक्तम् इति भावे क्तः। दूरदृष्टे सन्निहितगमनेच्छया तादृशक्रिया न कृता अतः अत्यन्तसन्निहिते एव इति भावः। अत्रेति लज्जाधीना चेष्टा कुलस्त्रीणां लज्जाज्ञापनाय चेष्टा तु कुलटानाम् आकूतसूचिका एव आकूतं भावः प्रकृते च अशक्तस्य एव ऊरुयुगस्य प्रोल्लासपूर्वकं तथा करणं लज्जोद्दीपनाय एव शिरःस्थितम् एव अंशुकं तस्य पुरतः आनयनं लज्जाज्ञापनाय तथा तस्य अदर्शनम् एव लज्जाकार्य्यं अधःक्षेपणं तु तज्ज्ञापनाय वाक्प्रसरणनिवारणं तु चेष्टाविरह एव तेन अपि अत्र आकूतव्यञ्जकं तथा दोर्लतयोः यथास्थानस्थापनम् एव लज्जाकार्य्यं तत्सङ्कोचनं तु लज्जाज्ञापनाय एव इति अत्र आभिः चेष्टाभिः लज्जाम् अभिव्यज्य तद्द्वारा आकूतविशेषः व्यज्यते इति चक्रवर्त्ती। तत् न, तद्धेतोः एव तत्सिद्धेः तद्व्यञ्जने प्रमाणाभावात् लज्जायाः आकूतव्यञ्जकत्वाभावात् न हि सीतया कृता लज्जा रावणे, स्नुषायाः वा कृता श्वशुरे आकूतव्यञ्जिका।

चेष्टादेरित्यादि पदात् क्वचित् चेष्टाविरहः अपि व्यञ्जकः इत्युक्तम्। यथा

वक्त्रादीनां मिथःसंयोगे द्विकादिभेदेन । अनेन क्रमेण लक्ष्य-व्यङ्ग्ययोश्च व्यञ्जकत्वम् उदाहार्य्यम् ।

**शब्दप्रमाणवेद्योऽर्थः व्यनक्त्यर्थान्तरं यतः ।**
**अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता ॥२३॥**

शब्देति । न हि प्रमाणान्तरवेद्यः अर्थः व्यञ्जकः ।

इति श्रीकाव्यप्रकाशे अर्थनिर्णयः तृतीयः उल्लासः ॥३॥

---

"न ते मयि पदाक्षेपं दृष्टे दृष्टिनिशारणम् । अकुर्वाणा चटूक्तौ मे मौनमालम्बते च सा ॥" इत्यत्र पदाक्षेपादिविरहः । ननु वक्तृवैलक्षण्योदाहरणे बोद्धव्यादेः बोद्धव्यवैलक्षण्योदाहरणे वक्त्रादेः अपि वैलक्षण्यं सम्भवति तदस्फुर्त्त्यनुसारेण अनेकेषाम् उदाहरणं सम्भवति किं बहूदाहरणैः ? इत्यतः आह निराकाङ्क्षप्रतिपत्तये इति । एकैकस्य किमुदाहरणम् ? इत्याकाङ्क्षानिरासकप्रतिपत्तये स्फुटावभासमानम् एकैकम् आदाय पुनः पुनः उदाह्रियते इत्यर्थः । एवं वाच्यार्थस्य व्यञ्जकत्वे सहायानां वक्त्रादीनां प्रत्येकम् उदाहरणे दर्शिते लक्ष्यार्थव्यङ्ग्यार्थयोः अपि तयोः उदाहरणप्रदर्शने आकाङ्क्षिते वक्त्रादि त्विति । वैशिष्ट्येन एकैकम् उदाहरणं पूर्वोक्तम् एव बोद्धव्यम् इति आह वक्त्रादीनामिति । द्विकादीति । भेदे सम्भवे मिलनम् इत्यर्थः । आदिना त्रिचतुरादिपरिग्रहः । तत्र लक्ष्यार्थस्य व्यञ्जकत्वे साहेन्ती सहि सुअमित्येत्र वक्तृबोद्धव्यवाक्यत्रितये वैलक्षण्यविशिष्टम् उदाहरणम् । व्यङ्ग्यार्थस्य व्यञ्जकत्वे तु उअ णिच्चल णिप्फन्देत्यादिकम् एव उदाहरणं बोद्धव्यं प्रकरणवैशिष्ट्यवदिति । अत्र वाच्यार्थव्यञ्जकतोदाहरणानां द्विकादिसम्भेदसम्भवे अपि निराकाङ्क्षप्रतिपत्तये इत्युक्तत्वात् तदीयद्विकादिभेदोदाहरणान्तरस्य अनाकाङ्क्षितत्वेन अत्ता एत्थेत्यादि तदीयद्विकादिसम्भेदोदाहरणं यत् क्वचित् पुस्तके लिखितं तिष्ठति तत् अयुक्तम् एव । अर्थ्यां व्यञ्जनायां शब्दविशिष्टस्य अर्थस्य काव्यत्वम् इति हृदयात् आह शब्दप्रमाणेति । सहकारिता विशेषणीभावः ।

इति तृतीयः उल्लासः ।

---

# चतुर्थः उल्लासः।



यद्यपि शब्दार्थयोः निर्णये कृते दोषगुणालङ्काराणां स्वरूपम् अभिधानीयम्, तथापि धर्म्मिणि प्रदर्शिते, धर्म्माणां हेयोपादेयता ज्ञायते इति प्रथमं काव्यभेदान् आह।

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥**

लक्षणामूलगूढ़व्यङ्ग्यप्राधान्ये सति एव अविवक्षितं वाच्यं

---

"यददोषौ शब्दार्थौ" इति कारिकोक्तानुसारेण आह यद्यपीति। स्वरूपलक्ष्यं लक्षणञ्च अभिधानीयम् अभिधातुं योग्यम्। योग्यता च काव्यलक्षणोक्तकर्मे एव दर्शिते भेदप्रभेदैनेति शेषः। सामान्यतस्तु इदमुत्तममतिशयिनीत्यादिभिः दर्शितत्वात् एव। यद्यपि तथात्वेन प्रदर्शिते अपि हेयोपादेयता ज्ञायते एव तथापि धर्म्मिविशेषनिष्ठतया ज्ञायते इत्यर्थः। लक्षणामूलेति वाच्या विवक्षायाः लक्षणां विनाभावात् गूढ़व्यङ्ग्या प्राधान्याभावे च ध्वनित्वासम्भवादर्थप्राप्तं सत्यन्तं पूरितं तत्र च गूढ़त्वे एव प्राधान्यम् इत्यं तत्प्रतिपादनया एव गूढ़ेत्युक्तं न तु अगूढ़व्यावर्त्तनाय तथात्वे प्राधान्यस्य एव अभावेन गुणीभूतव्यङ्ग्यत्वस्य वक्ष्यमाणत्वात्।

अविवक्षितं वाच्यमिति वाच्यतावच्छेदकरूपेण अविवक्षितम् इत्यर्थः। तेन अवच्छेदकान्तरेण वाच्ये विवक्षिते अपि अविवक्षितत्वम् उपपन्नम्। सध्वनिरिति पूरणाभावे तादृशस्य ध्वनित्वेन पूर्वम् अप्राप्तत्वात् तत्र ध्वनौ इति अनुवादासम्भवः स्यात् इत्यतः तत्पूरणं कृतम् अनुपयुज्यमानत्वात् इति वाच्यतावच्छेदकरूपेण तात्पर्य्यानिर्वाहकत्वात् इत्यर्थः। अन्वयोपपत्तिस्तु तेन अपि रूपेण अस्ति एव इत्यतः अनुपपद्यमानत्वात् इति न उक्तम्। अर्थान्तरे अवच्छेदकान्तरज्ञाने परिणमितं विषयीकृतं शक्यतावच्छेदकभिन्नरूपेण उपस्थितम् इत्यर्थः। षड्विधलक्षणासु उपादानलक्षणामूलध्वनिः अनेन उक्तः।

यत्र स ध्वनौ इत्यनुवादात् ध्वनिः इति ज्ञेयः। तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वात् अर्थान्तरे परिणमितम्। यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥

अत्र वचनादि उपदेशादिरूपतया परिणमति। क्वचिदनुपपद्यमानतया अत्यन्तं तिरस्कृतम्। यथा—

उपकृतं बहु तत्र किमुच्यते?
सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे!
सुखितमास्स्व ततः शरदां शतम्॥

---

त्वामस्मीत्यादि। अहम् इत्यर्थे अस्मि इति। अहं त्वां वच्मि वदामि इत्यर्थः। समवायः सभा। तत्तस्मात् अत्रेति उच्यमानार्थकथनमहिम्ना एव वच्मीत्यस्य एव लाभे वचनत्वेन रूपेण तत्र न तात्पर्य्यं किन्तूपदिशामि इति तस्य अर्थः। उपदेशस्य च परप्रवर्त्तकवचनरूपत्वेन तेन एव रूपेण अत्र वाच्यं वचनम् उपस्थितम् इत्यर्थः। अत्र उपदिश्यमानार्थस्य अनुपेक्षणीयत्वं प्रयोजनं व्यङ्ग्यं गूढ़ं वचनादित्यादिपदात् विद्वत्पदं निग्राहकविद्वत्परम् अनुग्राहकतत्सभायां यथा तथा स्थितिसम्भवात्। अत्र परापमानदायित्वं प्रयोजनं गूढ़ं व्यङ्ग्यम्। तथा मतिपदम् उत्तममतिपरं निकृष्टमत्यास्थित्युपदेशायोगात्। अत्र च अपमानवारणं प्रयोजनं गूढ़ं व्यङ्ग्यं सर्वत्र अभेदः एव शक्यलक्ष्यसम्बन्धः। अत्यन्तं वेति व्याचष्टे क्वचिदिति। अत्यन्तं तिरस्कृतं रूपान्तरेण अपि न अन्वयप्रतियोगि इत्यर्थः। लक्षणलक्षणादिपञ्चविधलक्षणामूलध्वनिः अनेन उक्तः।

उपकृतमित्यादि। प्रमाणान्तरावगतापकारिणं प्रति सौम्यशठोक्तिः इयम्। तत्रेति समीचीनः। यत्रेति पाठे तु तत्रेति पूरणीयम्। परं सुखितम् इतिद्वयं क्रियाविशेषणम्। विपरीतेति उपकृतपदस्य अपकृते सुजनतापदस्य दुर्जनत्वे सुखितपदस्य दुःखिते विपरीतलक्षणया इत्यर्थः वैपरीत्यम् एव शक्यलक्ष्यसम्बन्धः पूर्वायाः कौटिल्यं तृतीये लक्ष्यार्थस्य कौटिल्यफलत्वं प्रयोजनं गूढ़ं व्यङ्ग्यम् इत्थं द्विविधम् अविवक्षितवाच्यं ध्वनिम् उक्त्वा विवक्षितान्यपरवाच्यध्वनिम् अनेकप्रभेदम् आह।

एतदपकारिणं प्रति विपरीतलक्षणया कश्चित् वक्ति ।

**विवक्षितञ्चान्यपरं वाच्यं यत्रापरस्तु सः ।**

अन्यपरं व्यङ्ग्यनिष्ठम् । एष च—

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥२५॥**

अलक्ष्येति । न खलु विभावानुभावव्यभिचारिण एव रसः, अपितु रसस्तैः इत्यस्ति क्रमः, स तु लाघवात् न लक्ष्यते । तत्र,

**रसभावतदाभासभावशान्त्यादिरक्रमः ।**
**भिन्नो रसाद्यलङ्कारादलङ्कार्य्यतया स्थितः ॥२६॥**

---

विवक्षितञ्चान्येति व्यङ्ग्यनिष्ठमिति। व्यङ्ग्ये निष्ठा पर्य्याप्तिर्यस्य तादृशं व्यङ्ग्यं यस्य कोऽपि ध्वनिसादृश इत्यर्थः । स च रसभावादिध्वनिर्वक्ष्यते । तत्र हि वाच्यार्थस्य रसादिरूपव्यङ्ग्यस्य च परिचये ज्ञाने तदनु व्यवसायेन तयोः पौर्वापर्य्यं न गृह्यते अत्यन्तचित्ताकर्षकत्वविषयत्वेन शीघ्रोपस्थित्या एकदोत्पत्तिकभ्रमस्यानुभवसिद्धत्वादिति भावः । परो ध्वनिः लक्ष्यव्यङ्ग्यक्रमपरिचेयव्यङ्ग्यज्ञानोत्पत्तिक्रम इत्यर्थः । ननु रसध्वनौ वाच्यव्यङ्ग्यज्ञानयोः पौर्वापर्य्यसत्त्व एव तदपरिचयो वक्तुं युज्यते ? तदेव तु नास्ति, तथाहि सीताविषयकचिन्तादिमान् रामस्तद्विषयरतिमानित्याद्याकारकं ज्ञानं तावद्रसः सर्वमतसिद्धः । स च सीतारूपविभावचिन्तादिरूपव्यभिचार्य्यनुभावात्मकविषयविशिष्ट एव पानकरस इति वक्ष्यते । तथाच सीतादिचिन्तादिरूपवाच्यार्थ एव व्यङ्ग्यार्थोऽपि रसत्वापन्न इत्यतो वाच्यव्यङ्ग्यज्ञानमेकमेवेति कुतस्तत्र क्रमः ? इति भ्रान्त्याशङ्कां निरस्यन्नाह न खल्विति । एवकारेण तन्मात्रता व्यावर्त्तिता । अपित्विति तैर्विभावादिभिः प्रथमं शक्त्याप्रतीतैः पश्चान्मिलित्वा रस इत्यर्थः इत्यतः क्रमोऽस्त्येवेत्याह इत्यस्तीति । तदुक्तं दर्पणे "प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते । ततः संवलितः सर्वो विभावादिः सचेतसाम् । प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥" इति अत्र अपरिचेयक्रमान् व्यङ्ग्यार्थान् दर्शयति ।

रसभावेति तदाभासेति । तत्पदेन रसभावयोर्द्वयोरेव परामर्शः । अक्रमः अलक्षणीयसज्ञानोत्पत्तिक्रम इत्यर्थः । भावोदयः व्यभिचारिभावस्य प्रधानीभावेनोत्पत्तिः प्रधानीभावश्च निराकाङ्क्षवाक्यव्यङ्ग्यमित्यग्रे दर्शयिष्यते । एवं भावसन्ध्यादावपि

आदिग्रहणात् भावोदयभावसन्धिभावशबलत्वानि। प्रधानतया यत्र स्थितो रसादिः तत्र अलङ्कार्य्यः। यथा उदाहरिष्यते। अन्यत्र तु प्रधाने वाक्यार्थे यत्र अङ्गभूतो रसादिः तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेय ऊर्जस्विसमाहितादयः अलङ्काराः। ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते।

तत्र रसस्वरूपमाह

**कारणान्यथ कार्य्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ २७ ॥**

---

प्राधान्यं बोध्यम्। विरुद्धयोः परस्पराप्रतिबन्धेन स्थितिः सन्धिः सबलत्वमुत्तरोत्तरेण बलीयसा पूर्वपूर्वस्य नाशः पराङ्गं व्याचष्टे प्रधानतयेति। रसप्रकर्षकालङ्कारसत्त्वे रसस्य अलङ्कार्य्यतानुपपत्त्या अलङ्कारयोग्यतैव विवक्षितेति सैव दर्शिताऽनेन प्रधानता च पराकृता यथोदाहरिष्यति इति। शून्यं वासगृहमित्यादिना तद्बोध्यं पराङ्गत्वे तु तस्य रसाद्यलङ्कारत्वमित्याह अन्यत्र त्विति। वाक्यार्थे रसभावादिरूपे क्वचिद्भावादेरपि अङ्गित्वस्य दर्शयिष्यमाणत्वात्। एवञ्चापराङ्गे रसादेरक्रमत्वेऽपि तद्वतः काव्यस्य नासंलक्ष्यक्रमध्वनित्वमलङ्कार्य्येणैव तेन तथात्वमित्येतत् प्रतिपादनायैव प्राधान्येन यत्रेत्युक्तमिति बोध्यम्। गुणीभूतव्यङ्ग्येऽपराङ्गाख्यगुणीभूतव्यङ्ग्ये वक्ष्यमाणे रसाङ्गत्वे रसवदलङ्कारः भावस्याङ्गत्वे प्रेयोऽलङ्कारः आभासस्याङ्गत्वे ऊर्जस्वालङ्कारः भावशान्त्यादेरङ्गत्वे समाहितालङ्कारः गुणीभूतव्यङ्ग्याभिधाने कृते सति उदाहरिष्यन्ते एते च रसवदाद्यलङ्कारा वक्ष्यन्त इत्यर्थः। रसस्वरूपं सलक्षणं तत्र विभावाद्यैर्व्यक्तो रत्यादिस्थायिभावो रस इति रसलक्षणं कर्त्तुं विभावादिसंज्ञां ग्राहयति।

कारणानीत्यादि। व्यभिचारिण इत्यन्तेन यद्यपि अन्यत्र सहकारिपदं कारणपरमेव तथापि अत्र शैघ्र्यात् स्वसहभावेनैव रत्यादिज्ञानजननात् सहकारिपदं वक्ष्यमाणनिर्वेदादित्रयस्त्रिंशत्सङ्ख्यकार्य्यविशेषपरमेव बोध्यम्। रत्यादेरित्यादिपदाच्च "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः॥" इति वक्ष्यमाणं स्थायिभावाष्टकं शान्तरसस्थायिभावनिर्वेदश्च

विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः
॥ २८ ॥

उक्तं हि भरतेन "विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः" इति। एतत् विवृण्वते विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः स्थायी रत्यादिको भावो जनितः।

---

वक्ष्यमाणव्यभिचारिभावध्वनौ स्थायिभावत्वापन्ना व्यभिचारिभावाश्च बोध्याः। तथाच रत्यादेरेवंविधस्य स्थायिनः स्थायिभावपरिभाषितस्य यानि कारणानि वक्ष्यमाणालम्बनोद्दीपनरूपकारणविशेषाणि कार्य्याणि निर्वेदादित्रयस्त्रिंशद्भिन्नानि यानि च सहकारीणि निर्वेदादित्रयस्त्रिंशद्रूपकार्य्यविशेषा लोके काव्यनाट्यभिन्नलोकव्यवहारे कारणादितयैव श्रूयन्ते इति शेषः। तानि नाट्यकाव्ययोश्चेत् प्रतीयन्ते इति शेषः। तदा तानि कारणकार्य्यसहकारीणि यथासंख्यं विभावा अनुभावा व्यभिचारिणश्च कथ्यन्ते इत्यर्थः। तेन कारणानि विभावाः कार्य्याणि अनुभावाः सहकारिणश्च व्यभिचारिणः कथ्यन्ते इत्यर्थः। व्यभिचारिणां सञ्चारिपरिभाषापि दोषोल्लासे व्यक्तीभविष्यति। इदानीं रसलक्षणमाह।

व्यक्तः स तैरिति। स स्थायी भावो रत्यादिस्तैर्विभावाद्यैर्नाट्यकाव्यज्ञातैर्व्यक्तः प्रकाशितः स रस स्मृत इत्यर्थः। प्रकाशनञ्च क्वचिन्मते व्यञ्जनरूपं क्वचिन्मते तु साक्षात्काररूपमिति तत्तन्मते दर्शयिष्यते। भरतेन इति। भरतमुनिना नाट्यशास्त्रे इत्यर्थः। तदीयग्रन्थान्तरोक्तकारिकाकथने च तस्य प्रकृतग्रन्थकृत्वाभावादग्रन्थकृतेति नोक्तम्। संयोगात् मिलनात् तेन मिलितत्रयस्यैव व्यञ्जकत्वमुक्तम्। विवृण्वते भट्टलोल्लटप्रभृतयः इत्यन्वयः। विवरणञ्च विभावादिभिर्व्यक्तीकरणप्रकारस्यैव न रसलक्षणस्येति बोध्यम्। व्यङ्ग्यव्यञ्जकयोः सम्बन्धाभावे व्यञ्जनानुपपत्त्या तयोः सम्बन्धं दर्शयन् तैर्विभावादिभिः प्रतीयमानो रत्यादिः रस इत्याह।

विभावैरिति। ललना आलम्बनकारणं नायकानुरागात्मनो रतेस्तामालम्ब्य जातत्वात् नायिकारतौ तु नायक एवालम्बनं बोध्यः। उद्यानादिरुद्दीपनकारणं जाताया रतिधारायास्तेनोत्तरोत्तरं वर्द्धनात्। जनितो भवतीति शेषः। तेन

अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्य्यैः प्रतीतियोग्यः कृतः। व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्य्ये तद्रूपतानुसन्धानात् नर्त्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः।

"राम एवायम् अयमेव रामः" इति "न रामोऽयम्" इत्यौ-

---

कारणत्वमेव विभावानां रतिव्यञ्जने सम्बन्ध इति दर्शितं सम्बन्धप्रदर्शने च जननातीतत्वप्रदर्शनानुपयोगात् भवतीति पूरितम्। तथाच जन्य इत्यर्थः कटाक्षभुजक्षेपौ नायकस्य नायकरत्यनुभावत्वेन प्रदर्शितत्वात् भुजस्य तत्प्राप्त्यनुकूलचेष्टाक्षेपः कृत इत्यत्रापि भवतीति शेषः। प्रतीति योग्यतां नीत इति पाठान्तरं तथाप्येष एव शेषः क्रियते इत्यर्थः। तेन रत्यादिः प्रतीतियोग्यतापादकः कार्य्यत्वरूपः सम्बन्धोऽनुभावानां दर्शितः। निर्वेदादिभिरिति वक्ष्यमाणत्रयस्त्रिंशता कार्य्यविशेषैः उपचितः क्रियते इति शेषः। शीघ्रप्रत्यायनमुपचयः। अत एवैतेषां कार्य्यत्वेऽपि अनुभावात् पार्थक्यं न चैवमेषां शीघ्रप्रत्यायकत्वम्। यदि अन्यनिरपेक्षं तत्कथं मिलितानामेव बोधकता? यदि तु अन्यसापेक्षं तदा सर्वेषामेव प्रत्यायकत्वे कथमेषां शीघ्रप्रत्यायकत्वम् इति वाच्यम्? एतन्मात्राणां प्रतीतौ शीघ्रमन्यान्यपि ज्ञायन्ते। तन्मात्रप्रतीतौ तु विलम्बेनान्येषां प्रतीत्या रसबोधविलम्ब इति भावात् नाट्याभिप्रायेणाह मुख्ययेति वास्तव्येत्यर्थः। नर्त्तकेऽनुकारके इति शेषः। काव्ये तु रामादावेवेति बोध्यम्। प्रतीयमानो व्यज्यमानः। इत्थं सामाजिकानां व्यञ्जनागम्यः रत्यादिः रस इत्युक्तम्। "रामः सीताविषयरतिमान्" इत्यादिस्तु तदाकारः ज्ञानसम्बन्धेन च सामाजिकवृत्तित्वमित्यवधेयम्। अत्र मते व्यञ्जनाधीनज्ञानस्यास्वाद्यरूपत्वानुपपत्तिं दोषमवेक्ष्य रत्यादिसाक्षात्कार एव आस्वादरूपरस इति व्याचक्षाणस्य श्रीशङ्कुकस्य मतमाह राम एवायमिति। अत्र मते विभावादिभिः रत्याद्यनुमानं ततस्तदनुमानोद्बोधितया सामाजिकानां वासनारूपया प्रत्यासत्त्या साक्षात्कारविषयो रत्यादिः रस इति निष्कर्षः। अत्र नाट्याभिप्रायेण पक्षभूतनटज्ञानाकारणानुराग एवायमिति चित्रलिखिते तुरगे यथा—

आहार्य्यतुरगप्रतिपत्तिस्तादृश्यरामोऽयमिति।

प्रतिपत्त्या दर्शितपरिशेषिणाहार्य्यज्ञानरूपया ग्राह्ये नटे पक्षे विभावादिशब्दव्यपदिश्यैः कारणकार्य्यसहकारिभिर्हेतुभूतैरनुमीयमानोऽपि रत्यादिः सामाजिकानां

त्तरकालिके बाधे रामोऽयमिति रामः स्याद्वा न वाऽयमिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे—

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरङ्गता॥

---

वासनया प्रत्यासत्त्या चर्व्यमाणः साक्षात्क्रियमाणः रस इत्यन्वयः। तत्र रामत्वेन नटग्रहस्य सम्यगादिज्ञानचतुष्टयवैलक्षण्येन आहार्यज्ञानरूपतां परिशेषयन् आह सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणयेति। तत्र राम एव रामत्वेन बोधः सम्यक् तदाकारमाह राम एवायमिति रामत्वायोगरहित इत्यर्थः। अयमेवेति अन्योन्याभावप्रतियोगिरामत्ववानित्यर्थः। एवं रामोऽयमित्यनवधारणात्मकस्यापि सम्यक्ज्ञानोपलक्षणमिदं बोध्यम्। अरामे रामत्वेन भ्रमो मिथ्याज्ञानं तदाकारमाह।

न रामोऽयमितीति। ईदृशे उत्तरकालिके बाधे भाविनि तत्पूर्वं रामोऽयमितीत्यर्थः। रामः स्याद्वा न वेति संशयः रामसदृशोऽयमिति सादृश्यप्रतीतिः आद्याः प्रतीतिभ्यो विलक्षणया इत्यर्थः। विभावाद्यज्ञाने तैरनुमानासम्भवादाह नटेनैव प्रकाशितैरिति काव्ये तु काव्येनैव स्वार्थत्वात् प्रकाशितैर्वास्तवराम एव सम्यक्ज्ञानगृहीतेऽनुमानमिति बोध्यम्। नटेनापि प्रकाशने उपायमाह शिक्षेति। गुरूपदेशः शिक्षा पौनःपुन्येन प्रवृत्त्या दृढतरसंस्कारोऽभ्यासः आभ्यां निवर्त्तितेन निष्पादितेन स्वकार्यस्य अभिनयस्य प्रकटनेन प्रकाशनेन चेत्यर्थः। तत्प्रकटने अपि अभिनेयार्थज्ञापकस्य काव्यस्य अनुसन्धानं हेतुरिति तत्समुच्चयबोधकश्चकारः। अनुसन्धेयं काव्यद्वयमाह।

सेयमिति। दैवादिति। आद्यं सम्भोगे द्वितीयं विप्रलम्भे। या अदर्शने तत्तद्दुःखं सम्पादयति सेयं मम प्राणेश्वरी सीता मनसः सकाशात् लोचनगोचरं गता पूर्वं मनोगोचर एवासीत् इदानीं लोचनस्यापि गोचर इत्यर्थः। गोचरमिति भावप्रधानो निर्देशः गोचरमित्यर्थः। कीदृशी? अङ्गेषु वङ्गेष्वेव सुधारसस्य छटा कणाहतिः शोभनः पूरः समूहो यस्य तादृशस्य कर्पूरस्य दृशोः शलाकिका स्वल्पशलाका कृशाङ्गीत्वात् शलाकया च चक्षुषि कर्पूरदाने दृक्प्रीणनात्। दुष्प्रापविष-

दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥

इत्यादिकाव्यानुसन्धानबलात् शिक्षाभ्यासनिर्वर्त्तितस्वकार्य्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्य्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैः विभावादिशब्दव्यपदेश्यैः 'संयोगात्' गम्यगमकभावरूपात् अनुमीयमानोऽपि वस्तुसौन्दर्य्यबलात् रसनीयत्वेन अन्यानुमीयमानविलक्षणः स्थायित्वेत सम्भाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ।

---

येच्छा मनोरथस्तस्य विषयः सिद्धिरूपा शरीरिणी श्रीरिति रूपकत्रयम् । केचित्तु मनसो मनोरथश्रीरित्यन्वयमाहुः तत्तु मनस इत्यस्य वैयर्थ्यात् न। रुचिरं मनसः शरीरिणी मनसः सकाशात् प्राप्तशरीरेत्यपरे ।

दैवादिति । तया सीतया अविरलो विलोलो जलदो यत्र तादृशो वर्षाकाल इत्यर्थः इत्यादिकाव्यानुसन्धानबलादित्यर्थः तत्तदर्थानुसन्धानेन तत्तत्प्रकाशनोचितोऽभिनयस्तेन विभावादिप्रकाशनमिति भावः । ननु सीताभिन्नत्वेन ज्ञाते सीतावेशे नटे कथं सीतात्वेन ज्ञानं येन ततो रत्यनुमानम् ? इत्यत आह कृत्रिमैरपीति । यद्यपि कृत्रिमत्वज्ञानमनुभवसिद्धं दुरपलपमेवेति तथानभिमानासम्भव एव तथापि नञ्व्यत्यासेन अतथाभिमन्यमानैरित्यर्थः कृत्रिमत्वज्ञानसत्त्वेऽप्याहार्य्याकृत्रिमत्वज्ञानसम्भवात् । सूत्रे संयोगादित्यस्य मिलनार्थकत्वेऽपि गम्यगमकभावरूपा व्याप्तिरपि तदर्थ इत्यभिप्रायेणाह । संयोगादिति गम्यस्य रत्यादिरूपसाध्यस्य गमकभावात् व्याप्तिरूपादित्यर्थः । अयं रामः सीताविषयरतिमान् सीतादिविभावादिमत्त्वादित्यनुमानं तद्विषयदिदृक्षादिसत्त्वमत्र मतुबर्थः सम्बन्धः । नन्वेवं वह्न्यादिरप्यनुमितः साक्षात्कारविषयः स्यात् ? इत्यत आह वस्तुसौन्दर्य्येति । अत एवाह अन्यानुमीयमानेति। बाधसिद्धसाधननिरासाय पक्षताघटकं संशयमाह स्थायित्वेनेति पक्षवृत्तित्वेनेत्यर्थः । तत्र नटे सामाजिके च वासनारूपप्रत्यासत्तेरिदमेव सामर्थ्यं यदसतोऽपि वस्तुनो विषयीकरणमिच्छाया इवेति भावः । तथाच "रामः सीताविषयरतिमान्" इत्येवंविधः साक्षात्कारविषयो [illegible] वासनायाः

न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते अपितु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते इति भट्टनायकः ।

---

काव्यानुत्पाद्यत्वं कारणान्तरमेव कल्पनीयं तदुद्बोधार्थमनुमानकल्पनञ्च गौरवग्रस्तमत एतद्दोषद्वयं परिहृत्य व्याचचाणस्य भट्टनायकस्य मतमाह ।

न ताटस्थ्येनेति । अत्र मते काव्यनाट्यज्ञापितैर्विभावाद्यैः भावकत्वाख्य एको व्यापारो जन्यते । तेनैव व्यापारेण प्रत्यासन्नीकृतो रत्यादिः सामाजिकसाक्षात्कारविषयो रसः । स च "रामः सीताविषयरतिमान्" इत्येवमाकारमेव प्रथममेवोत्पद्यते न तु पूर्वमतवत्तादृशानुमित्यनन्तरमिति निष्कर्षः । भट्टलोल्लटमते परकीयरत्यादेर्व्यञ्जनैव तत्रापरकीयत्वज्ञानसामग्रीसत्त्वात् । तथात्वग्रहे स्वाश्रयवृत्तित्वज्ञानमप्यर्थसिद्धम् । मया तु स्वाश्रयवृत्तित्वं व्यञ्जनागम्यत्वञ्च नाङ्गीकार्यमित्याह न ताटस्थ्येनेति । नाभिव्यज्यते इति च । न स्वासम्बन्धित्वेन रसो रत्यादिः प्रतीयते इत्यर्थः । स्वासम्बन्धित्वेनाप्रतीतौ स्वसम्बन्धित्वज्ञानपर्यवसानमपि निरस्यति नात्मगतत्वेनेति । काव्यात् अज्ञातुरपि रामादेः सीतादौ रत्युत्पत्तेः सिद्धत्वादाह नोत्पद्यते इति काव्यनाट्याभ्यामिति शेषः । अनुरागाद्यात्मनो रत्यादेः अनुत्पत्त्यभावात् । तथाच रत्यादेः कीदृग्भावेन रसत्वमित्यत्राह अपित्विति । काव्ये नाट्ये च जायमानेन भावकत्वाख्यव्यापारेण भाव्यमानः सन्निधाप्यमानो रत्यादिर्भोगेन साक्षात्कारेण भुज्यते विषयीक्रियते इत्यर्थः । तथाच तादृशसाक्षात्कार एव विषयविशिष्टः रस इति भावः । रत्यादिः कीदृशः ? स्थायी काव्यनाट्यशेषः प्राक्सिद्ध इत्यर्थः काव्यनाट्याभ्यां नोत्पद्यते इत्युक्तस्यायमनुवादः । स च पूर्वोक्तविस्मृतिनिरासार्थं स्थायिपरिभाषित इति वा भावकत्वव्यापारेण कीदृशेन ? अभिधातो द्वितीयेन यज्ञादिविधिवाक्ये लिङा, यथा अभिधाख्य एकः प्रवर्त्तको व्यापारः पुरुषनिष्ठो जन्यते तथा काव्यनाट्याभ्यामपि सामाजिकानिष्ठो भावकत्वाख्यो व्यापारो जन्यते । अतस्तत् द्वितीयेन तत्तुल्यकत्वेण पुरुषनिष्ठत्वेन शब्दात् जायमानत्वेन च तुल्यकक्षता । तदुक्तं "लिङोऽभिधा सैव च शब्दभावनाभाव्या च तस्याः पुरुषः प्रवृत्तिः । सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते ॥" इति लिङो जन्याभिधा इत्यर्थः । पुरुषप्रवृत्ति·

नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वात् अलौकिकविभावादिशब्दव्यवहार्य्यैः ममैवैते शत्रोरेवैते तटस्थस्यैवैते, न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैः अभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्

---

बोध्यं तस्य स्थायित्वेनापरिभाषितत्वात्। अनेन सवासनायां रामादिरत्याद्यभेदारोप उक्तः। तादृशः सन् प्रमाता सीतादिविषयरतिमान् रामोऽहमित्याकारिकया वासनांशे धर्म्यंशे च प्रमया साधारण्येन रामादिरत्याद्यभेदेन गोचरीकृतः स न रस इत्यन्वयः। स्ववासनायां व्यञ्जनया रत्याद्यभेदारोपमुक्त्वा अनेन तथैव साक्षात्काररूप आरोप उक्तः रत्युपनयार्थं प्रथमं व्यञ्जनास्वीकारः। स च स्वस्मिन् रतिमद्रामाभेदारोपरूपविशिष्टवैशिष्ट्यज्ञानरूप एवेत्यवधेयम्। तदुक्तं दर्पणे "व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः। तत्प्रभावेण यस्यासन् पार्थोधिप्लवनादयः। प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ॥" इति। साधारणीकृतिः सामाजिके हनूमदादिनायकाभेदारोपरूपसाधारण्यकारकः। यस्य हनूमतः पाथोधिप्लवनादयः आसन् तदभेदेन प्रमाता स्वात्मानं तस्य व्यापारस्य प्रभावेण प्रतिपद्यते इत्यर्थः। अत्र प्रमातेति कर्तृतृजन्तनिर्देशोऽपि भावप्रधानत्वात् प्रमापर एव न तु प्रमातृपुरुषपरः स्वाकार इवाभिन्नोऽपीत्युक्तया स्वाकारतादात्म्यस्य विषयस्य गोचरीकारकज्ञानाभिन्नत्वदृष्टान्तत्वात्। तादृशसाक्षात्कारस्वीकारश्चास्वादार्थमित्यवधेयम्। तादृशज्ञानस्य प्रमात्वञ्च वासनात्वेन्द्वाविशिष्टवासनांशे धर्म्यंशे च अत एव तादृशज्ञानस्य सविकल्पनिर्विकल्पकोभयरूपत्वं नृसिंहाकारत्वमग्रे व्यक्तीकरिष्यति। तादृशी वासना च न स्त्रीपुरुषाद्यनुरागाद्यनभिज्ञानां सामाजिकानामिति दर्शयन् तेषां विशेषणमुक्तं लौक इति। कारणादिभिरित्यादिपदात् कार्य्यसहकारिणोः परिग्रहः स्थाय्यनुमाने रत्याद्यनुमाने। तदुक्तं दर्पणे "सवासनानां सभ्यानां रसस्यास्वादनं भवेत्। निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः ॥" इति। कारणत्वादिपरिहारेण कारणादिशब्दव्यपदेश्यत्वपरिहारेणेत्यर्थः। विभावादीनां तादृशसंज्ञायां योगार्थमाह विभावादीति। विशेषेण भावयति ज्ञापयति इति भावः। अनुभवं जनयति इत्यनुभावः। विशेषेणाभितश्चारयति बोधयतीति व्यभिचारीति तथा चेदृशयोगार्थैं

लोके प्रमदादिभिः स्थाय्यनुमाने अभ्यासपाटववतां काव्ये

---

तस्या भाव्या जन्या इत्यर्थः। पुनः कीदृशेन भावकत्वव्यापारेण ? विभावादिसाधारणीकरणात्मना रामादिसम्बन्धिनां विभावादीनां सामाजिकसम्बन्धित्वरूपं रामसामाजिकसाधारण्यं दर्शयता इत्यर्थः। काव्यनाट्याभ्यां विभावादिज्ञाने सति जायमानो भावकत्वव्यापारो रामादेर्यथा सीतादिस्तथा ममापीत्याहार्य्यज्ञानं सामाजिकानां जनयतीत्यर्थः। तदुक्तं दर्पणे "परस्य न परस्येति ममेति न ममेति च। तदास्वादे विभावादेः परिच्छेदो न जायते ॥" इति। परस्येत्यादौ सर्वत्र परस्यैवेत्यादिरर्थः। तेन सीतादावुभयसाधारण्यज्ञानं पर्य्यवस्यति। अत एव ममैवेति न ममैवेति इत्याद्येवकारगर्भेण सम्बन्धविशेषस्वीकारपरिहारनियमाभावेन सीतादौ रामसामाजिकयोः साधारण्यबोधमग्रेऽप्यभिनवगुप्तमते वक्ष्यति। भोगेन कीदृशेन ? सत्वस्य सत्वगुणस्योद्रेकेण गुणान्तरं तिरोधायाविर्भावेण या प्रकाशानन्दमयी स्वप्रकाशानन्दस्वरूपा संवित् ज्ञानं तस्या विश्रान्तिः सत्ताकृदभिहितभावत्वात् विश्रान्ता वर्त्तमाना संविदित्यर्थः। तत्मतत्त्वेन तत्स्वरूपेणेत्यर्थः। सतत्त्वस्वरूपयोः पर्य्यायः यथा "पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम्" इति विरोधालङ्कारोदाहरणे। अत्र मते पूर्वमते च रत्यादिसाक्षात्कारार्थं व्यापारान्तरकल्पनमप्रामाणिकमिति हृदयेन व्याचक्षाणस्य अभिनवगुप्ताचार्य्यस्य मतम्। स्वाभिमतमाह।

लोक इति। अत्र "रामोऽहं सीताविषयरतिमान्" इत्याहार्य्यज्ञानं सामाजिकानां प्रथमं व्यञ्जनयैव जायते। तत्र सीतादिविषयरामादिनिष्ठरत्यादेरारोपाधिकरणस्ववासनाख्यगुणविशेषविशिष्टज्ञानरूपं रत्यारोपांशे सविकल्पकं वासनात्वे इन्द्राविषयकतया च वासनांशे निर्विकल्पकरूपं नृसिंहाकारं शुक्तिमति भूतले भूतलं रजतवदितिवत्। ततस्तत्समानाकार एव साक्षात्कारो रसो वासनांशे संयुक्तसमवायेन रत्याद्यारोपांशे तु व्यञ्जनाधीनोपनयेनेति निष्कर्षः।

लोक इत्यादि। लोके संसारे प्रमदादिभिः रत्यादिकारणादिभिः स्थायिनो रत्यादेः अनुमाने अभ्यासपाटववतां सामाजिकानां वासनात्मतया स्थितोऽर्थात् गुणविशेषः साधारण्येन रामादीनामिव सामाजिकानामपि सम्बन्धितारूपेण साधारण्येन प्रतीतैस्तैरेव रत्यादिकारणादिभिः सीतादिभिरलौकिकं परिभावादिविभावादिशब्दव्यपदेश्यैः स्थायिरत्यादिभिः व्यक्तः रामादिनिष्ठस्थायिरत्यादिरूपोऽभिव्यक्तो व्यञ्जनया प्रतिपादित इत्यर्थः न तु वासनारूपगुणविशेषविशेषणमेव स्थायीति

तत्कालविगलितपरिमित-प्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इव अभिन्नोऽपि गोचरीकृतः चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्

---

योगरूढान्येतानि पदानीत्यर्थः। एतत्प्रदर्शनञ्च स्वरूपकथनमात्रं न तु रसोत्पत्तौ संज्ञया उपयोग इत्यर्थं बोध्यम्। साधारण्येन प्रतीतैरित्यस्य परिशेषेण विवृणोति सम्बन्धविशेषेति इत्युक्तरूपो यः सम्बन्धस्य विशेषेण स्वीकारपरिहारयोर्नियमो दर्शितैवकारार्थरूपस्तस्यानध्यवसायादित्यर्थः। सम्बन्धश्च सीतादिविभावादौ रामादेः स्वस्य च बोध्यः। इतरव्यवच्छेदरूपनियमविषयकस्य स्वीयत्वाद्यस्वीकारस्याकारमाह ममैवेते इति। एते विभावादयः शृङ्गारे सीताद्याः हास्ये हसनीया दर्शयिष्यमाणविदूषकादयः करुणेऽशीत्यादर्शयिष्यमाणमृतनायिकादयः रौद्रे क्रोधविषया दर्शयिष्यमाणार्जुनादयः वीरे जेतव्या दर्शयिष्यमाणरावणादयः भयानके भीतिजनका दर्शयिष्यमाणदुःषन्तादयः बीभत्से जुगुप्सिता दर्शयिष्यमाणप्रेतादयः अद्भुते विस्मयविषया दर्शयिष्यमाणमहापुरुषादयः शान्तेऽवसानीयं स्वमेव दर्शयिष्यमाणशान्तपुरुषः एवं तदुद्दिष्टकानुभवादयश्च। ईदृशस्य सामाजिकसम्बन्धविशेषस्वीकारनियमनस्य अनध्यवसायादित्यर्थः। एवं यस्य यस्य नायकस्य रामादेः सीतादयो विभावादयस्तस्य तस्यापि स्वस्य इव तेषु सम्बन्धविशेषस्वीकारानध्यवसायं दर्शयति शत्रोरेवैते तटस्थस्यैव एते इति द्विधा विभज्य उक्ता। तथाहि रौद्रे 'यस्य नायकस्य अश्वत्थामादेः क्रोधः स आलम्बनस्यार्जुनादेः शत्रुः वीरे यस्य नायकस्य इन्द्रजिदादेः जेतुमुत्साहः स आलम्बनस्य रामादेः शत्रुः भयानकस्य मृगादेर्भयं स भयजनकस्य आलम्बनस्य दुष्मन्तादेः शत्रुरिति रसत्रये त्रयो नायका आलम्बनस्य शत्रवः अन्यरसेषु च नायकालम्बनस्य शत्रुत्वोदासीनात्तटस्थ एवं शत्रुतटस्थाभ्यां सर्वे नायका उक्ताः। तस्य तस्य च एवंविधस्वीकारनियमानध्यवसायादित्यर्थः। एवं तन्मात्रीयत्वाभावस्वीकाररूपस्य सम्बन्धविशेषनियमपरिहारस्याप्यनध्यवसायमाह न ममैवेते इति यन्मात्रस्य नेत्यर्थः। एवं शत्रुतटस्थयोरपि बोध्यम्। इत्थमनध्यवसाये सीतादौ रामादेः स्वस्य च सम्बन्धित्वरूपं साधा-

अन्यत् सर्वमिव तिरोदधत् ब्रह्मास्वादमिव अनुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः। स च न कार्य्यः विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्, नापि ज्ञाप्यः सिद्धस्य तस्यासम्भवात्। अपितु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कार-

---

रणं पर्य्यवस्यति तदाह साधारण्येन प्रतीतैरिति। अत्र स्वसम्बन्धितया सीतादिप्रमाता सामाजिकस्तद्गतत्वेन स्थितोऽपि साधारणस्य दर्शितरीत्या रामसामाजिकोभयसम्बन्धितया प्रतीतरूपसाधारणोपायस्य सीतादिविभावादेर्बलात्साधारण्येन रामादिरत्याद्यभेदेन प्रमाता प्रमया गोचरीकृत इत्यर्थः। स्ववासनायां रत्याद्यभेदारोपे इत्यादावपि स्वीयत्वं भाषते इत्यभिप्रायः। उक्तं च दर्पणे "साधारण्येन रत्यादिरपि तद्वत्प्रतीयते" इति न केवलं सीतादिरेव स्वसम्बन्धितारूपसाधारण्येन प्रतीयते अपितु रत्यादिरूपतद्विदित्यर्थः प्रमात्मकेन प्रमाता कीदृशेन तत्काले प्रमोत्पत्तिकाले विगलितो यः सामाजिकस्य परिमितप्रमातृभावो रामादिरत्याद्यनाश्रयत्वेन स्वग्राह्यिताराहित्यं रामादिरत्याद्याश्रयत्वेनैव वासनाग्राह्यत्वरूपपरिच्छिन्नताशून्यतारूपोऽपरिच्छिन्नताको यस्य तादृशेन परिमितभावो हि ज्ञानस्य स्वग्राह्यिताराहित्यं रामादिरत्याद्याश्रयत्वेनैव स्वग्राह्यत्वमिति यावत्। तद्वशेन तदधीनतया उन्मीषितो जातो विषयान्तरविषयतारूपेण वेद्यान्तरसम्पर्केण शून्योऽपरिमितभावो वासनात्वेनैव वासनाग्राह्यत्वरूपपरिच्छिन्नता शून्यतारूपोऽपरिच्छिन्नभावो यस्य तादृशेन परिमितभावो हि ज्ञानस्य तत्वेन तद्वस्तुविषयकतावासनया रामादिरत्यादित्वेन ग्रहे तु तत्विगलनम् एतादृशापरोपे सर्वसामाजिकानुभावं प्रमाणयन् प्रमाचेत्यस्य विशेषणान्तरमाह सकलेति। एकेन गृहीतस्यापरेणापि ग्रहः संवादः साधारण्येन रामादिनिष्ठरत्याद्यभेदेन रामादिरत्याद्यभेदेन अभिव्यक्तो वासनात्मकगुणविशेषः कीदृशः? अभिन्नोऽपि प्रमातृतोऽभिन्नोऽपि परिणामवादाभिप्रायेणेदमुक्तं वासनारत्याद्योरेव तादृशप्रमात्वेन परिणतत्वाङ्गीकारेण अभेदाङ्गीकारात्। तत्र स्वाकारवादे दृष्टान्तमाह स्वाकार इवेति ज्ञानस्यैव आकारविषया न तु ज्ञानाद्भिन्न इति बन्मतं चर्व्यमाणेति प्राणो रसता चर्वणा च साक्षात्कारः चर्वणादशायामेव रस इत्यर्थः। एतादृशसाक्षात्कारश्च काव्ये शब्दस्य नाट्ये च प्रत्यक्षस्य विभावादिज्ञानस्य स्थितिपर्य्यन्तमेव तिष्ठतीत्याह विभावादीति विभावादिज्ञाने इत्यर्थः। एवञ्च

कज्ञापकाभ्यामन्यत् क्व दृष्टम् ? इति चेत्, न क्वचित् दृष्टमिति अलौकिकसिद्धेर्भूषणमेतत् न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्य्योऽप्युच्यताम्। लौकिकप्रत्यक्षादि-प्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहित-स्वात्ममात्रपर्य्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तर-स्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्। तद्ग्राहकञ्च न

---

द्वयो तुल्यकालं नाशेऽनुभवबलात् स्वीकृते विभावादिज्ञानमपेक्षाबुद्धिवदनेकक्षणस्थायी-त्वङ्गीकृतं तादृशसाक्षात्कारस्य स्वसंवेदनसाध्यतायां वक्ष्यमाणत्वेन मातृमितिमेय-प्रत्यक्षरूपत्वमतः सकलतादृशविषयविशिष्ट एव रस इति स्थिते तत्र दृष्टान्तमाह पानकेति। मरिचकर्पूरादिमिश्रिता आमिक्षा पानकं तदीयरसस्य नानाद्रव्यरसरूपो विभिन्न एकत्वाभिमानेन यथा चर्व्यते तथा नानाविषयविशिष्टस्य रसस्य एकीभावेन चर्व्यमाणत्वेत्यर्थः। तदुक्तं दर्पणे "प्रतीयमानं प्रथमं प्रत्येकं हेतुरुच्यते। ततः संवलितः सर्वो विभावादिः सचेतसाम्। प्रमाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥" इति। अलौकिके तु चमत्कार आस्वादः। स च रसस्वरूप एवेत्यतो यद्यपि तस्य तत्कारित्वानुपपत्तिस्तथापि वासनारूपतादशायां कारणत्वं रसतादशायां कार्य्यत्वं परिणामवादाश्रयणात् बोध्यम्। "विभावानुभावव्यभिचारिसंयोगाद्रस-निष्पत्तिः" इति भरतकारिकया विभावादीनां ज्ञानस्य रसं प्रति हेतुत्वम्। रसे च तत्तद्धेतुकत्वं पञ्चम्या प्राप्तम्। तद्धेतुकत्वञ्च तत्कार्य्यत्वं तत्ज्ञाप्यत्वं वा द्वयमपि अन्य-विलक्षणमिति साधयितुं कार्य्यान्तरवैलक्षण्यात् विभावादिज्ञानकार्य्यत्वाभावमापा-ततः साधयति स चेति। न कार्य्यो न विभावादिज्ञानकार्य्यः। ज्ञाननिष्ठाज्ञान-कार्य्यता हि जनकज्ञाननाशक्षणस्थायिता व्याप्ताऽतो विभावादिज्ञानकार्य्यत्वे विभा-वादिज्ञानविनाशक्षणेऽपि रससम्भवस्य रसस्थितेः प्रसङ्गादित्यर्थः। द्वयोरेकदैव नाशस्यानुभविकस्य विभावादिजीवितावधिरित्यनेन उक्तत्वात्। विभावादिपदञ्च तज्ज्ञानपरम्। इत्यसन्यसाधारणं विभावादिज्ञानकार्य्यत्वमापाततः खण्डयित्वा अन्यसाधारणं तज्ज्ञाप्यत्वमपि खण्डयति नापि ज्ञाप्य इति। परेण साक्षात् ज्ञाप्य-रूपकार्य्यो हि स्वज्ञानात् पूर्वं स्थितो भवति आलोकादिज्ञाप्यघटादिवत् सिद्धस्य स्वज्ञानात् पूर्वं स्थितस्येत्यर्थः। स्वसंवेदनमात्रसिद्धो हि रत्यादिसाक्षात्कारात्मको

निर्विकल्पकं विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकं चर्व्यमाणस्य अलौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावस्वरूपस्य च उभयात्मकत्वमपि पूर्ववत् लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्य्याभिनवगुप्तपादाः।

---

रसः न तादृश इत्यर्थः। ननु तत्पूर्वमस्थायिनस्तस्य कदा सत्ता? इत्यत आह अपित्विति। चर्वणीयः सन्नेव रस इति शेषः। तथाच तद्दशापन्नस्यैव रसत्वं मतस्य विभावादिज्ञानजन्यज्ञानान्तरेणाग्रहान्न स विभावादिज्ञानज्ञाप्य इत्यर्थः। ननु रसस्य विभावादिज्ञानजन्यत्वज्ञाप्यत्वाभावे साधिते विभावादिज्ञानेऽपि तद्धेतुत्वाभावः साधितो भवति तथाच विभावानुभावेत्यादि भरतसूत्रात् कथं विभावादिज्ञानस्य रसनिष्पादकत्वमुक्तम्? इत्याशङ्कते कारकज्ञापकेति। अलौकिकेति अलौकिकसिद्धेर्लोकव्यवहार्य्यान्यपदार्थविलक्षणसिद्धेः। तथाच लोकदृष्टसाधारणकार्य्यताज्ञाप्यतानिरासात् रसे विलक्षणकार्य्यत्वज्ञाप्यत्वयोः सिद्धेः विभावादिज्ञाने च तद्धेतुत्वस्य विलक्षणस्य सिद्धेर्लोके अदृष्टत्वं भूषणमित्यर्थः। एवञ्च रसे विभावादिज्ञानकार्य्यत्वज्ञाप्यत्वे विभावादिज्ञाने च तत्कारकत्वज्ञापकत्वे लोकदृष्टसाधारणे एव आपाततः खण्डिते वस्तुतस्तु तत्कार्य्यत्वज्ञाप्यत्वतत्कारकत्वज्ञापकत्वानि लोकसिद्धान्येव तत्र तत्र सन्तीति हृदयेनाह चर्वणानिष्पत्त्येति। निष्पत्तिर्जन्यता विभावादिज्ञाननाशक्षणे रसस्य स्थित्यभावेऽपि विभावादिज्ञानोत्तरनिष्पन्नत्वग्रहस्यान्वयव्यतिरेकग्रहरूपत्वात्ततस्तज्जन्यतेत्यर्थः। उपचरितेति चर्व्यमाणरत्यादेरेव रसत्वस्वीकृतत्वात् रत्यंशे च विभावादिज्ञानाजन्यत्वादुपचारः निष्पत्तेरित्युपचारे हेतुरुक्तो निष्पत्त्या निष्पत्तिरिति अनन्वयस्य न प्रसङ्गः स्वज्ञानात् पूर्वमवस्थितत्वेऽपि स्वेनैव स्वविषयीकरणरूपां ज्ञाप्यतामपि लोके दृष्टामेव साधयति लौकिकेति। लौकिकं यत्प्रत्यक्षादिप्रमाणं चक्षुरादि तत्ताटस्थ्येन तन्निरपेक्षेणार्थाद् योगधर्मादववोधशाली यो मितपरिभाषितो योगी तस्य ध्यानरूपं यज्ज्ञानं तच्च वेद्यान्तरस्य परमात्मेतरविषयस्य संस्पर्शेन रहितं स्वात्ममात्रपर्य्यवसितस्य परमात्मादेस्तयाद्विषः परिमितेतरयोगिनः संवेदनं ज्ञानं ताभ्यां विलक्षणस्य लोकोत्तरस्य लौकिकज्ञानविलक्षणस्य स्वसंवेदनस्य स्वात्मकसंवेदनस्य स्वयमेव गोचर इति प्रत्येतव्योऽप्युच्यतामित्यर्थः। इदानीं नृसिंहाकाररूपस्य तस्य वासनांशे निर्विकल्पकत्वरत्याद्यारोप-

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातादयः अनुभावाः शृङ्गारस्येव करुणभयानकयोः। चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।

---

रामाद्यारोपांशे च सविकल्पकसत्त्वेऽपीति द्वयेन निर्विकल्पकान्तरवैलक्षण्यात् निर्विकल्पकत्वाभावं सविकल्पकान्तरवैलक्षण्यात् सविकल्पत्वाभावञ्चापाततः साधयति तद्ग्राहकमिति। ग्राह्यग्राहकयोरेकत्वात्तदात्मको ग्रह इत्यर्थः। विभावादिपरामर्शेति परामर्शो ज्ञानं प्रधानं जनकं यस्येति बहुव्रीहिणा विभावादिज्ञानजन्यत्वादित्यर्थः। ज्ञानाजन्यं हि अन्यनिर्विकल्पकं तद्विलक्षणत्वात् न निर्विकल्पत्वमित्यर्थः। अतोऽत्र रत्यादिवैशिष्ट्यविषयत्वादिति हेतुः सम्भवन्नपि नोपात्तः स्वसंवेदनेति स्वात्मकसंवेदनेन सिद्धत्वाद ग्राह्यत्वादित्यर्थः। यो हि ज्ञानग्राहिसविकल्पकोऽनुव्यवसायात्माग्राह्यस्य व्यवसायस्य तद्भिन्नत्वमेव लोकदृष्टसाधारणं एतद्ग्राह्यस्य तु ग्रहाभिन्नत्वेन लोकदृष्टवैलक्षण्यात्तद्ग्रहस्य न सविकल्पत्वमित्यर्थः। आंशिकोभयरूपत्वमिति द्वयमिदानीमाविष्कुर्वते उभयेति उभयोर्निर्विकल्पकसविकल्पकयोरभावौ रूप्येते ज्ञायेते यत्र इति अधिकरणे घञा उभयाभावविशिष्टस्येत्यर्थः। अभावपदं वा भिन्नपरं उभयभिन्नरूपस्येत्यर्थः न तु विरोधमित्यत्रापि अवगमयतीत्यस्यान्वयः।

भरतसूत्रे विभावानुभावव्यभिचारिणां द्वन्द्वबलात् साहित्यप्राप्त्या परस्परसहितानां रसनिष्पादकत्वमिति मुनेरभिप्राये बीजमिदानीमाह।

व्याघ्रादय इति। भयानकस्येव वीराद्भुतरौद्राणामपि व्याघ्रादयो विभावा इत्यन्वये व्याघ्रादीनामेतच्चतुष्टयसाधारणं विभावत्वं विधेयं एवमुत्तरद्वयेऽप्यनुभावत्वव्यभिचारित्वे विधेये बोध्ये। वीरस्य तन्मारणोत्साहेन विचित्रजन्तुज्ञानात् विस्मयेन प्राणिहिंसकत्वज्ञानात् क्रोधेन च तस्य तत तद्विभावत्वसिद्धेः वीरस्य योग्यविभावनिर्जिते चिन्ता तस्या वीरोत्साहव्यभिचारिभावत्वं बोध्यम्। पृथगनैकान्तिकत्वादिति अनैकान्तिकत्वमत्रानेकसाधारण्यं पृथक् प्रत्येकस्य अनेकभयानकादिरसरूपेषु फलेषु जनकतासाधारण्यात् परस्परप्रतिबन्धेनैकस्यापि फलस्यानुदयप्रसङ्गादित्यर्थः। मिलिता इति। तेन एवं विधाने ऐकान्तिकस्यैकस्य निर्देशसत्त्वेऽप्यव्यभिचार्यपरमिलनात्प्रतिनियतरसव्यञ्जकमिति भावः। ननु अनैकान्तिकेनाव्यभिचार्यपरापेक्षा युक्तैव अन्यथा प्रतिनियतफलानुत्पत्तेः अव्यभिचारिणा तु अनैकान्तिकपरा-

वियदलिमलिनाम्बुगर्भमेघं,
मधुकरकोकिलकूजितैर्दिशां श्रीः।
धरणिरभिनवाङ्कुराङ्कटङ्का,
प्रणतिपरे दयिते प्रसीद मुग्धे !॥

इत्यादौ

परिम्लदितमृणालीम्लानमङ्गं, प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु।

---

पेचणरूपं मिलनं किमर्थं स्वीक्रियते एकेनैव प्रतिनियतरसव्यञ्जनसम्भवादिति चेन्न। अन्वयव्यतिरेकसिद्धकारणकस्य तस्यापेक्षां विना अव्यभिचारिण एकस्मात् फलानुत्पत्तेः। नन्वेवं यत्रान्यतरस्यैव निर्देशो न मिलितानां तत्र कथं रसोत्पत्तिः? इत्यत आह।

वियदलीत्यादि श्लोकत्रयं यद्यपीत्यादिना वक्ष्यमाणेन निर्दिष्टानां विभावानामनुभावानामौत्सुक्यादिव्यभिचारिणाञ्च यथासङ्ख्यं श्लोकत्रये स्थितिरिति बोध्यम्। वियदलीत्यादि हे मुग्धे! कार्याकार्यानभिज्ञे प्रणतिपरे दयिते सति एवं प्रसीद तदैव तव गौरवरक्षा स्यात् स्वयं प्रसादे तु न गौरवरक्षा स्यादिति भावः। स्वयं-प्रसादस्य हेतून् दर्शयति वियदिति। अलिवन्मलिनोऽम्बुगर्भो मेघो यत्र वियत्तादृशम् अनेनोद्दीपकेनोद्दीप्तसुखीस्थातुं न शक्ष्यसीति सूचितं मधुकरा एव कोकिला सुस्वरत्वात् तेषां कूजितैर्दिशां श्रीर्जातेति शेषः। अनेनोद्दीपकेन दिशः पश्यन्ती तिर्य्यक्-सुखी स्थातुं न शक्ष्यसीति सूचितम् अभिनवाङ्कुरा एव अङ्कस्थिताष्टङ्काः पाषाण-दारणा यस्यां धरणिस्तादृशी पाषाणदारणत्वेन पाषाणतुल्यकठिनमानिनीजन-हृदयस्यापि दारणत्वं सूचितम् अभिनवाङ्कुरस्यात्यन्तोद्दीपकत्वात् तेनाधोमुख्यपि स्थातुं न शक्ष्यसीति सूचितम् अत्र मानिनीनिष्ठरतेर्नायक आलम्बनं मेघादयो नायकप्रणतिश्च उद्दीपनानीति विभावानामेव स्थितिः।

परिम्लदितेति। प्रकरणोपात्ताया मालत्या अङ्गं परिम्लदिता प्राप्तमर्दा मृणालीव म्लानं क्रियासु परिवारस्य सखीजनस्य प्रार्थनाभिर्वह्वीभिरेकैव कथमपि प्रवृत्तिरित्यर्थः। क्रियायामिति पाठे तु क्रियायामेकस्यां प्रवृत्तिरित्यर्थः। अभि-नवेति च्छेदविशेषणम् अभिनवच्छिन्नेत्यर्थः तस्याधिकपाण्डुत्वात् अत एव सद्यः

कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥

इत्यादौ

---

कृत्तद्विरददन्तच्छेदगौरस्य निष्कलङ्कस्य चन्द्रस्येव रमणीयः कपोलः अवाङ्मान्यादीनां मालतीनिष्ठरत्यनुभावानामेव स्थितिः। दूरादित्यादि निराकरणेन प्रसादनान्निवृत्त्या अपक्रान्तस्य नायकस्य पुनरागमने जातभावाया मानिन्याः चक्षुः क्रियावर्णनमिदं दूरादिति सप्तम्यर्थे पञ्चमी। तथाच जातागसि प्रेयसि दूरे स्थिते चक्षुरुत्सुकमौत्सुक्यसूचकं सहसाप्रसारणरूपक्रियावदित्यर्थः। आगमने विलम्बासहिष्णुता च औत्सुक्यम् इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुतेति तल्लक्षणात्, आगते सन्निहितोपस्थिते विवलितं किञ्चित् सङ्कोचितम्। तत्र निराकरणजव्रीड़या स्फारितं निराकरणाधीनतद्दुःखसम्भावनापगमेन हर्षात् चाटुं विनैवाश्लेषे पूर्वकोपाविर्भावादरुणम् अञ्चिता आकुञ्चिता भ्रूलता चाटुं विनैव उत्तरोत्तरप्रवृत्त्या असूयया सा च अमर्षरूपव्यभिचारिभावात्मनः कोपात् भिन्नैव "निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता" इत्यमर्षस्य असूयान्यगुणोद्दीपनानामौद्धत्यादसहिष्णुतेत्यसूयायाश्च लक्षणभेदात् वसनग्रहणरूपाया नायकादेरेवात्र असहिष्णुता बोध्या। व्यतिकरः समूहः ईक्षणपदमत्र गोलकपरं चक्षुः पदं तेजःपरम् अतश्चक्षुरीक्षणयोर्भेदः पूर्वं क्षणादिति पाठस्त्वनुपपत्तिरहित एव बाष्पाम्बुपूर्णता च कोपोत्तरप्रसादात् तथैवानुभवसिद्धत्वात्। प्रसादश्च व्यभिचारिभावमध्ये हर्षत्वेन गणितोऽवधेयः। पूर्वोक्तश्लोकद्वयं यथाक्रमं विभावानुभावावत्र श्लोके च तत्तत्क्रियायां दर्शितान् व्यभिचारिभावान् केवलान् दर्शयति यद्यपीत्यादि। केवलानाम् इति असमस्तानामित्यर्थः। तेन वियदलीत्यादौ नायिकाप्रसादस्य कोपत्यागरूपत्वेऽनुभावस्य हर्षरूपत्वे तु व्यभिचारिभावस्य स्थितावपि दूरादुत्सुकतामित्यादौ च नायिकारतेर्व्यभिचारिणामिवालम्बनस्य प्रेयसस्तदागमनसंश्लेषादीनामुद्दीपनानाञ्च स्थितावपि केवलत्वं न च व्रीड़ादीनामपि व्यञ्जत्वात्। कथं शब्दावाच्यत्वेऽपि स्थितिरन्यथा व्यञ्जस्यापि स्थितत्वे सर्वत्रैव विततासम्भवेन केवलत्वव्याघातादिति वाच्यम्? विवलितत्वादीनामनन्यप्रयोजनत्वेन झटिति व्रीड़ादिप्रत्यायकत्वात् व्रीड़ादीनामगूढ़त्वेन वाच्यायमानत्वात् वाच्यतैवेत्यभिप्रायात् असाधारणत्वादिति वियदलीत्यादौ प्रसादप्रार्थनया दूरादुत्सुकमित्यादौ तु शब्देनैव मानिनीत्वाभे परिस्फुटितेत्यादौ च प्रकरण-

दूरादुत्सुकमागते विवलितं, सम्भाषिणि स्फारितं,
संश्लिष्यत्यरुणं, गृहीतवसने किञ्चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो ! प्रपञ्चचतुरं जातागसि प्रेयसि ॥

इत्यादौ च

यद्यपि विभावानामनुभावानामौत्सुक्यव्रीड़ाहर्षकोपासूयाप्रसादानाञ्च व्यभिचारिणां केवलानामत्र स्थितिः, तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति । तद्विशेषानाह

---

विरहिणीत्वलाभे तत्तद्विभावादीनां शृङ्गारमात्रीयत्वनिर्णयादसाधारण्यम् अन्यतमद्वयेति द्वयत्वम् अकिञ्चित्करम् अनुपात्तापराविकत्व इत्यर्थः । आक्षेपश्चात्र व्यञ्जना । तथाहि वियदलीत्यादौ प्रसीदेत्यनेन कोपत्यागहर्षयोरनुभावव्यभिचारिणोरेकस्य वाच्यत्वमन्यस्य तदङ्गत्वमिति वितयसत्वम् । परिमृदितेत्यादौ चाङ्गम्लान्याद्यन्यस्य कष्टप्रवृत्त्या आलम्बनस्य कपोलपाण्डुत्वेन चिन्तायाश्च व्यभिचारिभावानां व्यञ्जनाचिन्तयैव चिन्त्यस्य माधवस्यालम्बनस्य व्यञ्जनवितयसत्वम् ।

दूरादित्यादौ तु व्यङ्ग्यं हर्षव्यङ्ग्यमङ्गदानादिकमनुभावः प्रेयान् तत्प्रवत्यादयश्च विभावादय इति वितयं सत्वम् । अत्र व्यभिचारिभावविभावयोरिव विवलितत्वादीनामनुभावानामपि शब्दोपात्तत्वादेव समस्तस्थितौ कथमाक्षेप इति केचित् दूषयन्ति तन्न । विवलितत्वादीनां व्रीड़ादेरेवानुभावत्वात् न तु रतेरिति दोषोल्लासे स्वयमेव प्रकाशयिष्यमाणत्वात् तद्विशेषान् रसविशेषान् शृङ्गारहास्येत्यादि नाट्यग्रन्थकारिकत्वात् नाट्य इत्युक्तं काव्येऽपि इत्यपि बोध्यम् । एषां लक्षणानि विभावादयश्चोक्ताः ।

अन्यत्र तत्र शृङ्गारस्य यथा ।

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढ़ां वर्जयित्वा तु वेश्याञ्चाननुरागिणीम् ।
आलम्बनं नायिका स्युर्दक्षिणाद्याश्च नायकाः ॥

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥२६॥**

---

चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः।
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः।
स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः॥ इति।

तदागमनहेतुक इत्यत्र बहुव्रीहिणा मन्मथोद्भेदप्राप्तिजन्य इत्यर्थः। वीत-रागादीनां शृङ्गाररसानुद्बोधात्। वेश्यापरोढादयः रसाभासस्य आलम्बनानीति बोध्यम्। नायिकानिष्ठरतेरालम्बनान्याह दक्षिणाद्येति। दक्षिणो धर्म्यः आदिपदात् बालवृद्धरोगसमर्थेतरे बोध्याः। रोलम्बा भ्रमराः औग्र्यादित्यागः सम्भोगशृङ्गार एव विप्रलम्भे तु ता अपि व्यभिचारिणो बोध्याः। ईर्ष्यया नायिकया औग्र्यसम्भवात् जुगुप्सा चात्र स्वावमाननरूपो निर्वेदस्तस्यैव व्यभिचारिभावत्वेन प्राप्तत्वात् सम्भोगशृङ्गारे तद्योगात् यद्वा शृङ्गारे क्रोधस्येव अन्यरसस्थायिभावस्याप्यन्य-रसे व्यभिचारिभावत्वेन बीभत्सस्थायिभावस्य जुगुप्साया अपि अन्यरसे व्यभिचारि-भावत्वाङ्गीकारेण शृङ्गारे तस्य त्यागः।

हास्यस्य यथा। विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत्।
हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः॥
विकृताकारवाक्चेष्टं यदालोक्य हसेन्नरः।
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्॥
अनुभावोऽक्षिसङ्कोचवचनस्मेरतादयः।
निद्रालस्याऽवहित्याद्या अत्र स्युर्व्यभिचारिणः॥ इति।

करुणस्य यथा। इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम्।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः॥
अनुभावा दैवनिन्दाभूपातक्रन्दनादयः।
वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च॥

निर्वेदमोहौऽपस्मारव्याधिग्लानिस्मृतिश्रमाः ।
विषादजड़तोन्मादचिन्ताद्या व्यभिचारिणः ॥ इति ।

रौद्रस्य यथा । रौद्रः क्रोधः स्थायिभावः रक्तो रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ॥
मुष्टिप्रहारपतनविकृतच्छेदावदारणैश्चैव ।
संग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढ़ा ॥
भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनम् ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥
अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः ।
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ॥
मोहामर्षादयश्चात्र भावाः स्युर्व्यभिचारिणः ॥ इति ।

वीरस्य यथा । उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ॥
आलम्बनविभावाश्च विजेतव्यादयो मताः ।
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ॥
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ।
सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः ॥

स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्द्धेति । रोमाञ्चस्य व्यभिचारिभावत्वाभावेऽपि तन्निदानहर्षपरमत्र रोमाञ्चपदं बोध्यम् ।

स चेति ।

दानवीरो धर्मवीरो युद्धवीरो दयावीरश्चेति चतुर्द्धा इत्यर्थः दानादिषु चतुर्ष्व्प्युत्साहसम्भवात् ।

भयानकस्य यथा । भयानको भयस्थायिभावः कालाधिदैवतः ।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः ॥
यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा घोरतरास्तस्य तदत्रोद्दीपनं पुनः ॥
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् ।
पुलकस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ॥
जुगुप्सावेगसम्मोहसन्त्रासग्लानिदीनताः ।

तत्र शृङ्गारस्य द्वौ भेदौ, सम्भोगो विप्रलम्भश्च। तत्र आद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तभेदत्वात् अपरिच्छेद्य एक एव गण्यते। यथा

---

शङ्कापस्मारसंभ्रान्ति मृत्याद्या व्यभिचारिणः॥ इति।

पुलकहेतुत्वाच्च पुलकोऽश्रूद्गमः तेन रोमाञ्चस्य पृथगुपादानम्।

बीभत्सस्य यथा। जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः।

नीलवर्णो महाकालदैवतोऽयमुदाहृतः॥

दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम्।

तत्रैव कृमिपातादिरुद्दीपनमुदाहृतम्॥

निष्ठीवनास्यवलननेत्रसङ्कोचनादयः।

अनुभावास्तत्र मतास्तत्र स्युर्व्यभिचारिणः॥

मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः॥ इति।

तत्र स्युर्व्यभिचारिण इति पश्चादन्वितम्।

अद्भुतस्य यथा। अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः।

पीतवर्णो वस्तुलोकातिगमालम्बनं मतम्॥

गुणानां तस्य महिमा भवेदुद्दीपनं पुनः।

स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमाः॥

तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः।

वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः॥ इति।

सम्भोगो विप्रलम्भश्चेति तत्र दर्पणे।

दर्शनस्पर्शनादीनि निषेवेते विलासिनौ।

यत्रानुरक्तावन्योन्यं स सम्भोग उदाहृतः॥ इति।

सम्भोगलक्षणं तत्र नायिकानायकयोरेकस्मात्दर्शनाद्याभिव्यङ्ग्ये सम्भोगेऽव्याप्तं तथा रतिः प्रकृष्टा नाभीष्टं समुपैति विप्रलम्भोऽसाविति विप्रलम्भलक्षणञ्च तत्रोक्तं तदपि मानिन्या विप्रलम्भेऽव्याप्तमतोऽत्रैव लक्षणमाहुः। यथा—

सम्भोगः सुखसम्भिन्नो विप्रलम्भस्तु दुःखयुक्।

रतिस्तयोः प्रकर्षः स्यादाधिक्यात् सुखदुःखयोः॥ इति।

अनन्तभेदत्वादित्यनन्तभेदकत्वादित्यर्थः।

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥

तथा

त्वं मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखी नेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥

---

शून्यमित्यादि । लज्जानम्रमुखी नायिका कर्मिका निर्दिष्टक्रियाधारायाः कर्मी प्रियचुम्बनस्य कर्मबोध्या । नम्रमुखील्यव जाता इति अध्याहारादालोक्येत्यस्य तद-पेक्षया पूर्वकालता बोध्या लज्जत इति लज्जेति पचाद्यच्प्रत्ययान्तं तदपेक्षयैवा-लोक्येत्यव पूर्वकालतेति चक्रवर्त्ती अत्र कदाचित् पत्युर्जागरणे झटिति संवरणार्थं शय्योत्थाने किञ्चित्त्वं जागरणवारणाय शनैस्त्वं निद्रानिश्चये सुचिरं निर्वर्ण्य विस्रब्धं पतिनिश्चयेन धृताश्वासं प्रौढत्वं व्यावर्त्तते बालेति तेन लज्जोपपत्तिः प्रियेणेति निद्रायां चुम्बनादवगतप्रियभावेनेत्यर्थः । अत एव हर्षात् हसतेति अनुरागत्वनिश्चयाच्चिर-चुम्बनं नवोढात्वे तु चुम्बनादुद्वेगः स्यात् चुम्बनस्य पत्युरधमर्णत्वेन सङ्कल्पितत्वपरि-शोधनाय चिरचुम्बनमिति चक्रवर्त्ती । अत्र द्वयोरेव परस्परालम्बनिके रतौ सामाजिकेन स्वदारनायामारोपिते रसः द्वयोरेव निर्दिष्टाः क्रिया स्वस्वरतेरनुभावाः ता एव च परस्पररतेरुद्दीपनानि शून्यवासगृहन्तु द्वयोरेव उद्दीपनं बाध्या लज्जा नायिकारते व्यभिचारिभावः नायकरतेस्तु हास्यव्यङ्ग्यो हर्षं इति नायिकारतिप्रयोज्य-नायकरतावुदाहृत्य नायक रति प्रयोज्य नायिकारतावुदाहरति ।

त्वं मुग्धाक्षीति । सखीजनसाहित्येन शयनागारं प्रविश्य शय्योपान्तनिविष्टायां नायिकायां नायकनायिकासखीजनत्रयकृत्यवर्णनमिदं मुग्धाक्षीति । सौन्दर्य-लाभाय तेन विनैवेत्याद्युक्तिपुष्टिः कञ्चुलिकास्तन विधानपुटकं लक्ष्मीं शोभां वीटिकाग्रन्थिः सखी आलीजनस्य नायिकैव तस्या स्तनपिधानग्रन्थिस्पर्शेन हर्षात् स्मितत्वं नेत्रोत्सवः ईदृशीर्दृश्यसिद्ध्या आलीजनस्यानन्दः अलीकवचनं मृषाकार्य्यं-

अपरस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः। क्रमेण उदाहरणम्

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य वाह्यकरणव्यापाररोधी क्षणात्
आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥

---

गौरवकथनं नायिकाया लज्जामज्जनवारणाय तथा करणं शनैर्निर्याणञ्च सहसा निर्याणात् स्वक्रीड़ाप्रयोज्यनिर्याणज्ञाने लज्जोदयात्। अत्रापि दयोरेव रतिश्च सामाजिके दर्शितरीत्या रसोत्पत्तिः एतादृशोक्तिवीटिकास्पर्शौ नायकरतेरनुभावौ नेत्रोत्सवस्तु नायिकारतेः परस्पररत्यनुभावा एव परस्पररत्युद्दीपनानि ईदृशोक्तिनेत्रोत्सवव्यङ्ग्यौ हर्षौ दयोर्व्यभिचारिणौ। अपरस्त्विति। अस्यैतादृशपञ्चोपाधिभिः संकलनासम्भवादानन्त्याभाव इति हृदयम्। अत्र हेतुपदं ज्ञापकहेतुपरं न च विभावानुभावव्यभिचारिण एव ज्ञापकोऽभिलाषादीनां कथं ज्ञापकत्वमिति वाच्यम् अभिलाषस्य तत्प्राप्तीच्छारूपस्य नायकानुपगमने उत्कण्ठारूपस्य विरहस्य प्रत्युरपचारप्रयुक्तसानुरागद्वेषरूपाया ईर्ष्यायाश्च अनुभावत्वेन ज्ञापकत्वात् भाविनो वर्त्तमानस्य वा प्रियवैदेश्यरूपप्रवासस्य प्रियाप्राप्तिप्रतिबन्धकस्य शापस्य च उद्दीपनविभावत्वेन ज्ञापकहेतुत्वात् रतिकालीनदुःखोद्दीपकत्वेनैव उद्दीपकत्वं रतिस्तु अनुरागः स च अभिलाषस्य हेतुभूता इष्टसाधनत्वेनातिशयज्ञानधारैव। तत्राभिलाषहेतुकमाह।

प्रेमार्द्रा इति। श्मशाने माधवस्य पूर्वानुभूतरूपायां मालतीदृक्चेष्टायामियमाशंसा। मुग्धदृशो मालत्यास्तास्ताः पूर्वमनुभूताश्चेष्टा अर्थाद्दृक्चेष्टा मयि भवेयुः। मुग्धदृक्त्वोपादानं दृक्चेष्टालाभायैव। कीदृश्यो दृक्चेष्टाः? प्रेम्णाऽनुरागेण आर्द्राः स्निग्धाः प्रेमसूचकस्वरूपविशेषवत्य इत्यर्थः। प्रणयो बन्धुता तत्स्पृशस्तज्जनिकाः परिचयोऽनेकवारदर्शनं तस्मात् य उद्गाढ़ो रागस्तस्मादुदयो यासां तादृश्यः न तु बहुव्रीहिणा उद्गाढ़रागोदयजनिका इत्यर्थः। तदा चेष्टाया एव हेतुत्वलाभे परिचयस्य हेतुत्वकथनानुपपत्तेः। निसर्गमधुराः स्वभावसुन्दराः चेष्टाः मयि भवेयुः। आशंसापरिकल्पितास्वपि अन्तःकरणस्य आनन्दव्याप्तो लयः लीनता क्षणात् आनन्दमग्नता भवतीत्यर्थः किमुत दृष्टासु इत्यर्थः। कीदृशो लयः? वाह्यकरणानां चक्षुरादीनां व्यापारप्रतिबन्धकः। अत्र माधवनिष्ठरतेर्मुग्धदृङ्मालती आलम्बनं तदीयदृक-

अन्यत्र व्रजतीति का खलु कथा, नाप्यस्य तादृक् सुहृद्
यो मां नेच्छति, नागतश्च हह हा! कोऽयं विधेः प्रक्रमः!
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि॥

एषा विरहोत्कण्ठिता।

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।

---

चेष्टाः पूर्वदृष्टाः उद्दीपनानि तादृशचेष्टाशंसाव्यञ्जनेन मालतीप्राप्त्यभिलाषेण अनुभावेन व्यञ्जा मालत्याम् इष्टसाधनताज्ञानधारारूपानुरागात्मिका रतिः सामाजिकैः स्ववासनायामारोप्यमाणा विप्रलम्भ इत्यादिरीत्या उत्तरोत्तरेषु उदाहरणेषु बोध्यम्। विरहहेतुकमाह।

अन्यत्रेति। कृतसङ्केतस्य नायकस्य रात्रौ अनागमने तर्कयन्त्या नायिकाया वर्णनमिदम्। का कथा? नैवेयं कथेत्यर्थः। मद्विरक्तसुहृद्वाक्यादन्यत्र गमनमपि न सम्भाव्यमित्याह नाप्यस्येति। नेच्छति द्वेष्टि इत्यमनागमनहेतुभावेऽपि फलं न दृश्यते इत्यतः खिद्यामि विस्मिता च भवामीत्यर्थः। अनागत इत्यादि प्रक्रम इत्यन्तं खिद्यामीति बहुकल्पनया ग्रस्तचित्ता गृहाभ्यन्तरे बाला निशि निद्रां नाप्नोति इत्यन्वयः। कीदृशी? निष्पन्नपार्श्ववर्त्तनसमूहा। स्वान्तं चित्तम्। निशान्तं गृहम्।

एषेति।

प्रिया कृत्वा तु सङ्केतं यस्या नायाति सन्निधिम्।
सा मनोभवदुःखार्त्ता विरहोत्कण्ठिता मता॥ इति।

तल्लक्षणं तादृशोत्कण्ठा च उक्तानेककल्पनया निद्राविरहेण च व्यञ्जा नायिकानिष्ठरतेः अनुभावत्वेन व्यञ्जिकेति तद्धेतुकत्वम्। विप्रलम्भस्य ईर्ष्याहेतुकमाह सा पत्युरिति।

सापराधे पत्यौ कोपरीतिम् अजानन्त्या नायिकायाः क्रियां ब्रुवाणायाः सख्या उक्तिरियम्। प्रथमापराधोऽन्यनायिकासङ्गरूपापराधस्य प्रथमज्ञानम् अपराधप्राबल्यस्य निश्चयासम्भवात् सविभ्रमा या अङ्गवलनाऽङ्गभङ्गिः या च वक्रोक्तिः तयोः सूचनं प्रकाशनं न जानाति इत्यर्थः अज्ञाने च सखीकर्तृकोपदेशाः

स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥
प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिताः
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते?॥

---

भावी हेतुरुक्तः तद्ज्ञाने किं करोति इत्यत आह स्वच्छैरिति। स्वच्छत्वादिविशिष्टैः अश्रुभिः ज्ञापकैः केवलं रोदिति एव इति ज्ञायते इत्यर्थः। अश्रुविमोचनरूपे रोदने कर्मभूतानामश्रूणां चक्रवर्त्तिव्याख्यातकरणत्वानुपपत्त्या तृतीयायाः ज्ञापकतार्थत्वात् तन्मोचने तद्वैशिष्ट्यस्य अर्थत एव सिद्धत्वेन विशेषणे तृतीयाया अपि अनुपपत्तेः केवलपदात् कोपसूचकक्रियान्तरव्यवच्छेद एवकारात् रोदनायोग्यव्यवच्छेदे सततरोदनलाभः कोपात् चक्षुषि अञ्जनदानविरहात् अश्रूणां स्वच्छता चिन्तया पाण्डुत्वात् कोपेन स्वच्छता नैर्मल्यं रोदनेऽपि लज्जया परदर्शनशङ्कया नेत्रोत्पलपर्य्यस्तता अत्र नायिकारतेरनुभाव उपनायिकायाम् ईर्ष्याज्ञापको हेतुः। प्रवासहेतुकम् आह।

प्रस्थानमिति। भाविनि पतिप्रवासे ज्ञाते नायिकाया जीवितं प्रति उक्तिरियम्। हे भो जीवित! प्रियतमे प्रोषिते त्वया अवश्यं गन्तव्यम् अतो यातुं निश्चितचेतसि प्रियतमे सति तव सर्वे सुहृदः समं सहैव प्रस्थिताः त्वयापि गन्तव्ये सति प्रियसुहृद्वर्गः किं त्यज्यते? तस्मात्त्वरितेनैव गम्यतामिति भावः। निश्चितेति मत्वर्थत्वात् कर्त्तरि क्तः। सुहृदां प्रस्थानं दर्शयति प्रस्थानमिति। बहुदिनव्यापकैतद्वार्त्तया कार्श्यात् वलयानि भ्रष्टानीत्यर्थः। एकशरीरसम्बन्धित्वाच्च। प्रियसुहृत्त्वम् एव मस्रादीनामपि अस्रेषु पुनः प्रियसखत्वोपादानमधिकसौहार्द्यज्ञापनार्थं तच्च प्रियेण अपमानितायाः जीवितत्यागोद्यमे रोदनमेतदश्रुदर्शनेन आर्द्रेण प्रियेण चाटुकरणे जीवितरक्षणा स्वरक्षाकारित्वेन उपपद्यते एकहृदयवासित्वादधिकसौहार्दमिति तु चक्रवर्त्ती तन्न। अस्राणां चक्षुष्येव दर्शनात् हृदयवासे प्रमाणाभावात् धृतेरपि तथात्वाच्च। चित्तेन तु पुर एव गन्तुं व्यवसितं प्रस्थितन्तु समानमेवेत्यर्थः। अतः समं प्रस्थानस्य चित्तेऽपि न अनुपपत्तिः अत्र उद्दीपको ज्ञायमानपतिप्रवासो नायिकारतिव्यञ्जक इति असौ ज्ञापको हेतुः। शापहेतुकमाह।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्
आत्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥

हास्यादीनां क्रमेण उदाहरणम्।

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।
तारस्वरं प्रथितथूत्कमदात् प्रहारं
हाहा हतोऽहमिति रोदिति विष्णुशर्मा॥

---

त्वामालिख्येति। मेघद्वारा स्वनायिकां प्रति भर्तृशापप्रतिरुद्धतत्पार्श्वगमनस्य यक्षस्य उक्तिरियम्। प्रणयकुपितां त्वां शिलायां धातुरागैरालिख्य तव चरणपतितमात्मानं कर्तुं यावदिच्छामि तावदुपचितैर्वाष्पैः मे मम दृष्टिः मुहुरालुप्यते अतः क्रूरः कृतान्तो दैवं तस्मिन् कालेऽपि नौ आवयोः सङ्गमं न सहते इति अन्वयः। कुपिताया रक्तत्वाद्धातुरागैः लिखनम् औज्ज्वल्यार्थं शिलायां लिखनं चरणपातश्च द्वयमपीच्छाविषय एव लेखोऽपि न निष्पद्यते इति भावः। लेखनिष्पत्तौ चरणपातांशः एव इच्छाविषय इति केचित् चरणपातोऽपि लेखरूपस्य आत्मन एव इत्यपरे। कृतान्तो यमसिद्धान्तदैवाकुशलकर्मस्विति कोषः। अत्रालुप्यत इत्यन्तेन निराकाङ्क्षवाक्येन रसव्यञ्जन एव रसस्याप्यङ्गिसाकाङ्क्षत्वेन अङ्गत्वात् यथा उदाहरिष्यमाणे माने कोपपराङ्मुखीत्यादौ यदि च निराकाङ्क्षवाक्यत्वेन असूयाया अपि अङ्गित्वमनुभवेनावगाह्येते तदा अङ्गाङ्गिभावापन्नासूयारससङ्करध्वनिः अपि अयं रसस्याङ्गित्वेन रसध्वनितया उदाहृतमिति बोध्यम्। अत्र यक्षरते ज्ञापको हेतुः भर्तृशापः शापाङ्कितप्रतिबन्धे अनुरागवृद्धौ यक्षः शापादेव कथयतीति जानतामेव सामाजिकानां शापवर्द्धनीयतदीयरतिज्ञानात् शापाज्ञाने तु प्रवासहेतुकमेव इदम्। अत्र श्लोकवाक्यं चरणपातादिकञ्चानुभावः नायिका आलम्बनं तत्कोप उद्दीपनं कृतान्तेऽसूया व्यभिचारिभावः यक्षरतिः स्थायिभावः, तज्ज्ञ सामाजिके रसोत्पत्तिः। हास्यरसमुदाहरति।

आकुञ्च्येति। हतोऽहमित्यन्तं विष्णुशर्मणः रोदनकालीनोक्त्याकारः इति

हा मातस्त्वरितासि कुत्र ! किमिदं ! हा देवताः ! क्वाशिषः ?
धिक् ! प्राणान् पतितोऽशनिः, हुतवहस्तेऽङ्गेषु दग्धे दृशौ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरः
चित्रस्थानपि रोदयन्ति, शतधा कुर्वन्ति भित्तीरपि॥

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनाम्
अयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥

---

त्र्वाणो रोदिति अश्रूणि मोचयतीत्यर्थः। प्रतिपदं प्रत्यवयवरूपं प्रतिस्थानं मन्वा-म्मसां पृषतैः पविते मूर्ध्नि इत्यर्थः। घुत्कं लाला। अत्र एतत् वक्तृवृत्तिरुपहसनीयत्व-ज्ञानरूपी हासः स्थायिभावः रोदितीत्युक्तिरेवं तदग्रङ्गं वदनस्मेरतादिश्च अनुभावः तदग्रङ्गा चपलता अवहित्या च व्यभिचारिभावौ विष्णुशर्मा आलम्बनं तद्रोदनम् उद्दीपनम्। हासश्च सामाजिके रसोत्पत्तिः।

करुण मुदाहरति हा मातरिति। मदालसायां दह्यमानायां पौरस्त्रीरुदित-वर्णनमिदम्। पौराङ्गनानामित्यं गिरः चित्रस्थानपि रोदयन्ति भित्तीरपि शतधा कुर्वन्ति इत्यन्वयः। गिरः कीदृश्यः ? घर्घरामध्यरुद्धाः करुणाश्च ता इति कर्मधारयः। बहुरोदने तु स्वरभङ्गाद्द घर्घराः अस्मात् मध्यरुद्धाः करुणाः कातर्य्यसूचिका न तु करुणरसप्रतिपादिका इत्यर्थः। रसस्य स्वशब्दवाच्यत्वदोषत्वापत्तेः किमाकारमाह

हा मातरित्यादि। त्वरितासि कुत्र त्वरया गतासि ईदृशदुःखे अपि अनश्वरेषु स्वप्राणेषु शीघ्रनश्वरेषु मृतायां प्राणेषु च धिक् प्राणानिति निन्दा दृग्दाहे आका-राशुपलब्ध्या शोकाधिक्यसूचनाय तदुपादानं रुदतीनां दुःखविशेषरूपः शोकः स्थायिभावः रुदितं तदनुभावः घर्घररुदितसूचितः श्रमो दैन्यादिकश्च व्यभिचारि-भावः मृता आलम्बनं तद्दाहादिरुद्दीपनम्। शोकश्च सामाजिके रसोत्पत्तिः।

रौद्र मुदाहरति कृतमित्यादि। स्वयंमृतद्रोणशिरश्छेदक्रुद्धस्य अश्वत्थाम्नः उक्ति-रियम्। इदं स्वयं मृतम् अतः पितृशिरश्छेदरूपं गुरुपातकं यैर्भवद्भिरुद्गतायुधैरपि मर्य्यादाशून्यैः अतएव मनुजपशुभिः कृतम् अनुमतं दृष्टं वा नरकरिपुणा कृष्णेन सार्द्धं तेषामसृङ्मेदोमांसैः दिशां बलिमयमहङ्करोमि इत्यन्वयः। दिशां दिग्भव-

क्षुद्राः संत्रासमेते विजहित हरयः ! क्षुस्मशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे ! तिष्ठ ! पात्रं त्वमसि नहि रुषां, नन्वहं मेघनादः,
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥
ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।

---

भूतानामित्यर्थः । नरकासुररिपुत्वोपादानं तन्नाम्ना पापाधिकत्वसूचनाय तेन मत्क्रोधेन पापकारिणः पापारिर्वा सर्व एव नङ्क्ष्यन्तीति सूचितम् । अयमहमेतत्क्षणवर्त्ती एव अहं करोमि इत्यर्थः । अत्र अश्वत्थाम्नः क्रोधः स्थायिभावः उक्ततर्जनमनुभावः तर्जनव्यङ्ग्यो गर्वो व्यभिचारिभावः अर्जुनादयः आलम्बनानि गुरुपातककारणमुद्दीपनं क्रोधज्ञे सामाजिके रसोत्पत्तिः । नच अत्र कथं न वीररस इति वाच्यम् ? मनुजपशुत्वादिनिन्दया क्रोधस्यैव अनुभावत्वेन तथा तस्यैव व्यञ्जनान्नोत्साहस्य जेतव्यगुणप्रसंशाया एव तदनुभावत्वात् अतोऽत्र विभावव्यभिचारिणोः अनैकान्तिकत्वेऽपि असाधारणानुभावमिलनात् रौद्ररसाभिव्यक्तिरिति दर्शितमेव सूत्रे मिलिता निर्दिष्टा इत्यनेन । वीररसमुदाहरति क्षुद्रा इति ।

हे एते दृश्यमानाः क्षुद्रा हरयः ! सन्त्रासं विजहित यतो भिन्नशक्रेभकुम्भा असी सायका निष्पतन्तो मच्चापात् निर्गच्छन्तो युष्मद्देहेषु युष्मद्देहविषये परं केवलं लज्जां दधति न तु पाताभिमुख्यं पौरुषं वा युष्मद्देहेषु निष्पतन्त इति तु नान्वयः निष्पतनपदस्य पूर्वदेशविभाजकत्वेन देहरूपोत्तरदेशसंयोगार्थकत्वाभावात् निरुपसर्गपतनपदस्येव तथार्थत्वात् सौमित्रे इति मातृसम्बन्धकीर्त्तनम् अवीरत्वख्यापनाय अहं मेघनाद एतन्नाम्ना प्रसिद्धो वीर इत्यर्थः । रामन्तु किञ्चिदन्वेषयामि भ्रूभङ्गेत्यादिकं तत्र हेतुगर्भविशेषणं सोऽपि न सामस्त्येन अन्वेषणपात्रमिति भावः । किञ्चिद्भ्रूभङ्गेति तु नान्वयः तदपेक्षया दर्शितान्वये एव गर्वाधिक्यात् अत्र जेतव्यस्य रामस्य भ्रूभङ्गेत्यादि विशेषणं व्यङ्ग्या प्रशंसा उत्साहस्यैवानुभाव इति वीर एव रसः । रामम् आलम्बनं तद्गुणो जलधिनियमनमुद्दीपनं वानराद्युपेक्षया किञ्चिद्रामान्वेषणे न च व्यञ्जितो गर्वो व्यभिचारी इन्द्रजिन्निष्ठः उत्साहः स्थायिभावः । तज्ज्ञे सामाजिके रसोत्पत्तिः ।

भयानकमुदाहरति ग्रीवेति । मृगहननाय धावितरथं दुःषन्तं प्रति मृगावस्थां

शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥
उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कात्
अङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

---

दर्शयतः सारथेरुक्तिरियम्। प्राकरणिकी मृग उदग्रप्लुतत्वादुन्नटीत् फालत्वात् वियति बहुतरं प्रयाति उर्व्यां स्तोकमेतत् पश्य इत्यर्थः। मृगः कीदृशः अनुपतति पश्चाद्धावति स्यन्दने ग्रीवाभङ्गेण अभिरामं यथा स्यात्तथा मुहुर्दत्तदृष्टिरित्यन्वयः। तथा भूयसा महता पश्चार्द्धेन पूर्वकायं शरपतनभयात् प्रविष्टः कुञ्चिताङ्ग इत्यर्थः। न च स्थायिभावस्य भयस्य शब्दवाच्यत्वे रसत्वानुपपत्तिः स्वशब्दवाच्यतादोषश्चेति वाच्यम्? शरपतनपरिजिहीर्षाया एव अत्र भयपदार्थत्वात् अत्र मृगनिष्ठं भयं स्थायिभावः राजा आलम्बनं शरपतनमुद्दीपनं सर्वा मृगक्रिया अनुभावाः शब्दश्रवणं व्यभिचारि भयञ्च सामाजिके रसोत्पत्तिः।

बीभत्समुदाहरति उत्कृत्येति। श्मशाने शवं भुञ्जानं प्रेतं दृष्ट्वा माधवस्योक्तिरियम्। अयं प्रेतरङ्कः प्रेतेषु दरिद्रः अङ्कस्थात् क्रोड़स्थात् करङ्कात् मृतशरीरात् अस्थिसंस्थं स्थपुटगतमपि क्रव्यम् अव्यग्रं यथा स्यात्तथा अत्ति स्थपुटं ग्रन्थिः क्रव्यं मांसं क्रमशो भक्षणादव्यग्रत्वं तमेव क्रममाह प्रथमं कृत्तिं चर्म उत्कृत्योत्कृत्य अत्ति इत्यन्वयः। अथानन्तरम् अंसस्फिक् पृष्ठपिण्डाद्यवयवेषु सुलभानि पृथुना उत्सेधेन उत्फुल्लतया भूयांसि बहुलानि मांसानि जग्ध्वा भक्षयित्वा अत्ति इत्यर्थः अंसो भुजमूलं स्फिक् नितम्बः पिण्डपदस्य त्रिषु सम्बन्धः स्थपुटगतक्रव्यस्यापि अनुपेक्षणादार्त्तता दरिद्रता च आकृष्य अपरो नेष्यतीति भीत्या पर्य्यस्तनेत्रता स्थपुटगतक्रव्याकर्षणाय दशनप्रकटनम् अत्र माधवनिष्ठा जुगुप्सा स्थायिभावः भुज्यमानशव आलम्बनं तस्य पूतिगन्ध उद्दीपनं माधवस्य एवमुक्तिरेव अनुभावः एतदुक्तिव्यङ्ग्य आवेगो व्यभिचारी जुगुप्सा ज्ञातरि सामाजिके रसोत्पत्तिः।

चित्रं ! महानेष बतावतारः,
क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्य्यमहो ! प्रभावः
काऽप्याकृतिर्नूतन एष सर्गः ॥

एषां स्थायिभावानाह

अद्भुतमुदाहरति चित्रमिति । प्रकृष्टं महापुरुषं दृष्ट्वा कस्यचिदुक्तिरियम् । बत हर्षे अर्थादनुभूयमानमिदमवतारमहत्वादिकं चित्रं विलक्षणमित्यर्थः । न तु विस्मयोऽव चित्रपदार्थः तदा स्थायिभावस्य तस्य स्वशब्दवाच्यत्वदोषापत्तेः अव्यङ्ग्यत्वे रसोदाहरणतानुपपत्तेश्च एषा कान्तिः क्व ? अपि तु न क्वापि इत्यर्थः । लोकोत्तरं लोकदृष्टविलक्षणं तथा प्रभावोऽपि विलक्षण इत्याह अहो इति न तु आश्चर्य्ये अहो इति तद्दोषस्तादवस्थ्यापत्तेः सर्गः सृष्टिः अत एतद्वक्तृविस्मयः स्थायिभावः एतदुक्तिरेवानुभावः महापुरुष आलम्बनं तस्य कान्त्यादिकमुद्दीपनं बत पदार्थो हर्षव्यभिचारी विस्मयश्च सामाजिके रसोत्पत्तिः । रतिर्हासश्चेति उक्तलक्षणरसानां यथा सङ्ख्यमेते स्थायिभावा इत्यर्थः । रत्यादीनां लक्षणमुक्तं साहित्यदर्पणे ।

रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम् ।
वागवेशवैकृताद्यैश्चेतोविकाशो हास उच्यते ॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक् ।
कार्य्यारम्भेषु संरम्भ उत्साहः परिकीर्त्तितः ॥
प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधसंज्ञितः ।
रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम् ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते ।
विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु ।
विस्तारश्चेतसो यस्तु स विस्मय उदाहृतः ॥

प्रवणायितमुत्कट आवेशः स च इष्टसाधनत्वेन ज्ञानधारारूपोऽनुराग एव न तु इच्छाविशेषः अभिलाषस्यापि तादृशेच्छारूपत्वेन रतेरभिलाषज्ञाप्यत्वस्य उक्तस्यानुपपत्तेः यत्तु वक्ष्यमाणरसाभासोदाहरणे अत्र अनेककामुकविषयमभिलाषं व्यनक्तीति वक्ष्यते तत्र अभिलाषपदेन न रतिरुक्ता किन्तु रतिव्यञ्जकमभिलाषं

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चैव स्थायिभावाः प्रकीर्त्तिताः ॥३०

स्पष्टम् ।

व्यभिचारिणो हि एते—

निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः ३१
व्रीड़ा चपलता हर्ष आवेगो जड़ता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ३२

---

व्यनक्तीति तस्यार्थः । चेतोविकाश उपहसनीयत्वज्ञानं हास्यरूपसुखविकाशहेतुः । नाशादिभिः इति आदिपदात् रोगादिना शोच्यावस्थापरिग्रहः । वैक्लव्यं दुःखम् । संरम्भः सहर्षप्रवृत्तिः । तैक्ष्ण्यस्य अपचिकीर्षायाः प्रबोध उत्कटत्वम् । रौद्रशक्त्येति रौद्रः क्रुद्धस्तस्य शक्त्या क्रोधरूपया वैक्लव्यमत्र भाविदुःखे उत्कटो द्वेषः तस्य च परक्रोधजन्यभाविदुःखविषयत्वात् परक्रोधजन्यत्वं न तु परक्रोधजं दुःखमेव वैक्लव्यं परक्रोधाद्भाविनो दुःखस्य अनुत्पत्तिदशायामपि भीतिदर्शनात् एवञ्च भाविदुःखद्वेषरूपस्य अस्य वक्ष्यमाणव्यभिचारिभावात् त्रासात् भेदः मनः चोभात्मकदुःखविशेषरूपत्वात्तस्य शरपतनभयादित्यत्र तु शरपतनपरिजिहीर्षैव भयपदार्थो व्याख्यातः । विस्तारश्चेतस इति दृष्टहेतुभ्योऽसम्भाव्यत्वज्ञानं चेतोविस्तारः । एते स्थायिभावास्तत्तत्सवासनायामारोप्यो रस इति प्रकृष्टार्थः । समाख्यातास्तु नामत इति समाख्याता नाम्नैव सङ्क्षेपेण आख्याताः एषां लक्षणं तु अन्यत्र अन्वेष्टव्यमिति भावः । एषां लक्षणानि तु उक्तानि साहित्यदर्पणे तत्र निर्वेदस्य यथा—

तत्त्वज्ञानापदीर्ष्यादे निर्वेदः स्वावमाननम् ।
दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत् ॥ इति ।

ग्लानेर्यथा । रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा ।
ग्लानिर्निष्प्राणताकम्पकार्य्यानुत्साहितादिकृत् ॥ इति ।

**सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥३३॥**

---

शङ्काया यथा । परक्रौर्य्यात्मदोषाद्यैः शङ्काऽनर्थस्य चिन्तनम् ।
वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकास्यशोषकृत् ॥ इति ॥

असूयाया यथा । असूयाऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ इति ॥

मदस्य यथा । सम्मोहानन्दसम्भेदो मदो मद्योपयोगतः ।
अमुना चोत्तमः शेते मध्यो हसति गायति ॥
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ।
सम्भेदः सम्मेलनम् ।

श्रमस्य यथा । खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः । इति ।

आलस्यस्य यथा । आलस्यं श्रमगर्भाद्यैः जाड्यं जृम्भासितादिकृत् । इति ।

दैन्यस्य यथा । दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् । इति ।

चिन्ताया यथा । ध्यानं चिन्ताहितानाप्तेः शून्यताश्वासतापकृत् । इति ।

मोहस्य यथा । मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।
घूर्णनागावपतनभ्रमणादर्शनादिकृत् ॥ इति ॥
विचित्तता विचेतनत्वम् ।

स्मृतेर्यथा । सदृशज्ञानचिन्ताद्यैः भ्रूसमुन्नमनादिकृत् ।
स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥ इति ॥

धृतेर्यथा । ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः ।
सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ॥ इति ॥
ज्ञानमत्र धृतौ इष्टसाधनताज्ञानं तत्त्वज्ञानं वा ।

व्रीडाया यथा । सङ्कोचश्चेतसो व्रीडा वैवर्ण्याधोमुखत्वकृत् । इति ।
चेतसः सङ्कोचस्तेन प्रकृतकार्य्ये निष्कम्पप्रवृत्त्यजननम् ।

चपलताया यथा । मात्सर्य्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥ इति ॥

**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ३४**

---

हर्षस्य यथा। मनःप्रसादो हर्षः स्यादिष्टावाप्तिःस्तवादिभिः। इति।

आवेगस्य यथा। आवेगः सम्भ्रमो राजगजवर्षादिसम्भवः। इति।

सम्भ्रमो महत्त्वेन अनवज्ञेयत्वेन वा ज्ञानं गजवर्षयोः अपि अपकारकारित्व-ज्ञानात् तादृशं ज्ञानमिति बोध्यम्।

जड़ताया यथा। अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः।
अनिमिषनयनविलोकनतूष्णीम्भावादयस्तत्र॥ इति।

अप्रतिपत्तिरत्र कर्त्तव्यविमूढ़ता अतोऽत्र ज्ञानमात्रजननात्मकविचित्ततारूपात् मोहात् भेदः।

गर्वस्य यथा। गर्वो मदः प्रभावश्रीविद्यासत्कुलजन्मभिः।
अवज्ञा सविलासाङ्गदर्शनाविनयादिकृत्॥ इति।
अवज्ञा परस्मिन्।

विषादस्य यथा। उपायाभावजन्मातु विषादः सत्त्वसंचयः।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत्॥ इति॥

निष्प्राणताऽनौजस्यसत्त्वसङ्क्षयाणां त्रयाणामपि बलहानिरूपेऽपि तत्तदुक्त-कारणविशेषाधीनत्वेन ग्लानिदैन्यविषादानां भेदः।

औत्सुक्यस्य यथा। इष्टानवाप्ते रौत्सुक्यं कालक्षेपासहिष्णुता।
चित्ततापत्वराखेददीर्घनिःश्वसितादिकृत्॥ इति॥

निद्राया यथा। चेतः सम्मीलनं निद्रा श्रमक्लममदादिजा।
जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम्॥ इति॥

अपस्मारस्य यथा। मनः क्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः।
भूपातकम्पप्रस्वेदफेनलालादिकारणम्। इति।

अपस्मारोन्मादयो र्व्याधित्वेऽपि विप्रलम्भशृङ्गारे एतावेव व्याधी व्यभिचारिणौ अन्यत्रतु व्याध्यन्तरमपीति ज्ञापनार्थं विशेषोपादानम्।

सुप्तस्य यथा। सुप्तं निद्रायमाणस्य विषयानुभवश्च यः।
कोपावेगभयग्लानिसुखदुःखादिकारकः॥

निर्वेदस्य अमङ्गलप्रायस्य प्रथममनुपादेयत्वेऽपि उपादानं व्यभिचारित्वेऽपि स्थायिताऽभिधानार्थम्। तेन

**निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।**

---

विबोधस्य यथा। निद्रापगमहेतुभ्यो विबोधश्चेतनागमः।

जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत्॥ इति॥

अमर्षस्य यथा। निन्दाक्षेपापमानादेः रमर्षोऽभिनिविष्टता।

नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत्॥ इति॥

अभिनिविष्टता तन्निर्यातनोपायभावना तेनोत्कटापचिकीर्षारूपात् क्रोधरूपस्थायिभावात् भेदः।

अवहित्थस्य यथा। अवहित्थन्तु लज्जाद्यैर्हर्षाद्याकारगोपनम्। इति।

उग्रताया यथा। अधिक्षेपापमानादेः स्याच्चण्डत्वमुग्रतेति।

चण्डत्वं साहङ्कारतदसहिष्णुत्वं तेन उत्कटापचिकीर्षारूपात् क्रोधान्निन्दादिनिर्यातनोपायभावनारूपात् अमर्षाच्च भेदः।

मतेर्यथा। नीतिशास्त्रानुसृत्यादेरर्थं निर्धारणं मतिः।

स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवा॥ इति॥

व्याधेर्यथा। व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत्। इति।

उन्मादस्य यथा। चित्तस्य भ्रम उन्मादः कामशोकभयादिभिः।

अस्थानहासरुदितगीतशोकभयादिकृत्॥ इति॥

मरणस्य यथा। शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत्। इति।

इदन्तु मरणस्यैव लक्षणं व्यभिचारिभावत्वन्तु मरणस्य किन्तु चिन्ताकाङ्क्षितस्य जातप्रायस्य वा मरणस्यैव तदुक्तं

रसविच्छेदहेतुत्वात् मरणं नैव वर्ण्यते।

जातप्रायन्तु तद्वाच्यं चेतसाकाङ्क्षितं तथेति।

त्रासस्य यथा। निर्घातविद्युदुल्काद्यैस्त्रासकम्पादिकारकः॥ इति।

त्रासो मनःक्षोभः सोऽपि दुःखविशेष एव भयन्तु भाविदुःखद्वेष एवेति भेदः।

वितर्कस्य यथा।

तर्को विचारं सन्देहात् भ्रूशिरोऽङ्गुलिनर्त्तकः। इति।

यथा । अहौ वा हारे वा, कुसुमशयने वा दृषदि वा,
मणौ वा लोष्टे वा, बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा, मम समदृशो यान्ति दिवसाः
क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ॥

---

एषां कस्यचित् क्वचित् रसे व्यभिचारिभावत्वं योग्यतया स्वयमूह्यम् । अमङ्गलप्रायत्वादिति स्वावमाननस्य अमङ्गलत्वं नासंसारिण इत्यतः प्रायत्वादित्युक्तं स्थायित्वाभिधानार्थमिति स्थायिभावसन्निहितपाठादितिभावः ।

शान्तोऽपीति तस्य लक्षणं विभावादयश्चोक्ता दर्पणे यथा

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवत इति ॥

अत्र शमस्थायिभावत्वं मतान्तर एव ग्रन्थकृन्मतेतु निर्वेदस्थायिभावकत्वमेवोक्तं शमलक्षणन्तु शमोनिरीहावस्थाया मात्मविश्रान्तिजं सुखम् इति दर्पणकारेण उक्तं तत्र शमस्थायिभावकत्वपक्षे आलम्बनमाह ।

अनित्यत्वादिनाशेषवस्तुनिःसारता तथा ।
परमात्मस्वरूपं वा तस्यालम्बन मुच्यत इति ॥

निर्वेदस्थायिभावकत्वपक्षे तु स्वावमानरूपस्य निर्वेदस्य स्वमेवालम्बनम् उभयपक्ष एव उद्दीपनानि आह ।

पुण्याश्रमहरिक्षेत्रतीर्थारण्यवनादयः ।
महापुरुषसङ्गाद्या स्तस्योद्दीपनरूपिण इति ॥

अनुभाव व्यभिचारिणस्त्वाह

रोमाञ्चाद्याश्चानुभावा स्तथास्युर्व्यभिचारिणः ।
निर्वेदहर्षस्मरणमतिभूतदयादयः इति ॥

अत्र निर्वेदस्य व्यभिचारिभावत्वेन उक्तिः शमस्थायिभावकत्वपक्षे बोध्यम् । हर्षादीनां तु उभयपक्ष एव भूतदया च दैन्यविशेष एव परदुःखेन परोपचिकीर्षया वा स्वदुःखेन स्वानीजस्यस्य दयात्वेन दैन्यलक्षणाक्रान्तेः ।

अहौ वेति । अहि हारादिषु एकं रागार्हमपरं द्वेषार्हं तद्वय एव समदृशस्तुल्यदृष्टे र्मम पुण्ये क्वचिदरण्ये शिव शिव शिव इति प्रलपतो दिवसाः कदा यान्ति कदा यास्यन्तीत्यर्थः कदा यान्त्विति क्वचित् सुगमाक्षर एव पाठः । स्त्रैणं स्त्रीसमूहः

रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः ॥३५॥
भावः प्रोक्तः

आदिशब्दात् मुनिगुरुनृपपुत्रादिविषया। कान्ताविषया तु व्यक्ता शृङ्गारः। उदाहरणम्

कण्ठकोणविनिविष्टमीश ! ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि, मे न रोचते ॥

---

अत्र सर्वत्रैव अनास्थासूचकेन रागद्वेषराहित्येन शिवजपे प्रलापत्वारोपेण चात्मन उन्मत्तत्वसूचनात् स्वावमाननरूपस्य निर्वेदस्यैव प्रतीतिर्नतु शिवविषयो भावः अनास्थया तत्प्रतीते रापाततः प्रतिबोधात्पार्यन्तिकीतु तत्प्रतीतिरस्त्येव अत्र समाहृष्टिरिय मुक्तिरेव चानुभावः अवमाननीयं स्वमेवावालम्बनं पुण्यापुण्य मुद्दीपनम् एवम्भावेन दिवसगमनाशंसया सूचितहर्षरागद्वेषराहित्यम् चितप्रवृत्तिविरहलभ्यम् अनौजस्यरूपं दैन्यञ्च व्यभिचारिभावः निर्वेदश्च सामाजिके रसोत्पत्तिः।

रसभावतदाभासेति क्रमप्राप्तं रसनिरूपणान्तरं भावमाह।

रतिर्देवादीति। रतिरुक्तलक्षणैव देवविषयत्वे भक्तिरूपा पुत्रादिविषयत्वे स्नेहरूपेत्यादि बोध्यम् सर्वत्रैव मनसः प्रवणायितत्वसम्भवात् व्यभिचारी च न सर्वव्याध्यादेरतथात्वात् किन्तु असूयाहर्षादयो यथासम्भवं बोध्याः अञ्जितः स्वातन्त्र्येण व्यञ्जित इत्यर्थः स्वातन्त्र्यञ्च निराकाङ्क्षवाक्यव्यङ्ग्यत्वं साकाङ्क्षवाक्यव्यङ्ग्यत्वे तु निराकाङ्क्षवाक्यव्यङ्ग्यमपरं रसादिकं प्रति तस्य व्यभिचारिभावत्वमेव अत्रापि विभावानुभावव्यभिचारिण एव वाक्यार्थीभूता व्यञ्जका बोध्याः। पुत्रादीत्यादि शब्दादनुरागपात्राखिला एव बोध्याः। कान्ताविषयेति कान्तविषयापीति बोध्यं कान्तकान्तावपि नायकनायिकारूपावेव बोध्यौ तेन परस्त्रीपरपुरुषविषयरतेः शृङ्गाराभासस्यापि शृङ्गारत्वेनैव परिग्रहः। देवविषयरतिमुदाहरति कण्ठकोणेति। कोण एकदेशः हे ईश ! कालकूटमपि मे महामृतं यतस्तव कण्ठकोणकूटविनिविष्टम् एवमुपात्त मुपस्थित ममृतमपि न रोचते यदि भवद्वपुर्भेदवृत्ति भवति भेदपदस्य भिन्नपरं भवद्वपुषो भेदो यत्रेति बहुव्रीहिर्वा वृत्तिपदं समानाधिकरणपरं वा अत्र वक्तुरतेर्देवो महेश आलम्बनं तदीयत्व मुद्दीपनं विषेऽमृतत्वज्ञानमनुभावः

हरत्यघं सम्प्रति, हेतुरेष्यतः
शुभस्य, पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम्॥

एवमन्यदपि उदाहार्य्यम्। व्यभिचारी यथा

---

तदीयेशत्वज्ञानात्तद्विषयचिन्ता; व्यभिचारिभावः रतिज्ञे सामाजिके भावोत्पत्तिः। मुनिविषयां रति मुदाहरति।

हरत्यघमिति। स्वगृहागतं नारदं दृष्ट्वा श्रीकृष्णस्योक्तिरियम्। भवदीयदर्शनं कर्त्तृ कालत्रितयेऽपि भूतभाविवर्त्तमानकालेषु शरीरभाजां योग्यताम् अभीष्टवत्तां व्यनक्ति अनुमापयति तत्र वर्त्तमानकाले तद्वत्ताव्यञ्जनमाह।

हरत्यघमिति। पापचयस्याभीष्टत्वात् योग्यतां पुण्यवत्तामिति चक्रवर्त्तीव्याख्यानन्तु न युक्तं पापक्षयस्य पुण्यरूपत्वाभावात् भाविकाले योग्यताव्यञ्जनमाह हेतुरिति। ऐष्यतः आगमिष्यतः अतीतकाले योग्यताव्यञ्जनमाह पूर्वाचरितैरिति। उभयत्र शुभं पुण्यम्। अत्र मुनिविषयायाः श्रीकृष्णस्य रतेः मुनिरालम्बनं दर्शनेन योग्यताव्यञ्जनमुद्दीपनं श्रीकृष्णस्येयमुक्तिरेवानुभावः तद्व्यञ्जो हर्षश्च व्यभिचारी मुनिविषयश्रीकृष्णरतिज्ञे सामाजिके भावोत्पत्तिः।

एवमन्यदपीति। अत्र गुरुविषयरतौ यथा कुलगुरुं वशिष्ठं प्रति दिलीपस्योक्तिः।

तव मन्त्रकृतो मन्त्रैर्दूरात् संयमितारिभिः।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः॥ इति।

नृपविषयरतौ यथा। अहो महीयो भूपाल! भुवनत्रितयोदरम्।
माति मातुमशक्तोऽपि यशोराशिर्यदत्र ते॥ इति।

पुत्रविषयरतौ यथा।

यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम्।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः॥ इति।

पितृमातृविमातृविषयरतौ यथा।

**जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया**
**मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।**
**नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां**
**भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥**

---

जीवत्सु तातपादेषु नवे दारपरिग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः॥

इति रामस्योक्तिः। भ्रातृविषयरतौ यथा।

देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तन्तु देशं न पश्यामि यत्र भ्राता सहोदरः॥ इति।

कन्याविषयरतौ यथा।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या।
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्॥
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः।
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥ इति।

सुहृद्विषयरतौ यथा।

मम दुःखे सुखे रहसि नर्मणि तुल्यधर्मा सर्मान्तिकेऽपि किल कर्मणि शर्मदायी।
धर्मेऽप्यवैमि रुचिरं चलितो न धर्मे त्वं मे सखे! जगति कोऽस्ति तव द्वितीयः॥

उदासीनविषयरतौ यथा।

यः पूयते सुरसरिन्मुखतीर्थसार्थस्नानेन शास्त्रपरिशीलनकीलनेन।
सौजन्यमानजनिरूर्जितमूर्जितानां सोऽयं दृशोः पतति कस्यचिदेव पुंसः॥ इति।

व्यभिचारी तु निराकाङ्क्षवाक्येनाञ्जितो व्यभिचारी यथेत्यर्थः। साकाङ्क्षवाक्येनाञ्जितत्वे तु प्राधान्याभावान्न भावत्वमिति बोध्यम्।

जाने इति। सख्यौ स्वप्नवृत्तं कथयत उक्तिरियं जाने स्वरामीत्यर्थः। मां पाणिना मा संस्पृशेति रोदनाकारः यद्वा मां मा संस्पृशेति पाणिनैव कृत्वा इति शेषः तदा चोत्तरम् अकृत्वेव पाणिना निषिद्ध इत्यर्थः शठेन खलेन अत्रेति यद्यपि अत्र विप्रलम्भ एव रसोऽस्ति तथापि आश्वासयामि इत्यन्तस्य तद्व्यञ्जकस्य यावत् तावत् प्रवेशेन साकाङ्क्षत्वात् तद्व्यञ्ज्यस्य विप्रलम्भस्य न स्वातन्त्र्यमिति निराकाङ्क्षवाक्यव्यङ्ग्या-

अत्र विधिं प्रति असूया

**तदाभासा अनौचित्यप्रवर्त्तिताः।**

तदाभासा रसाभासा भावाभासाश्च। तत्र रसाभासो यथा

स्तुमः कं? वामाक्षि! क्षणमपि विना यं न रमसे,
विलेभे कः प्राणान् रणमखमुखे? यं मृगयसे।
सुलग्ने को जातः? शशिमुखि! यमालिङ्गसि बलात्,
तपःश्रीः कस्यैषा? मदननगरि! ध्यायसि तु यम्॥

---

यामसूयायां तस्याङ्गत्वमिव त्वामालिख्य. इत्युक्त्वा लुप्यत इत्यन्तेन निराकाङ्क्षवाक्येनैव तद्व्यञ्जनेति तस्याङ्गितैवेत्युक्तमिव अतएवोक्तमन्यत्र।

न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिरनयोः रसभावयोः॥ इति।

न चैवं रसस्यासूयाङ्गत्वे वक्ष्यमाणस्यायं स रसनोत्कर्षीत्यादेरिव कैलास इत्यादे-रिव वाऽपराङ्गाख्यगुणीभूतव्यङ्ग्यत्वापत्तिरिति वाच्यम् अङ्गिपुष्टिकारकाङ्गमुखेनैव चमत्कारित्वे तथात्वस्य वक्ष्यमाणत्वात् अत्र तु रसस्यापि रसस्य पुष्टिकारिकाऽङ्गि-न्येवासूया तयैव रसस्य चमत्कारेण विप्रलम्भ एव पर्य्यवसानादिति भेदात् त्वामा-लिख्येत्यादौ तु रसचमत्कारिकाप्यसूया नाङ्गं नाङ्गिनः पश्चात् प्रतीयमानत्वे विशेषणत्वाभावान्नापि रसभावध्वन्योरत्र वक्ष्यमाणोऽनुग्राह्यानुग्राहकरूपसङ्करः रसस्य निराकाङ्क्षवाक्यव्यङ्ग्यत्वाभावेन ध्वनित्वाप्रयोजकत्वात् एवं भावाभावेऽपि बोध्यम्। तदाभासा इत्यत्र तत्पदेन रसभावयोर्द्वयोरपि परामर्शाद्रसाभासा भावाभासाश्चेति व्याख्याताः। अनौचित्येति रसलक्षणे यद्यदालम्बनं वर्जितं तत्तदालम्बनविषयतया प्रवर्त्तिता इत्यर्थः। तत्र शृङ्गारलक्षणे दक्षिणाद्याश्च नायका इत्यनेनाधर्म्यात्मका दक्षिणवर्जनादनेकोपनायकरूपाः। अधर्म्यनायकविषयरतावुदा-हरति।

स्तुमः कमिति। हे वामाक्षि! सुन्दरनयने! यं पुरुषं विना न क्षणमपि रमसे न हृष्यसि तं कं स्तुमः स्तुतियोग्यः कोऽसौ कथ्यतामित्यर्थः ईदृशसुन्दर्य्यास्तव अनुराग-पात्रस्य स्तुत्यत्वमेवेति भावः। तथा यं पुरुषं मृगयसेऽन्विष्यसि स कोऽर्थाज्जन्मान्तरे रणरूपयज्ञसम्मुखे प्राणान् विलेभे इत्युक्तवान् विपूर्वो लभिस्त्यागे तत्पुण्यफलमेव

अत्र अनेककामुकविषयमभिलाषं तस्याः 'स्तुमः' इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

भावाभासो यथा

राकासुधाकरमुखी तरलायताक्षी
सस्मेरयौवनतरङ्गितविभ्रमास्या ।

---

तव अन्वेषणमिति भावः । तथाहि हे शशिमुखि ! यं पुरुषं त्वं बलादालिङ्गसि स कः सुलग्ने जातः तथा हे मदननगरि ! यन्तु ध्यायसि कस्य एषा तपःश्रीः तद्विषयत्वं तपस्यैव भवतीत्यर्थः । अत्र मदननगरीति रूपकं नगरवदनेकपुरुषाश्रयाद्यन्तरत्वलाभाय ।

अत्रेति । स्तुम इत्यादि वाक्यचतुष्टयेऽनुगतं सम्बन्धं सदा रमणमार्गणालिङ्गनध्यानरूपव्यापारोपादानं कर्त्तृ तस्याऽनेककामुकविषयमभिलाषं व्यनक्तीत्यन्वयः। अभिलाषव्यञ्जने च तद्धेतुको विप्रलम्भोऽप्याभासरूपो व्यज्यत इति भावः । इष्टसाधनत्वज्ञानरूपानुरागात्मिकाया रतेः परोचालम्बनिकाया विप्रलम्भत्वेन इच्छात्मकेन तत्कार्य्येणाभिलाषेण तद्व्यञ्जना न तु अभिलाष एव रतिभ्रमः कार्य्यः अभिलाषादिपञ्चकहेतुत्वमेव तस्या इत्युक्तत्वात् । ननु ईदृशबहुव्यापारस्य स्वीयैकनायकेऽपि सम्भवात् कथमनेककामुकविषयत्वलाभ इति चक्रवर्त्ती वर्त्तमानानिर्देशाद्व्यापाराणां वर्त्तमानैककालतालाभे तद्वशादेवानेककामुकविषयतालाभ इति अप्राप्ताप्राप्तविषययोः अन्वेषणालिङ्गनयोरेकदा एकपुरुषेऽसम्भवादिति तन्न । दृष्टः स्वपिति गच्छतीत्यादिषु विरुद्धक्रिययोः क्रमिकयोरपि स्थूलकालमादाय वर्त्तमानप्रयोगदर्शनादेकपुरुषेऽपि तत्सम्भवात् एकपुरुषालिङ्गनकाले परपुरुषान्वेषणपरिचारकव्यापारानुपलम्भेन वक्तृतत्कथनासम्भवाच्च । उच्यते । यमालिङ्गसीत्युक्त्वा यं ध्यायसीत्युक्तौ तु शक्तेनालिङ्गनकर्म्मभूतपुरुषस्य ध्याने व्यावर्त्तनात् यत् पदचतुष्टयोपादानात् च अनेककामुकलाभः कामुकस्यैकत्वे एक यत्पदेनैव तल्लाभात् तु शब्दव्यवच्छेदकर्म्माभावाच्च ।

भावाभासो यथेति । भावोऽत्र व्यभिचारि भावः तस्य च शृङ्गारीयत्वे शृङ्गारवर्जितं यदालम्बनं तद्विषयत्व एवानौचित्यम् अतः शृङ्गारे परोढ़ां वर्जयित्वा तु वेश्याञ्चानुरागिणीमित्यनेनानुरागिणीवर्जनात् । तद्विषये चिन्तारूपव्यभिचारिभावे उदाहरति ।

तत् किं करोमि ? कथमत्र तनोमि मैत्रीं ?
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥

अत्र चिन्ता अनौचित्यप्रवर्त्तिता। एवमन्येऽपि उदाहार्य्याः।

**भावस्य शान्तिरुदयः सन्धिः सबलता तथा ॥३५॥**

क्रमेण उदाहरणम्

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितम्
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ?।

---

राकेति। राका पूर्णिमा स्मेरं हसत्प्रायं यत् यौवनं तेन तरङ्गितस्तरङ्गवद्दुत्तरोत्तरजायमानौ विभ्रमौ यत्र तादृशमास्यं यस्या इति विग्रहः। एवं पूर्वार्द्धे सा एतादृशी सुन्दरीत्युक्ता तत्प्राप्त्युपायं चिन्तयति तत् किं करोमीति अत्रेति अस्यामित्यर्थः तत् स्वीकृतीति तत्कर्तृका या अस्मद्विषया स्वीकृतिस्तया यो व्यतिकरस्तया सह सम्पर्कस्तत्र क इव अभ्युपायः इव शब्दः सम्भावनायां क उपायः सम्भाव्यते इत्यर्थः न तु तस्यां मम स्वीकृतिरित्यर्थः तस्याः सिद्धत्वेन तदुपायस्य अचिन्तनीयत्वात्। अत्रेति अकृतस्वीकाराया एव स्वीकारोपायश्चिन्त्यते इत्यतोऽकृतस्वीकारत्वेन तस्या अननुरागित्वलाभे निराकाङ्क्षवाक्यव्यङ्ग्या तद्विषयचिन्ता अनुचिता आभास इत्यर्थः, एवमन्येऽपीति।

गामारुहन्ति गामेव सामिण अवङ्किइं ण आणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥

इत्यत्र परनायकाहरणाधीनो गर्वरूपव्यभिचारिभावोऽप्याभासः। तथा स्तुमः कं वामाचीत्यादौ पारदारिकनायकविषया स्तुतिलभ्या वक्तू रतिरप्याभासः इत्याद्यूह्यमित्यर्थः।

रसाभावेति कारिकोक्तक्रमप्राप्तान् भावशान्त्यादीनाह भावस्येति। व्यभिचारिभावस्येत्यर्थः शान्तिर्नाश उदय उत्पत्तिः सन्धिर्विरुद्धयोः सत् प्रतिपच्चितत्वं सबलता पूर्वपूर्वभावनाशनरूपा बलवत्ता शबलतेति तालव्यशकारपाठस्तु प्रामादिकः। भावशान्तिमुदाहरति।

तस्या इति। सख्यौ स्वनायिकाकोपतच्छान्तिवृत्तं कथयतः सख्युरुक्तिरियम्। सम्भुक्तोपनायिकास्तनरागाङ्कितवक्षसं प्रणमन्तं नायकं प्रति कुपिताया नायिकाया

इत्युक्ते क्व तदित्युदीर्य्य सहसा तत् सम्प्रमार्ष्टुं मया
संश्लिष्टा रभसेन, तत्सुखवशात् तन्व्याऽपि तद् विस्मृतम् ॥

अत्र कोपस्य

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यःकोपपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणम्
मा भूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥

अत्र औत्सुक्यस्य ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्धयन्यतः ॥

---

उक्तिः प्रथमार्द्धे तव प्रश्लेष आलिङ्गनं मुद्राङ्कश्चिह्न इतच्प्रत्ययेन तद्युक्तमित्यर्थः । इति तया उक्ते तन्मुद्राङ्कितत्वं सम्प्रमार्ष्टुं दूरीकर्त्तुं क्व इत्युदीर्य्य मया सहसा बलात्कारात् सा आश्लिष्टा इत्यर्थः । तद्विस्मृतं मुद्राङ्कितत्वं विस्मृतमित्यर्थः । कोपस्येति शान्तिरित्यनुषङ्गः कोपहेतोर्मुद्राङ्कितत्वस्य विस्मरणात् पूर्वजातकोपस्य शान्तिर्निराकाङ्क्षवाक्यव्यङ्ग्या इति अङ्गिनीत्यर्थः प्रधानीभूतयापि तया सम्भोगरूप-रसस्याङ्गस्य प्रकर्षनाच्चा परङ्गतेत्यवधेयम् । भावोदयमुदाहरति ।

एकस्मिन्निति । शयने शय्यायां विपक्षरमणी सपत्नी सुप्त इव चाटुकरण-व्यापाररहितो माभूदित्यर्थः । अमन्देति क्रियाविशेषणं क्रमश एवान्वयात् स्पष्टार्थ-मन्यत् औत्सुक्यस्योदय इत्यनुषङ्गः । न च पूर्वकोपस्य सत्वे सन्धिरेव नाशे तु सबलतैवेति वाच्यं पूर्वकोपनाशसत्वयोरेकस्यापि प्रत्यायकाभावेन तदभावात् न च विरुद्धस्य औत्सुक्यस्योदय एव कोपनाशप्रत्यायक इति वाच्यम् औत्सुकास्य कोपविरोधित्वाभावात् कोपसत्वेऽपि चाटुकरणार्थमौत्सुक्योदयसम्भवात् । सन्धि-मुदाहरति ।

उत्सिक्तस्येति । भावनोपनीतवैदेहीपरिरम्भस्य रामस्य परशुरामाभ्यागमे स्वयं परामर्शोऽयं तपःपराक्रमयोर्निधेराश्रयस्य अर्थात् परशुरामस्य अभ्यागमात्

अत्र आवेगहर्षयोः ।

क्वाकार्य्यं, शशलक्ष्मणः क्व च कुलं ? भूयोऽपि दृश्येत सा ?
दोषाणां प्रशमाय नः श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः ? स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं पास्यति ? ॥

---

सत्सङ्गप्रियता च वीररसोत्फालश्च एकत एकदेशे मां कर्षत इति। अन्यतश्च एष अनुभूयमानो भावनोपनीतो वा वैदेहीपरिरम्भो मां रुणद्धि आवृणोतीत्यर्थः। उत्सिक्तस्य तपः पराक्रमदय एव उद्भटस्य इत्यर्थः तपसा सत्सङ्गप्रियता पराक्रमेण च वीररभसोत्फालवीरस्य रभसो बलात्कारस्तस्योत्फाल उत्कण्ठा आनन्दी आनन्दजनकः हरिचन्दनमुत्कृष्टचन्दनविशेषः स्निग्धः स्पृहणीयः।

अत्रेति। आवेगः सम्भ्रमः अनवज्ञेयत्वज्ञानरूपः स च तपः पराक्रमशिथिल्यज्ञानव्यङ्ग्यः हर्षः परिरम्भकर्तृकारणव्यङ्ग्यः तयोः परस्परविरुद्धयोः सन्धिरित्यनुषङ्गः। सबलतामुदाहरति।

क्वाकार्य्यमिति। उर्वशीविरहादुन्मत्तस्य पुरूरवस उक्तिरियं तद्विरहेण मुमूर्षायां जातायामाह। क्वेत्यादिकुलमित्यन्तम् अकार्य्यमरणरूपं चन्द्रकुले इदमनुचितमित्येवं रूपविचारात्मा वितर्कोऽत्र व्यङ्ग्यः। भूयोऽपि दृश्येत सा इत्येतद्व्यङ्गेन दर्शनार्थमुत्कण्ठारूपेण औत्सुक्येन तन्नाशः तदनुरागनिवृत्त्यनुरागवितर्कस्य तद्दर्शनोत्कण्ठया नाशौचित्यात् श्रुतमधीतवेद रुद्दर्शन उत्कण्ठादोषः एवेत्यर्थः निर्धारणरूपया श्रुतमित्यन्तव्यङ्ग्यया मत्या तन्नाशः। अहो इत्यादि मुखमित्यन्तव्यङ्गेन भूयोऽनुभूतकोपकालीनमुखकान्तिस्मरणेन तन्नाशः तदुत्कण्ठाप्रतिकूलाया मत्यास्तदुत्कण्ठानुकूलेन स्मरणेन नाशौचित्यात किमित्यादि कृतधिय इत्यन्तव्यङ्ग्यया अनर्थचिन्तारूपया शङ्कया तत्कान्तिस्मरणरूपस्यानर्थहेतोर्नाशः अनर्थहेतुत्वेन ज्ञातस्य हेयत्वेनाचिन्त्यत्वात् स्वप्नेऽपि सा दुर्लभेत्येतद्व्यङ्गेन अनोजस्वरूपेण दैन्येन तदनुरागसूचनेन तदनुरागप्रतिकूलाया उक्तानर्थचिन्ताया नाशः। चेतः स्वास्थ्यमुपैहीत्येतद्व्यङ्ग्या तदनुरागप्रतिकूलया धृत्या तदनुरागसूचकस्य दैन्यस्य नाशः कः खल्वित्यादि व्यङ्ग्यया तद्ध्यानरूपया चिन्तया तदनुरागप्रतिकूलाया धृतेर्नाश इति तदाह।

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां सबलता

भावस्थितिस्तु उक्ता च उदाहृता च

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ॥**

ते भावशान्त्यादयः, अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत् ।

**अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥३६॥**
**शब्दार्थोभयशक्त्युत्थ स्त्रिधा स कथितो ध्वनिः ।**

---

अत्रौत्सुक्येति। अत्र च प्राथमिकं वितर्कं विहाय सर्वेषां बलवत्ता निराकाङ्क्षप्रत्येकवाक्यव्यङ्ग्यतया प्रधानीभूतापि साङ्गस्य विप्रलम्भस्य प्रकर्षिकेति नापराङ्गत्वमित्यवधातव्यम्। ननु भावस्थितेरपि सम्भवात्तदुदाहरणं कुतो न दत्तमित्याह।

भावस्थितिस्त्विति। स्थितोभाव इत्यर्थः उक्तेति भावोक्तिरेव तदुक्तिः जाने कोपेत्यादि भावोदाहरणमेव तदुदाहरणमित्यर्थः। ननु व्यभिचारिभावा रसस्यैवाङ्गिनो व्यञ्जिका इत्युक्तं रसनिरूपणे प्रकृतोदाहरणेषु च सर्वेषु एव रसोऽस्तीति।

मुख्यस्य तस्यैवाङ्गित्व सुचित मित्यत आह मुख्ये रसेऽपीति। मुख्ये पार्य्यन्तिकास्वादपाते रसे सत्यपि ते भावादयः कदाचन साकाङ्क्षवाक्यव्यङ्ग्यरसवत् काव्यीयनिराकाङ्क्षव्यङ्ग्यत्वदशायामित्यर्थः। भावशान्त्यादय इति भावस्य शान्त्यादयश्चेति द्वन्द्वशात् भावतच्छान्त्यादय इत्यर्थः। अन्यथा अस्मिन्नुत्तरे भावपरिहारापत्तेः अप्रधानस्यापि भावादेः कदाचनाङ्गित्वे दृष्टान्तमाह। विवाहप्रवृत्तेति विवाहदिने राज्ञाऽप्यनुगम्यमानो भृत्य एव यथा कर्मण्यङ्गी तथा रसेनानुगम्यमानो भावादिरेवाङ्गीत्यर्थः। इत्थं कोऽप्यलक्ष्यक्रमव्यङ्ग्य इत्यस्य प्रपञ्च मुदाहृत्य लक्ष्यव्यङ्ग्यक्रमः परः इत्यस्य प्रपञ्च मुदाहर्त्तुमारभते।

अनुस्वानः प्रतिध्वनिः शब्दग्रहानन्तरं प्रतिशब्दग्रहे यथा शब्दग्रहानन्तरग्राह्यस्वरूपः क्रमः संलक्ष्य स्तदाभं तत्तुल्यं यथा स्यात्तथा संलक्ष्यक्रमाव्यङ्ग्यस्थितेर्व्यङ्ग्यप्रतीतिर्यस्य स ध्वनिस्त्रिधा कथितः। त्रिधात्वमेव दर्शयति।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः, अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः, उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः। तत्र

**अलङ्कारोऽथ वस्त्वेव शब्दात् यत्रावभासते ॥३७॥**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा।**

वस्त्वेव इति अनलङ्करणवस्तुमात्रम्। आद्यो यथा

उल्लास्य कालकरबालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन।

---

शब्देति। शक्तिः सामर्थ्यं ज्ञेयार्थक मप्यूह्यपदमत्र ज्ञेयव्यङ्ग्यपरं तथाच शब्दार्थोभयसामर्थ्यज्ञेयव्यङ्ग्य इत्यर्थः। अनुस्वानपदार्थ मनुरणनपदेन विव्रखानः काव्यस्य विधात्वं व्याचष्टे। शब्दशक्तिमूलेति मूलपदं ज्ञेयार्थकं तथाच शब्दसामर्थ्यज्ञेयानुध्वनितुल्यव्यङ्ग्य इत्यर्थः। एतमर्थसामर्थ्योभयसामर्थ्यज्ञेयतयाऽपरद्वयं व्याख्येयम्। त्रितयमिदं बहुव्रीहिणा ध्वनिकाव्यविशेषणं ज्ञेयम्। शब्दसामर्थ्यञ्च अनेकार्थस्य शब्दस्य इत्यादिना यत्र शक्येऽपि द्वितीयार्थे शाब्दी व्यञ्जना प्राग्दर्शिता तत्रैव बोध्यं शब्दस्यान्वयव्यतिरेकानुविधानेन तत्र तस्य प्राधान्यात् अर्थसामर्थ्यञ्च एकमात्रार्थकशब्दार्थेन यत्र वक्तृबोद्धव्येत्याद्युक्त वक्रादिसाहचर्य्यादपरार्थो व्यज्यते तत्रैव बोध्यम्। तत्रार्थस्यैव प्राधान्यस्वीकृतत्वात् उभयसामर्थ्यञ्च यत्रानेकार्थकशब्देन एकार्थशब्देन च एकस्यैव व्यङ्ग्यस्य उपस्थापनं तत्रैव बोध्यम्।

अलङ्कारोऽथेति। प्रधानत्वेनेत्यस्य उभयत्रान्वयः। तेन शब्दात् प्रधानत्वेन तथा वाच्यार्थापेक्षया च प्रधानत्वेन भासते इत्यर्थः तथाच व्यञ्जकत्वे शब्दस्य प्राधान्यं व्यङ्ग्यस्य ध्वनित्वनिर्वाहकं वाच्यार्थापेक्षया प्राधान्यञ्चोक्तम्। अनलङ्करणमिति अलङ्करणभिन्नमित्यर्थः अनलङ्कारमिति प्रामादिकः पाठः नञ्तत्पुरुषे उत्तरपदेनालङ्कारपदेन लिङ्गपरित्यागासम्भवात्। शब्दशक्तिव्यङ्ग्यमलङ्कारमाह।

उल्लास्येति। येन देवेन राज्ञा कालकरवालं कृष्णखड्गं यमस्वरूपं खड्गं वा महाम्बुवाहमिव उल्लास्य रिपूणां सकल एव प्रतापः रणे धराजलैर्निर्वापितः करवालं महाम्बुवाहमिवेति धारा खड्गधारा जलमिवेति च पुरुषव्याघ्रादिसमासः न तु

निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥

अत्र वाक्यस्य असंबद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्र उपमालङ्कारो व्यङ्ग्यः।

---

करवालमेव महाम्बुवाहं धारयैव जलैरिति च प्रतापेऽग्निरूपे मेघजेन जलेन प्रतापनिर्वापणासम्भवात्। कीदृशः प्रतापः? त्रिजगति ज्वलितो दीप्तः देवेन कीदृशेन जरठं कठिनमूर्जितमूर्जस्वलं गर्जितं यस्य तादृशेन। इत्थं राजपरे वाच्यार्थे ज्ञाते समभिव्याहारविशेषबलादनेकार्थं देवादिपदानां सामर्थ्यात् मेघसमुल्लासस्याग्निनिर्वाहक इन्द्रेऽपि व्यञ्जनया प्रतीयते तद्द्वारा राजनि इन्द्रोपमालङ्कारव्यङ्ग्यः तथाहि कालकरं कृष्णरश्मिं बालमहाम्बुवाहं नवीनमहामेघसमुल्लासः देवेन इन्द्रेण रिपूणां प्रतापः प्रकृष्टतापो यस्य सोऽग्निराग्नेयमस्त्रं धाराजलैः निर्वापितः इन्द्रस्य जरठोर्जितगर्जितश्च मेघद्वारा एवमिन्द्रेऽवगते तत्तुल्यो राजते इन्द्रोपमाप्यवगम्यते अन्यथा प्रकृता सम्बन्धेन्द्र प्रत्यायकशब्दप्रयोगोऽनुपयुक्तः स्यात् तत्र च वक्तृतात्पर्यमेव प्रमाणमित्यभिप्रेत्य तत्र वक्तृतात्पर्यसत्त्वादेव नानिष्टापत्तिरित्याह।

अत्रेति। असम्बन्धस्य इन्द्ररूपार्थस्याभिधायकत्वं व्यञ्जकत्वं प्रसक्तं मा स्यादित्यतस्तदुपमायां वक्तृतात्पर्यसत्त्वान्नृपतिरूपप्राकरणिकशक्ररूपाप्राकरणिकयोरुपमानोपमेयभाव उपमाकल्पनीयो व्यङ्ग्य इत्यर्थः। नन्वेवमलङ्कारव्यञ्जना कथमुदाहृतेत्यत आह इत्यत्र उपमालङ्कार इति हेतोरत्र श्लोके उपमालङ्कारो व्यङ्ग्य इत्यर्थः। अनेनोपमाया अलङ्कारत्वमेव दर्शितमित्यतो न पौनरुक्त्यम् अत्र उपमालङ्कारबोधो वक्तुरनेनानिष्टप्रसञ्जनतर्केण जायत इत्येव ग्रन्थकृता प्रदर्शितमिति भ्रमेण व्यञ्जनया बोधे तर्कस्यानुपयोगं दृष्ट्वा कल्पनीय इत्यत्र अनुमेय इत्यर्थं व्याचष्टे चक्रवर्ती। तदेवोपमाव्यङ्ग्य इत्यस्य पौनरुक्त्याभावश्च स्यादिति तन्न। उपमायां वक्तृतात्पर्यप्रमाणतयैव अनिष्टापत्तितर्कस्य ग्रन्थकृता प्रदर्शितत्वादन्यथा उपमानोपमेयभावस्योपमालङ्काराभिन्नत्वे नैकस्यैवानुमेयताव्यङ्ग्यत्वयोरनुक्तिसम्भवापत्तेः उपमानोपमेयभावस्य उपमाभिन्नत्वाङ्गीकारेऽपि अनुमानानन्तरं शाब्दबोधो नास्ति कथमनुमानभिन्नतया तूपमाया व्यङ्ग्यत्वमिति शब्दशक्तिमूलव्यङ्ग्यत्वा। विरोधालङ्कारमाह।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान्॥

अत्र एकैकस्य पदस्य द्विपदत्वे विरोधाभासः।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद ! प्रभो !।
अहितः सहितः साधुयशोभिरसतामसि॥

अत्रापि विरोधाभासः।

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥

अत्र व्यतिरेकः। अलङ्कार्य्यस्यापि ब्राह्मणश्रमणन्यायेन अलङ्कारता।

---

तिग्मेति। हे विभो ! भवान् विभाति तिग्मौ रुचिरश्च प्रतापो यस्य तादृशः तथा विधुराणां शत्रूणां निशाकृत् कालरात्रिकृत् तथा मधुरा लीला यस्य तादृशः तथा मत्या मानतत्त्वे प्रमाणतत्त्वे वृत्तिर्यस्य तादृशः तथा प्रतिपदं पदेपदे पक्षाणां स्वगणानां अग्रणी पदं स्थानम्।

अत्रेति। एकपदमत्र समासपदं द्विपदत्वेन भङ्गेन विभक्त्यन्ततया द्विपदत्वे ज्ञात इति शेषः तथाच द्विपदत्वज्ञानसाहचर्य्यात् तदर्थयोर्विरोधोऽखण्डैक-पदेनैव व्यङ्ग्य इत्यर्थः तथाहि तिग्मरुचिः सूर्य्योऽप्रताप इत्येवं विधुश्चन्द्रो निशाकरो भाशून्य इत्येवं मतिः अतत्त्वव्यवसायीत्येवं प्रतिपत्पक्षत्वादिभूतेत्येवञ्च विरोध आपातती व्यञ्जनया आभासते। पदाभङ्गेनापि विरोधाभासमाह।

अमित इति। हे प्रभो ! त्वमसताम् अहितोऽसि कीदृशः साधुयशोभिः सहितः तथा समित् युद्धं ततः प्राप्तैरुत्कर्षैरमितः अपरिच्छिन्नः अतएव हर्षदः। अत्रापीति मितशून्यत्वमितसहितत्वयोः हितसहितत्वहितशून्यत्वयोर्विरोधो व्यङ्ग्य इत्यर्थः शब्दशक्तिमूलं व्यतिरेकालङ्कारमाह निरुपादानेति। तस्मै प्रसिद्धाय शूलिने नमः कीदृशाय नानाकारं जगत् अभित्तौ भित्त्याद्याश्रयनिरपेक्षं समवायिकारणरूपो-पादानसम्भवनिरपेक्षञ्च तन्वते चन्द्रकलया श्लाघ्याय च भूतलाद्याश्रयपरमाण्वाद्यु-पादानसापेक्षत्वेऽपि तन्निरपेक्षत्वारोपरूपेयं स्तुतिः।

अत्रेति। शिल्पचारीबोधककलाशब्दाच्छिल्पबोधकचित्रशब्दयोः सामर्थ्य-

वस्तुमात्रं यथा

पंथिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उसअपओहरं पेक्खिअ उण जइ वससि ता वससु ॥

अत्र यदि उपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते ।

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् ।
यत्र प्रसीदसि पुनः, स भात्युदारोऽनुदारश्च ॥

अत्र विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्य्यं कुरुत इति ध्वन्यते ।

---

हरितालाद्युपादानसापेक्षभित्त्यधिकरणकालिख्यालिखकचित्रकाराद्वैलक्षण्यरूपो व्यतिरेकालङ्कारो व्यङ्ग्य इत्यर्थः। ननु अलङ्काराणां हारादिवदङ्गि प्रकर्षकत्वं वक्ष्यते व्यङ्ग्यत्वे तु तस्यैवास्वादपात्रत्वेनाङ्गित्वादलङ्कार्य्यस्यैव तस्यालङ्कारतयैव नास्ति कथमलङ्कारो व्यङ्ग्यः इत्युच्यत इत्यत आह अलङ्कार्य्यस्यापीति। श्रमणः सन्यासी तद्दशायां ब्राह्मणत्वाभावेऽपि यथा दशान्तरीयब्राह्मण्यात् ब्राह्मणश्रमण इत्युच्यते तथा वाच्यतादशायामेषामलङ्कारत्वाद्व्यङ्ग्यत्वेऽपि अलङ्कार उच्यत इत्यर्थः। शब्दशक्तिमूलं वस्तुमात्रमाह वस्तुमात्रमिति।

पान्थ ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥ इति संस्कृतम् ।

निवासार्थिनं पथिकं प्रति स्वयं दूतिकाया उक्तिरियं स्रस्तरं शयनीयं कटं मनागल्पमपि प्रस्तर एव वयं स्वपिम इति दर्शयति प्रस्तरस्थल इति। पयोधरं मेघम्। स्रस्तरादिनिवाससामग्री नास्त्येव मेघोन्नतिदर्शनात् गतिप्रतिरोधमाशङ्क्य यदि तिष्ठसि तत्तिष्ठ इति वाच्यार्थाभिप्रायः। शास्त्रशब्दस्यापि प्राकृतं सत्थरमिति। सत्थरमिति पाठान्तरे अतः प्राकृतानेकार्थसत्थरपदस्य स्तनार्थकपयोधरपदस्य च प्रस्तरस्थं नायिकाजनं लाति गृह्णाति इति व्युत्पत्त्या प्रस्तरस्थलशब्दस्य च सामर्थ्याद्व्यङ्ग्यवस्त्वाह।

अत्रेति। परदारगमननिषेधकशास्त्रमत्र नास्तीति प्रस्तर एव रतिनिर्वाहो भविष्यतीति भावः।

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ॥३८॥**
**प्रौढ़ोक्तिमात्रात् सिद्धो वा कवेः तेनोम्भितस्य वा।**
**वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्॥३९**
**वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः।**

---

अर्थशक्त्युद्भवमाह।

अर्थशक्तीति। अर्थशक्त्युद्भवोऽप्युच्यत इति शेषः। तत्रार्थो व्यञ्जक इत्यर्थः अर्थशक्त्युद्भवेऽपीति पाठस्तु सुगम एव व्यञ्जकः सोऽर्थस्त्रिविध इत्याह सम्भवीति। अर्थस्तु वाच्यो लक्ष्यो व्यङ्ग्यो वेत्यत्र न नियमः कवेः प्रौढ़ोक्तिमात्रत्वात् कविना उम्भितस्य निबद्धस्य वक्तुः प्रौढ़ोक्तिमात्राद्वा सिद्ध इत्यर्थः। प्रौढ़ोक्तिः प्रतिभया वैचित्र्यवती अलीकोक्तिः मात्रपदात् प्रमाणान्तरव्यवच्छेदः तेन अलीक एवेत्यर्थः। त्रिविधस्य तस्य वस्त्वलङ्काररूपताभेदात् षड्विधत्वमाह।

वस्तुवेति। षड्विधस्य व्यञ्जकस्य वस्त्वलङ्काररूपद्विविधव्यङ्ग्यवशात् द्वादशविधा व्यङ्ग्या इत्याह व्यनक्ति यदित्यादि। व्यङ्ग्यवशादेव ध्वनित्वमतो व्यङ्ग्यसङ्ख्ययैव ध्वनिसङ्ख्यामाह तेनायमिति। अयमर्थशक्त्युद्भवो ध्वनिः। स्वतःसम्भवि पदार्थं व्याचष्टे तत्रेति। अपि तु इत्यर्थे यावदिति वहिरिति शब्दात् वहिःप्रमाणेनापीत्यर्थः। औचित्येनापि प्रकृतिविशेष्यस्य तत्सजातीयविशेष्यान्तरस्य वा उक्तविशेषणवत्तया गृहीतत्वमौचित्येन सम्भावना साजात्यञ्च प्रकृतविवक्षितसाजात्यसादृश्यात्मना प्रकृतविशेष्यनिष्ठधर्मेणैव तेनाधरो म्लानकमलदलमिति वक्ष्यमाणस्य रूपकस्य न स्वतःसम्भवित्वव्याघातः आरुण्यरूपाधरसादृश्यरूपधर्मेण सजातीयस्य कमलदलस्यैव म्लानकमलदलत्वरूपविशेषणवैशिष्ट्यग्रहात्। धवलकीर्त्तिवर्णनादौ तु प्रकृत-विशेष्यकीर्त्तौ धावल्यग्रहो नास्त्येव अतस्तद्विशिष्टत्वेन गृहीतः पटादिर्न तु कीर्त्ति-सजातीयः विवक्षितेन धावल्येन कीर्त्यवृत्तिना साजात्याभावादिति तत्र प्रौढ़ोक्तिरेव। तथा धम्मिल्लश्यामलाङ्गः स्मर इति वक्ष्यमाणं रूपकमपि न स्वतःसम्भविधम्मिल्ल-निष्ठश्यामत्वरूपसादृश्येन सजातीयत्वस्य स्मारकेणापि प्रमाणेन अग्रहादतस्तत्र न प्रौढ़ोक्तिसिद्धोदाहरणत्वव्याघातः। एवमेव वक्ष्यमाणोदाहरणेषु विचार्य एवञ्च स्वतः-सम्भविवस्त्वलङ्कारयोर्वस्त्वलङ्काररूपाश्चत्वारो व्यङ्ग्याः। एवं प्रौढ़ोक्तिद्वयात् सिद्धार्थयो-

स्वतः सम्भवी न केवलं भणितिमात्रनिष्पन्नो यावद्वहिरपि औचित्येन सम्भाव्यमानः। कविना प्रतिभामात्रेण वहिरसन्नपि निर्मितः कविनिबद्धेन वा वक्त्रेति द्विविधोऽपर इति त्रिविधः वस्तु वाऽलङ्कारो वाऽसाविति षोढ़ा व्यञ्जकः तस्य वस्तु वालङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः।

क्रमेण उदाहरणम्।

अलससिरोमणि धुत्ताणं अग्गिमो पुत्ति! धणसमिद्धिमओ।
इदि भणिएण णआङ्गी पप्फुल्लविलोअणा जाआ॥

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते।

धन्यासि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि॥

---

रपि चत्वारश्चत्वार इति। एवं क्रमेण उदाहर्त्तुमाह क्रमेणेति। तत्र स्वतःसम्भवि वस्तु व्यङ्ग्यं वस्तु आह अलसेति।

अलसशिरोमणिर्धूर्त्तानामग्रिमः पुत्रि! धनसमृद्धिमयः।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता॥ इति संस्कृतम्।

स्वयंवरार्थिन्यां कुमार्य्यां धात्र्या वरप्ररोचनोक्तिरियं पूर्वार्द्धार्थस्य व्यञ्जनया कुमारी बोध्यं वस्तु आह।

अत्रेति। पूर्वार्द्धार्थस्य तु अलसत्वेनाप्रवासिरूपो धूर्त्तत्वेन रतिविदग्धरूपो धनसमृद्धिमयत्वेन अदरिद्ररूपश्च व्यङ्ग्यभूतोऽर्थस्तादृशो वर एव प्रकृतविशेष्योऽन्यो वा तत्सदृशः चाप्रवासित्वादिविशेषणवत्तया गृहीत इति स्वतःसम्भवित्वं तेन वस्तुना च ममैवेत्यादि वस्तु व्यज्यत इत्यर्थः। ईदृशं स्वतःसम्भवित्वमग्रेऽपि विचार्य्यम्। स्वतःसम्भवि वस्तु व्यङ्ग्यमलङ्कारमाह।

धन्यासीति। रात्रिवृत्तालापिनीषु सखीषु मध्ये रतिकाले बाह्यकथालापिनीं काञ्चित् सखीं प्रति अतादृश्याः सख्याः सोल्लुण्ठोक्तिरियं विस्रब्धचाटुकसुपकथाया-

अत्र त्वमधन्या अहन्तु धन्येति व्यतिरेकालङ्कारः।

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तनिघ्नघनशोणितशोणशोचिः।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः॥

अत्र उपमालङ्कारेण सकलरिपुबलक्षयः क्षणात् करिष्यते इति वस्तु।

गाढ़कान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः।

---

मदीयत्वबुद्धिरूपेणाश्वासेन नायकप्रीतिजनकोपकथा रतान्तरेषु रतमध्येषु बहुषु न तु रतारम्भमात्रे न वा रतमध्य एव स्वोत्कर्षकथने तु सर्वाः श्रावयितुं सख्य इति बहुवचनसम्बोधनं सामाजिकैः उपहसनीयत्वञ्च बोध्यं व्यङ्ग्यमलङ्कारमाह।

अत्रेति। व्यतिरेक इति उपमानीभूतोक्तनायिकापेक्षया साधिक्यरूप इत्यर्थः अत्र चण्डीदासः अधन्यात्वबोद्धृणां वक्तृतात्पर्य्यग्रहदशायामेव अधन्यत्वसिद्धौ तस्यां धन्यात्वग्रहो बाधात् न जायत इत्यतोऽत्र त्वमधन्येति व्यतिरेकांशो लक्षणागम्य एव अहन्तु धन्येत्यंश एव व्यञ्जनागम्य स्तथा च व्यतिरेकालङ्कारैकदेश एव अत्र व्यङ्ग्य इत्याह तन्न। प्राक्तात्पर्य्यग्रहे आहार्य्य धन्यत्वज्ञानस्य पश्चात् तात्पर्य्यग्रहे तु अनाहार्य्यधन्यत्वज्ञानस्य सम्भवेन सर्वांशे व्यतिरेकालङ्कारस्यैव व्यङ्ग्यत्वात्।

स्वतः सम्भव्यलङ्कारव्यङ्ग्यां वस्त्वाह।

दर्पान्धेति। यस्य राज्ञः करे कृपाणः खड्गः कालीकटाक्ष इव युधि संग्रामे वीरैर्व्यलोकि कीदृशः कृपाणः दर्पान्धो यो वैराणां गन्धगजोऽन्यगजत्रासकमदगन्धो गजस्तस्य कुम्भस्थलरूपस्य कपाटस्य कूटेऽग्रभागे या संक्रान्तिः अर्थात् खड्गस्यैव पतनं तया निघ्नं समुत्थं यद्घनशोणितं तेन शोणशोचिः कालीकटाक्षः कीदृशः कोपेन कषाया कान्तिर्यस्य तादृशः।

अत्रेति। उभयोरेव शोणत्वबोधात् कटाक्षोपमा दृष्टचरैरेवेति यथोक्तलक्षणस्वतःसम्भविनी एव उपमा। सकलेति कालीकटाक्षस्य रिपुघातकत्वात् तत्तुल्ये खड्गेऽपि तत्प्रतीतेः। स्वतः सम्भव्यलङ्कारव्यङ्ग्यमलङ्कारमाह।

ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥

अत्र विरोधालङ्कारेण अधरनिर्दंशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता मम चत्याऽपि अन्यस्य चतिर्निवर्त्ततामिति तद्बुद्धिरुत्प्रेच्यते इति उत्प्रेचा वा। एषु उदाहरणेषु स्वतःसम्भवो व्यञ्जकः।

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्त्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति॥

---

गाढ़ेति। यो राजा युधि रुषा निजाधरं निर्दशन् अरिवधूजनस्य ओष्ठरूपाणि विद्रुमदलानि प्रबालपत्राणि गाढ़कान्तदशनचतव्यथारूपात् सङ्कटादमोचयत् क्रोधेन स्वाधरदंशनात् तत्पतिमारणे सति तस्य पतिकर्त्तृकाधरदशनं न जायत इत्यर्थः प्रबालस्य पत्राभावेऽपि तस्य तच्चाकारत्वासम्भाविते पत्ररूपणम्।

अत्रेति। विरोधोऽत्र आपातात एव भासमानो विरोधाभासः अधरदंशकत्वाधरव्ययामोचकत्वयोर्दश्यमानाधरभेदेन वस्तुतो विरोधाभावात् तस्य स्वतः सम्भवित्वन्तु स्पष्टमेव समकालमेवेति निर्दशन्निति वर्त्तमाननिर्देशसाचिव्यादिति भावः। तुल्ययोगितेति न च नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगितेति तल्लचणेन नियतानां प्रकृतसकलानामेव वा एकविशेषणवैशिष्ट्यमित्यर्थस्य एककालवृत्त्योरधरदंशनशत्रुव्यापादनयोः असम्भवात् कथमत्र तुल्ययोगितालङ्कार इति वाच्यम्? तुल्ये एककाले योगितेति व्युत्पत्त्यनुसारेण द्वितीयसमुच्चयालङ्कारस्यैव अत्र उक्तत्वात् तदुच्यति सत्वन्योन्ययुगपद्यागुणक्रिया इति अन्यः स तु समुच्चय इति तदर्थः अत्र च व्यापादनदंशनक्रिययोर्युगपत्ता। व्यङ्ग्यालङ्कारान्तरमप्याह मम चत्यापीति बुद्धिरुत्प्रेच्यत इति ईदृशबुद्धेरेव स्वाधरं दशतीत्यर्थः। कविप्रौढ़ोक्तिसिद्धार्थव्यङ्ग्यचतुष्के उदाहर्त्तव्ये तादृशं वस्तु व्यङ्ग्यं वस्तु आह।

कैलासस्येति। कैलासस्य मुख्यशिखरे वेणुसंमूर्च्छनाभिर्विशिष्टीकृत्य विबुधरमणीभि र्गीयमानां यदीयां कीर्त्तिं श्रुत्वा श्रवणरूपे पुलिने नदीतोयोत्थितप्रदेशे

अत्र वस्तुना येषमप्यर्थाभिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्त्तिरिति वस्तु ध्वन्यते।

केसेसु बलामोड़िअ तेण समरम्मि जअसिरी गहिआ।
जह कन्दराहिं बिहुरा तस्स दिढं कंठअम्मि संठविआ॥

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति इति उत्प्रेक्षा एकत्र संग्रामे विजयदर्शनात्तस्य अरयः प्रपलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्ति इति अपह्नुतिश्च।

---

सस्तापाङ्गा दिङ्मातङ्गाः हस्तमर्थात् श्रवणपुलिन एव आवर्त्तयन्ति भ्रमयन्ति कुत इत्यवाह सरसविसिनीकाण्डतया सञ्जातशङ्का यतः सरसविसिनीकाण्डस्य धावल्येन धवलया कीर्त्त्या तथा शङ्का उत्पद्यते इति भावः। हस्तावर्त्तनञ्च भक्षणार्थं गृहीतुं सस्तापाङ्गत्वेन चाक्षुषशङ्का दर्शिता श्रवणेन धावल्याग्रहात् श्रावणशङ्कानुपपत्तेः मूर्च्छना रागपर्य्याप्तिः तृतीया च विशेषणे।

अत्रेति। वस्तुना कीर्त्तिदर्शनादुक्तशङ्कया हस्तिहस्तावर्त्तनरूपेण हस्तिनि तत्सदृशे तथादर्शनात् कविप्रौढ़ोक्त्यैवं सिद्धेन इत्यर्थः। कविप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कार माह केसेस्विति।

केशेषु बलात्कृत्य तेन समरे जयश्रीर्गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढ़ं कण्ठे संस्थापिता॥ इति संस्कृतम्।

तस्य विधुराः शत्रवः कन्दराभिः स्वकण्ठे यथा संस्थापितास्तथा केशेषु बलात्कृत्य जयश्रीस्तेन समरे गृहीता इति अन्वयः। तेन जिताः शत्रवः प्रपलाय्य गुहासु तिष्ठन्तीति वक्तव्ये जयश्रियस्तेन केशग्रहणरूपः कन्दराभिश्च स्वकण्ठे तदरिस्थापनरूपो वाक्यार्थः स्वतोऽसम्भवी प्रौढ़ोक्त्या कविना साधितः। तद्व्यङ्ग्य माह। अत्रेति केशग्रहणं कामभावेन चुम्बनार्थमित्यभिप्रायात् एकस्यास्तादृशवृत्तान्तेन अन्यासामपि कामोद्दीप्तिर्भवतीति भावः हृदयेनाह।

केशग्रहणोद्दीपितेति। केशग्रहणस्य कामभावहेतुकत्वसूचकाभावात् अत

गाढ़ालिङ्गणरहसुज्जअम्मि दइए लहु समोसरइ।
माणस्सिणीणं माणो पीलणभीअव्व हिअआहि॥
अत्र उत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु।
जा ठेरं व हसन्ती कइवअणंबुरुहबद्धविणिवेसा।
दाविदि भुअणमण्डलमसं विअ जअइ सा वाणी॥
अत्र उत्प्रेक्षया चमत्कारैककारणम् नवं नवं जगत् अजल-

---

अपरितुष्यन्नाह एकत्र संग्राम इति काव्यहेतुर्हेत्वलङ्कारः इवि विजयदर्शनस्य पलायन-हेतुत्वात्।

अत्रापि। जयश्रियः केशग्रहणस्य कन्दराभिः कण्ठे अरिस्थापनस्य च अनुपयोगादपरितुष्यन्नाह न प्रपलाय्येति। अत्र स्वपराभवसम्भावनायां जयश्रियः केशग्रहणमुपयुज्यते एव इत्यत्रैव निर्भरः एवञ्च अपह्नुतिश्च इति चकारो वार्थ एव बोध्यः। तथाचात्र व्यङ्ग्यालङ्कारशङ्करः इति चक्रवर्त्युक्तमसङ्गतं बोध्यम्। कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्य वस्तु आह। गाढ़ालिङ्गनेति।

गाढ़ालिङ्गनरभसोद्यते दयिते लघु समपसरति।
मनस्विनीनां मानः पीड़नभियेव हृदयात्॥ संस्कृतम्।

रभसो बलात्कारः अत्र पीड़नभयं मानस्य मानसदृशज्ञानान्तरस्य वा नास्तीति स्वतोऽसम्भवित्वादुत्प्रेक्षायाः प्रौढ़ोक्त्या सिद्धः प्रत्यालिङ्गनादीति मानभङ्गे तस्यावश्यभावात्। कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्य मलङ्कारमाह। जा ठेरमिति।

या वृद्धमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी॥ इति संस्कृतम्।

ठेरं वृद्धं ब्रह्माणमर्थात् सृष्ट्यन्यथात्वप्रदर्शनात् सृष्टिकारिणी ब्रह्मण एव उपहसनीयत्वौचित्यात्। वाणी चात्र कवित्वरूपा न देवता कविवदने तस्या वासाभावात्। अजलजासनेत्येव पाठः न तु अजलजासनेति तेन पद्मविषयस्थितया पद्मसामान्यासनस्य ब्रह्मणोऽसनमुचितमिति लाभाय वदनेऽम्बुरुहरूपणम्।

अत्रेति। उत्प्रेक्षया हाससृष्ट्यन्यथात्वदर्शनसम्भावनारूपद्विविधया अचेतनायां कवित्वरूपवाण्यां तत्सदृशाचेतनान्तरे वा हासस्य सृष्ट्यन्यथात्वदर्शनस्य च दर्शनात् स्वतोऽसम्भविन्या कविप्रौढ़ोक्तिसिद्धया।

चमत्कारैकेति। हासोत्प्रेक्षया चमत्कारित्वेन हसनीयं विधिकार्य्यमपेक्ष्य

जाब्जासनस्था निर्मिमीत इति व्यतिरेकः। एषु कविप्रौढोक्ति-मात्रनिष्पन्नो व्यञ्जकः ।

जे लङ्कागिरिमेहलासु खलिआ सम्भोअखिण्णोरई-
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणं ।
ते एण्हिं मलआणिला विरहिणीणीसाससम्पक्किणो
जाआ झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥

अत्र निःश्वासैः प्राप्तैश्वर्य्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते ।

---

स्वकार्य्यचमत्कारित्वलाभः भुवनान्यत्वप्रदर्शनोत्प्रेक्षया च नवनवत्वस्य लाभः । अजलजाब्जासनस्था इति हासोपपादकं स्ववैलक्षण्यं मुखाब्जस्य अजलजाब्जत्वात् । कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तु आह ।

ये लङ्कागिरिमेखलाभिस्खलिताः सम्भोगखिन्नोरगी-
स्फारोत् फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
ते इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥ संस्कृतम् ।

कर्पूरमञ्जर्य्या उक्तिरियम् । लङ्कागिरिमेखलाभिस्खलिताः । सुवेलस्य मेखलातोऽभिस्खलिता मलयमागत्य ये वाता मलयानिलाः सम्भोगखिन्नाना सुरगीणां स्फारया उत्फुल्लफणावल्या यत्कवलनं तस्मिन् सति दरिद्रत्वं चीणत्वं प्राप्ता स्ते इदानीं विरहिणोनामस्मादृशीनां निःश्वाससम्पर्किणः सन्तः शिशुत्वेऽपि चीणत्वेऽपि तारुण्यस्य पूर्णा इव सन्तः बहलाः पुष्टा जाता इत्यर्थः । आहारो द्विगुणः स्त्रीणामित्यत आहारद्वैगुणस्य सम्भोगखिन्नत्वेन फणाबाहुल्येन च ततोऽप्यधिकस्य लाभात् तादृशाहारात् अतिचीणत्वलाभाय सम्भोगेत्यादिकम् ।

अत्र सर्पाहारेण चीणत्वस्य निःश्वासेन पुष्टत्वस्य च मलयानिले तत्सदृशवाय्वन्तरेवा अदर्शनात् स्वतोऽसम्भवित्वात् कविनिबद्धनायिकाप्रौढ़ोक्तेः असिद्धोऽयमर्थो व्यञ्जक इति । कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धवस्तु व्यङ्ग्यमलङ्कारमाह ।

सहि ! विरइऊण माणस्स मज्झ धीरत्तणेण आस्सासम् ।
पिअदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरिअम् ॥

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्य्येण सोढुं न शक्यते इत्युत्प्रेक्षा वेति ।

उन्नोलकरअरअणक्खएहिं तुह लोअणेसु मह दिस्सम् ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिअे ॥

---

सहीति । सखि । विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् । इति संस्कृतम् ।

प्रियदर्शनाद् भ्रष्टमानायाः सख्या मुक्तिरियं मम मानस्य स्थाने धीरत्वेन आश्वासं विरचय्य कृत्वा प्रियदर्शनाद्विशृङ्खले व्याकुले क्षणे तेन धीरत्वेन सहसा अपसृतमिति इत्यन्वयः । इति कारीऽव वाक्यसमाप्तिमावे ।

अत्रे ति । अचेतनस्य धैर्य्यस्य स्थाने धीरत्वेनाश्वासं विरचय्य कृत्वा प्रियदर्शनाद्विशृङ्खलेतत्सदृशाचेतनान्तरस्य वा आश्वासदानपलायनयोः असम्भवात् स्वतीऽसम्भविना कविनिबद्धनायिकाप्रौढ़ोक्तिसिद्धेन तेन वस्तुना इत्यर्थः । कविनिबद्धवक्त्र प्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्तु आह ।

उन्नोलेति । आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः ।
रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते ॥ इति संस्कृतम् ।

नायकाङ्गे उपनायिकानखदन्तक्षतदर्शनात् कोपारुणनयनायाः चक्षुरारुण्यहेतुप्रश्नकरं नायकं प्रत्य क्तिरियम् । तव इति अत्र अङ्गे इति शेषः । तथाच तवाङ्गे आर्द्रार्द्रकरजरदनक्षतैर्मम लोचनयोः रक्तांशुकं प्रसादो दत्त इत्यन्वयः इत्युत्तरालङ्कारेणेति इत्यस्य प्रश्नस्य यदुत्तरं लोचनयोः क्षतेन रक्तांशुकप्रसाददानरूपः प्रकृतवाक्यार्थोऽचेतनेन क्षतेन प्रसाददानासम्भवात् कविनिबद्धाया नायिकायाः प्रौढ़ोक्तेरसिद्धोऽलङ्काररूपत्तेन इत्यर्थः उत्तरश्रुतिमावतः प्रश्नस्य उन्नयनं यत्रेति वक्ष्यमाणोत्तरालङ्कारलक्षणाक्रान्तत्वात् । न केवलमिति मम अप्रीत्युत्पादनाय त्वया यानि क्षतानि असङ्गोपितानि प्रसाददानात्तैरेव मम प्रीतिरुत्पादितेति पर्य्यवसितार्थः । न च प्रसाददानं वाच्यमेव तत् कथं व्यङ्ग्यतया दर्शितमिति वाच्यं चक्षुषि

अत्र किमिति लोचने कुपिते वहसि ? इति उत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपयसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु ।

महिलासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती ।
अणुदिणमणण्णअम्मा अङ्गं तणुं अवि तणुएइ ॥

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते इति विशेषोक्तिः । एषु कविनिबद्धवक्तृप्रौढ़ोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः । एवं द्वादश भेदाः ।

---

प्रसाददानस्य वाच्यत्वेऽपि चक्षुषत्याः प्रसादपात्रत्वस्य व्यङ्ग्यत्वादेव कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धालङ्कार व्यङ्ग्यमलङ्कारमाह महिलेति ।

महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती ।
दिवसमनन्यकर्मा अङ्गं तन्वपि तनयति ॥ इति संस्कृतम् ।

महिलासहस्रेण भरिते पूरिते अमान्ती अवकाशमलभमाना दिवसं व्याप्य तनयतीति तनू करोति तनु शब्दात् तत्करोत्यर्थे कारितम् । अत्र हृदयेऽवकाशालाभोऽङ्गतनूकरणे हेतुरलङ्कारः स च शरीरिण्याः परमनसि वासलाभासम्भवात् तस्यां तत्सदृश्यां वा असम्भवीति कविनिबद्धदूतीप्रौढ़ोक्त्या सिद्धः न वर्त्तत इति तनयतीति वर्त्तमाननिर्देशबलादधुनाप्यहत्तिलाभः । विशेषोक्तिरिति विशेषोक्तिरखण्डेषु कारणेषु फलावच इति तल्लक्षणं फलावचः फलाभावोक्तिः । एक इति शब्दशक्तिव्यङ्ग्यस्यार्थशक्तिव्यङ्ग्यस्य च प्रपञ्चितत्वात् तदुभयव्यङ्ग्यप्रपञ्चस्य तत्प्रपञ्चेनैव गतार्थत्वादिति भावः । अतन्द्रेति रात्रिवर्णनमत्र प्रक्रान्तं तथा च श्यामारात्रिरिति वाच्यार्थः अतन्द्रचन्द्रोऽनलसेन्दुः तारका नक्षत्राणि तरला यस्या इति विग्रहः ।

अत्र नायिका तदुपमा च रात्रौ व्यङ्ग्या तत्र नायिकाव्यञ्जने समुद्दीपितमन्मथेत्येकार्थकशब्दार्थस्य यथा सामर्थ्यं तथा अनेकार्थानां श्यामातरलचन्द्रशब्दानामपि सामर्थ्यं तथाहि शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । सर्वावयवशोभाढ्या सा श्यामा परिकीर्त्तिता इति परिभाषया श्यामाशब्दस्य नायिकैव द्वितीयार्थः तस्या विशेषणद्वयस्य चन्द्रतरलशब्दयोः कर्पूरहारहारमध्यगौ रूपौ द्वितीयार्थौ

**शब्दार्थोभयभूरेकः**

यथा । अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥

अत्रोपमा व्यङ्ग्या ।

**भेदा अष्टादशाऽस्य तत् ॥ ४० ॥**

अस्येति ध्वनेः ।

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह

**रसादीनामनन्तत्वात् भेद एको हि गण्यते ।**

---

अनल्पकर्पूराभरणा तारकातुल्यहारमध्यगा इत्यर्थात् समुद्दीपितमन्मथेत्यत्र पुरःस्थापितमन्मथेति करणे तादृशार्थस्य कविप्रौढ़ोक्तिसिद्धत्वेन भेदसम्भवेऽपि गतार्थत्वात् प्रपञ्चानादरेणैव एक इत्युक्तमवधातव्यं चक्रवर्त्ती तु एतादृशमदृर्शितप्रपञ्चसम्भवानवधानादेक इत्यवालङ्कारमात्रस्यैव सम्भवं वीजं व्याचष्टे । ननु निरुपादानसम्भवमित्यादावपि अनेकार्थयोः कलाशब्दचित्रशब्दयोः इव वा तादृशनिरुपादानेत्यादि शब्दार्थानामपि सामर्थ्याच्चित्रकरतद्व्यतिरेकयोर्व्यङ्ग्यत्वेन तत्र अपि उभयशक्तिव्यङ्ग्यत्वस्यैव प्रशक्तिरिति चेन्न । एकस्मिन् व्यङ्ग्ये परस्परनिरपेक्षैकैकस्य व्यञ्जकत्वसम्भव एव उभयशक्त्युत्थत्वान्न तु परस्परसापेक्षस्य भवति हि निरुपादानेत्यादि शब्दार्थानां चित्रकलाशब्दसापेक्षयैव चित्रकरव्यञ्जकत्वं न स्वतस्तथोक्तौ सर्वतो वैलक्षण्यस्यैव प्राप्तेर्न तु चित्रकरात् प्रकृते तु अतन्द्रेत्यादि निरपेक्षयैव मन्मथोद्दीपकतया नायिकाव्यञ्जनसम्भव एव इत्यवधातव्यम् ।

भेदा अष्टादशेति । अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ द्वौ असंलक्ष्यक्रमव्यङ्ग्यध्वनिरेकः शब्दशक्त्युद्भवौ द्वौ अर्थशक्त्युद्भवा द्वादश उभयशक्त्युद्भव एकः इति अष्टादश भेदाः । परस्परदर्शनादिजलकेल्यन्ताः अनुभावाः सर्वत्रैव परस्परेत्यस्यान्वयः सूर्य्यास्तमयेत्यादि उद्दीपनानि वर्णनञ्च नायिकया नायकं प्रति नायकेन च नायिकां प्रति कथनं न तु कविना वर्णनं नायकनायिकाभ्यां तस्याज्ञातत्वे तदीयरत्युद्दीपनत्वासम्भवात् भेदा इति भेदका इत्यर्थः । देशकालेति तयोः स्वर्गीयत्वमर्त्यत्वादित्वे स्वर्ग-

अनन्तत्वादिति तथाहि नव रसाः तत्र शृङ्गारस्य द्वौ भेदौ सम्भोगो विप्रलम्भश्च, सम्भोगस्याऽपि परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्य्यास्तमयचन्द्रोदयषड्टतुवर्णनादयो बहवो भेदाः, विप्रलम्भस्याभिलाषादय उक्ताः, तयोरपि विभानुभावव्यभिचारिवैचित्र्यं, तत्रापि नायकयोः उत्तममध्यमाधमप्रकृतित्वम्, तत्रापि देशकालावस्थादिभेदा इति एकस्यैव रसस्यानन्त्यं का गणना तु अन्येषाम्। असंलक्ष्यक्रमत्वन्तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते।

**वाक्ये द्व्युत्थः**

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः।

**पदेऽप्यन्ये ।**

अपिशब्दाद्वाक्येऽपि। एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्या भारती भासते।

तत्र पदप्रकाशत्वे क्रमेण उदाहरणानि।

---

मर्त्यादिदेशः वसन्तादिकालीयत्वं वसन्तादिः कालः बाल्यवयःसन्धियौवनाद्या अवस्था वाक्य इति वाक्य एवेत्यर्थः। व्यङ्ग्यत्वं सप्तम्यर्थः वाक्यमात्रव्यङ्ग्य इत्यर्थः। अनेकार्थकैकार्थकशब्दाभ्यामेकव्यञ्जने व्यञ्जकयोर्वाक्यत्वस्यैव नियतत्वादिति भावः। पदेऽपीति पदे व्यङ्ग्या अपीत्यर्थः। यद्यपि द्व्युत्थस्तदन्ये सप्तदश च व्यङ्ग्यरूपा एव न ध्वनिकाव्यरूपास्तथापि तत्परिभाषयैव तद्वतः काव्यस्यापि तथा परिभाषेत्यवधेयम्।

अपि शब्दादिति। उक्तसमुच्चयपरोऽपिशब्द इत्यर्थः। पदव्यङ्ग्यानां सप्तदशानां महावाक्यव्यङ्ग्योपकारकत्वमित्याह एकावयवेति। भारती अत्र महावाक्यव्यङ्ग्यार्थरूपं काव्यं काव्यस्य शब्दार्थोभयात्मकत्वात्तस्य महावाक्यव्यङ्ग्यस्य उपकारकत्वं पदद्योत्योऽर्थस्येत्युक्तं पदद्योत्येन इत्यनेन पदस्य क्वचिद व्यङ्ग्यान्तरद्योतनात् क्वचित् च महावाक्यव्यङ्ग्यनिष्ठप्रकर्षद्योतनात् तदुपकारकार्थप्रकाशकतेति तत्तदुदाहरणे दर्शयिष्यामः। एकावयवस्थं भूषणं नासिकास्थमौक्तिकादिपदं प्रकाशत इति महावाक्य-

यस्य मित्राणि मित्राणि शत्रव शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ [१]

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनियन्त्रणत्वस्नेहपात्रत्वादिसंक्रमितवाच्याः ।

खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥ [२]

अत्र विमुह्यन्तीति ।

---

व्यङ्ग्योपकारकाणां व्यङ्ग्यानामुक्तसप्तदशानां पदप्रकाश्यत्व इत्यर्थः । पदप्रकाश्यत्व इति क्वचित् पाठस्तदा च पदात्प्रकाशो येषामिति बहुव्रीहिः पदत्वञ्च वाक्यभिन्नत्वमेव विवक्षितं वाक्यञ्च क्रिया वा कारकान्वितेति कोषोक्तलक्षणमेव विवक्षितं तेन उपसर्ग-विशिष्टाया नञर्थान्विताया वा आख्यातिकक्रियायाः समासाभावेऽपि पदत्वमेव अतो विमुह्यन्ति इत्यस्या न चलतीत्यस्याश्च क्रियाया वक्ष्यमाणं पदत्वमुपपन्नं क्रमेण इति लक्षणाद्वयमूलध्वनिक्रमेणेत्यर्थः । यस्य मित्राणीति तदपकारि द्वेषोऽनुकम्पा तथाच द्वेष्यापकारको जनोऽनुकम्प्यः स्नेहपात्रन्तु द्वितीयानुकम्प्य पदार्थः स्नेह उपकार्य्य-त्वेन सदैव ज्ञानमतो भेदः । अत्र नियन्त्रणत्वं निःशेषेण यन्त्रणं पीड़नं येषां तत्त्व आश्वस्तादयो लक्ष्याः आश्वस्तादिकञ्च लक्ष्यतावच्छेदकमर्थान्तरं तेन रूपेण प्रतीयमानमित्रादिरूपवाच्यार्था इत्यर्थः । एकैकवाच्यस्यैकैकामित्रादि लाक्षणिक-पदानामत्र उपश्लोक्यपुरुषस्य मित्रादावुचितव्यवहारित्वं व्यङ्ग्यं तच्च महावाक्य-व्यङ्ग्यस्य तद्विषयभावस्य उपकारकमिति पदव्यङ्ग्येन वाक्यव्यङ्ग्यवत् काव्यशोभा बोध्या यद्यपि त्वामस्मीत्यादावपि व्यञ्जकानां वच्मीत्याद्येकैकपदानामेकैकवाक्य एव स्थितिरिति तथापि न वाक्यप्रकाश्यतासम्भवस्तथापि तत्र वच्मीति क्रियायाः कर्म-भावेनैव विदुषामित्यादेरुक्तत्वात् कारकान्वितक्रियारूपवाक्यमेव तत्र व्यञ्जकम् अत्र तु यस्य स इत्यनयोर्यत्तदोर्विशेष्यविशेषणभावमात्रं न कारकान्वितक्रियारूपवाक्यत्व-मिति पदमेव व्यञ्जकम् । अत्यन्ततिरस्कृतवाच्यं लाक्षणिकव्यङ्ग्यम् । महावाक्य-व्यङ्ग्योपकारकमाह खलव्यवहारेति ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता न हि व्यवसाया वा विमुह्यन्ति ॥ इति संस्कृतम् ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते।

यथा वा

मुग्धे! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते?
मानं धत्स्व, धृतिं बधान ऋजुतां दूरे कुरु, प्रेयसि।

---

कृतसङ्केतनायकानागमनोत्कण्ठितं स्वीय हृदयं प्रति नायिकाया आश्वासनोक्तिरियं न विमुह्यन्तीति न विपरीता भवन्तीत्यर्थः।

खल एव विपरीतव्यवहारी मम प्रियस्तु धीरो न तथेति वाक्यार्थः। अत्रेति विमोहस्य प्राणिधर्मस्य व्यवहारे बाधात् विपरीते लाक्षणिकं विमुह्यन्तीति पदमत्यन्ततिरस्कृत वाच्यं तच्च उक्तरीत्या पदमेव तद्व्यङ्ग्यञ्च धीर स्वप्रियमहत्वं महावाक्यव्यङ्गस्य शृङ्गारस्योपकारकं बोध्यं वाक्यप्रकाशे तु उपक्रान्तं बहु यत्रेत्यादि यदुदाहृतं तत्रैकवाक्यस्थितत्वाद्व्यञ्जकसकललाक्षणिकपदानां वाक्यमेव तत्र व्यञ्जकम्। असंलक्ष्यक्रमपदव्यङ्ग्यं महावाक्यव्यङ्ग्योपकारकमाह।

लावण्यं तदिति। अत्र तदादिपदैरिति एकैकवाक्यस्थितैः इति शेषः। न च सर्वेषां वाक्यानां तदा सुधास्पदमभूदित्यत्रान्वयादेकवाक्यतेति वाच्यं तदन्वयमनपेक्ष्यापि लावण्यं तदित्यस्यैव क्रियानन्वितस्य व्यञ्जकत्वात्। अनुभवैकेति प्रकाश्यन्ते शक्त्यैवेति शेषः बुद्धिस्थत्वेन तदादिपदशक्तेः तद्व्यङ्ग्यश्च अत्र महावाक्यव्यङ्ग्यविप्रलम्भोपकारकस्तन्निष्ठः प्रकर्षः पूर्वानुभूतसुखहेतुज्ञाने विप्रलम्भातिशयात्। स च प्रकर्षोऽसंलक्ष्यक्रमवर्त्तित्वादसंलक्ष्यक्रम एवेति प्रकृतोदाहरणता केचित् तु अनुभवैकेति व्यङ्ग्यार्थप्रदर्शनमेव कृतं घटत्वादिरूपेणैव तदादिपदशक्तेरनुभवैकगोचरत्वादिना व्यङ्ग्यत्वादेवेत्याहुः तन्न। अनुभवैकगोचरत्वादिरूपव्यङ्ग्यार्थस्य वस्तुरूपत्वेन असंलक्ष्यक्रमव्यङ्ग्योदाहरणतानुपपत्तेः अतो विप्रलम्भप्रकर्ष एवात्र व्यङ्ग्यः। विप्रलम्भोपकारकप्रकर्षव्यञ्जकपदमुदाहृत्य सम्भोगोपकारकप्रकर्षव्यञ्जकं पदमुदाहर्त्तुमाह यथा वेति। पत्याववक्रभावां सखीं वक्रभावकरणार्थमुत्तेजयन्त्याः सख्या उक्तिरियं सख्या एवं प्रबोधिता नायिका तां सखीं नीचैः शंस इत्यादिरूपं प्रतिवचः प्रत्युत्तरं भीतानना सती आहेत्यर्थः। प्रतिबोधनीयमर्थमाह।

सख्येवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना,
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥ [३]

अत्र भीताननेति एतेन हि नीचैः शंसनविधानस्य युक्तता गम्यते। भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते।

रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ॥[४]

---

मुग्धे इत्यादि। मुग्धे! उपदेशाग्रहान्मूढे! मुग्धतया वक्रभावानभिज्ञतयाऽखिलो भूतवर्त्तमानभाविरूपः आरम्भवशात् भाविकालस्यापि तथात्वज्ञानं धत्स्व गृहाण वधान निगड़ताङ्कुरु प्रियरतावुत्कण्ठिता माभूरित्यर्थः ऋजुतामवक्रभावं प्रति वच इत्यस्य मानं धत्स्वेत्यादि वाक्यं प्रति नीचैः शंसेत्याहेति वार्थः।

अत्रेति। नाकियायाः सम्भोगश्रृङ्गारोऽत्र महावाक्यव्यङ्ग्यस्तत्प्रकर्षश्च भीताननेत्यस्य व्यङ्ग्यः तदप्रीतिजनकवाक्यश्रवणात् भयेन अनुरागालकरतेरतिशयलाभात् भीताननत्वानुपादाने तु तदुक्तेः प्रतारणरूपताप्यवगम्यत इति भावः। युक्तता गम्यत इति अनुरागातिशयादेव तदप्रीतिजनकवाक्यनिषेधस्य युक्ततेत्यर्थः शून्यं वासगृहमित्यादौ तु न तादृशं किमपि पदमिति तत्र वाक्यप्रकाश्यतैव। न अधिकं वैचित्र्यमिति पदप्रकाश्यस्य रसानां प्रकर्षस्य यथा वैचित्र्यमास्वादजनकत्वं भावादीनां प्रकर्षस्य तथात्वेऽपि तथैवास्वादजनकत्वं न ततोऽधिकमित्यर्थः। चक्रवर्त्ती तु अमृतस्य कणापि यथा आस्वाद्या तथा पदप्रकाश्यतया अल्पीयानपि रसकण आस्वाद्य इति तत्र वैचित्र्यमस्त्येव मधुतुल्यानां भावादीनान्तु कणा नास्वाद्येति तत्र वैचित्र्याभाव एव दर्शितो न अधिकमित्यनेन इत्याह। तन्न व्यञ्जकस्याल्पत्वेन व्यङ्ग्यस्य अल्पत्वाभावात् न हि महाप्रदीपव्यङ्ग्यात् घटादल्पप्रदीपव्यङ्ग्यो घटोऽल्पः तथा कान्तादेरादिरूपविषयमात्रभेदो रसभावयोरिति तयोरास्वाद्यतायां न्यूनाधिक्याभावात् रसभावयोर्महावाक्यभावव्यङ्ग्ययोः प्रकर्षस्यैव पदव्यङ्ग्यत्वेन तत्रैवामृतमधुदृष्टान्तौचित्येन रसभावयोस्तद्दृष्टान्तानौचित्याच्चेति अवधातव्यम्। महावाक्यव्यङ्ग्योपकारकं पदप्रकाश्यं शब्दशक्तिमूलमलङ्कारमाह।

रुधिरेति। विसरः रचणं प्रसाधितः कृतमण्डनः करालो भीषणः करवालः खड्गः परिघो मुद्गरः विटङ्कितः उच्चनीचीकृतः पट्टः स्फारदेशः भीमो भीषणीयः।

अत्र भीषणीयस्य भीमसेन उपमानम्।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः॥ [५]

काचित् सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति।

सायं स्नानमुपासितं, मलयजेनाङ्गं समालेपितम्
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमन्दा गतिः।

---

अत्रेति। भीमपदशक्तिमहिम्ना भीमसेनोपमा व्यङ्ग्या इत्याह भीषणीयस्येति। उपमा चात्र महावाक्यव्यङ्ग्यराजविषयभावोपकारिका भीमसेनोपमया राज्ञः प्रकर्षात् उल्लास्येत्यादौ तु कालकरवालप्रतापादेव शब्दानामनेकेषामेव प्रत्येकं पदत्वेऽपि वैशिष्ट्यादिव्यञ्जकत्वेन एकवाक्यतापन्नत्वादेकवाक्यस्थत्वाच्च वाक्यमेव व्यञ्जकं शब्दशक्तिमूलं पदप्रकाश्यं महावाक्यव्यङ्ग्योपकारकं वस्तु आह भुक्तीति। जनान्तरसन्निधौ सङ्केतदायिनि उपनायके उपस्थिते स्वहर्षं पुराणादिशास्त्रप्रशंसा-व्याजेन सूचयन्त्याः उक्तिरियं सदागमः पुराणादि सच्छास्त्रं कस्य जनस्य आनन्द-निस्यन्दं हर्षाविर्भावं न करोति कीदृशः भुक्तिः स्वर्गभोगो मुक्तिरपवर्गः तत्कृत-एकान्ते समादेशनं तत्त्वज्ञानं तत्परस्तज्जनक इति वाक्यार्थस्तु सत्पुरुषस्य गमनम्।

भुक्तिमुक्ती सुरतोपभोगगृहकर्मपरित्यागौ एकान्तसमादेशनं रहस्योपदेशः स च वस्तुरूपमहावाक्यव्यङ्ग्योपनायकविषयरसाभासप्रकर्षकः न चैवमेकवाक्य-स्थानामनेकपदानामेव व्यञ्जकत्वेन वाक्यप्रकाश्यत्वेवेति वाच्यं सदागमपदमात्र-स्यैवानेकार्थत्वं भुक्तिमुक्त्यादिपदानां तु एकेनैव रूपेण वाक्यव्यङ्ग्यविशेषबोधकत्वेन नानेकार्थकत्वमतः सदागम इत्यत्रैव शब्दशक्तिमूलत्वात् वाक्यमेव न तु एकवाक्य-स्थत्वेनैकवाक्यत्वं व्यङ्ग्यभेदे एकवाक्यस्थत्वेऽपि पदत्वस्यैव तदप्राप्तिमहादुःखेत्यादौ अभ्युपगन्तव्यत्वात् तथा मिलनं विना एकैकस्य एकव्यङ्ग्यव्यञ्जकत्वेऽपि पदत्व-मेव लावण्यं तदसावित्यत्र बोध्यं तत्रैकैकेनैव विप्रलम्भप्रकर्षद्योतनात्। अत्रेति मुख्यया उद्देश्यबोधनिर्वाहकत्वेन प्रधानीभूतया व्यञ्जनयेत्यर्थः। अमुख्ययेत्यपि क्वचि-त्पाठः सुगम एव। स्वतः सम्भविवस्तुव्यङ्ग्यं पदप्रकाश्यं वस्तु महावाक्यव्यङ्ग्योप-कारकमाह।

सायमिति। उपनायकेन पथि उपभुक्तां स्नातागतां सखीमुपहसन्त्याः उक्ति-

आश्चर्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥ [६]

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु अधुनापदद्योत्यं व्यज्यते।

तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥

---

रियम्। तव सौकुमार्य्यमाश्चर्यं येन सौकुमार्य्येण अभितः सर्वतः एव क्लान्तासि यतः ते तव नेत्रद्वन्द्वं मीलनव्यतिकरेण बहुवारनिमीलनेन रहितं यथा स्यात् तथा आसितुं स्थातुं न शक्नोति क्लान्तेः सौकुमार्य्यमात्राधीनत्वं साधयितुं वर्त्मश्रमाधीनत्वं निरस्यति सायमिति मलयजेनेति च एतद्द्वयेन वर्त्मश्रमनाशात् सायमव सायाह्नस्त्रि-मुहूर्त्तात्मकस्तत्रातपाधीनाया अपि क्लान्तेः सम्भवादाह यातोऽसीति द्रुतगत्यापि क्लान्तिसम्भवात् आह विश्रब्धेति भयादिरहिता मन्दा शनैः विश्रब्धमन्थरागति रित्यपि पाठः।

अत्रेति। महावाक्यार्थरूपवस्तुनः स्वतःसम्भविनो इदं व्यङ्ग्यम्। अधुना-पदद्योत्यं कृतपरपुरुषेत्यादिकं वस्तु तदधीन उपहासस्य। तत्र उपहासस्योपकारकं कृतपरपुरुषेत्यादिकं तस्याधुनापदद्योत्यता च दिनान्तरे एवं क्लान्त्यभावेनाधुना तथात्वेन हेतुविशेषसूचनात्। अलसशिरोमणीत्यादौ तु अलस इत्यादेर्धनसम्बद्धीत्यादेश्च व्यञ्जकस्य पदत्वेऽपि धूर्त्तानामग्रिम इत्यस्य वाक्यत्वात् स्वव्यङ्ग्यद्वारा मिलित्वा समेवेत्यादौ कव्यङ्ग्यव्यञ्जकत्वादेकवाक्यत्वेन च वाक्यप्रकाश्यता। स्वतःसम्भविवस्तुव्यङ्ग्यं पदप्रकाश्यमलङ्कारं महावाक्यव्यङ्ग्योपकारकमाह। पद्यद्वयेन जगत्सूतिं जगज्जनकं कृष्णं चिन्तयन्ती अन्या गोपकन्यका निरुच्छ्वासतया प्रतिरुद्धप्राणवायुतया मुक्तिं गता कृष्णवियोगरूता मुक्ता बभूवेत्यर्थः पापपुण्योभयक्षयादेव मुक्तिरित्यतस्तस्याः समस्तपापक्षयमुपपादयति।

तदप्राप्तीति। तदप्राप्तिदुःखस्यात्युत्कटत्वेन समस्तपातकफलमेव तदिति तद्भोगादेव समस्ततन्नाश इत्यर्थः समस्तपुण्यक्षयमुपपादयति तच्चिन्तेति। तादृशाह्लादस्य उत्कटत्वात् समस्तपुण्यफलमेवासाविति तद्भोगेनैव समस्ततन्नाश इत्यर्थः ब्रह्मचिन्तनं विना न मुक्तिरित्यत आह चिन्तयन्तीति।

चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका॥ [७]

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यामनुभूतानीति उक्तम्, एवञ्च अशेषचयपदद्योत्ये अतिशयोक्ती॥

क्षणदाऽसावक्षणदा, वनमवनं, व्यसनमव्यसनम्।
वत वीर! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥ [८]

---

अत्रेति। अत्र समस्तपापपुण्यक्षयात् मुक्तिप्राप्तिरूपो वाक्यार्थः स्वतःसम्भवि वस्तु तद्व्यङ्ग्यौ महावाक्यव्यङ्ग्यगोपी विप्रलम्भोपकारिकावतिशयोक्त्यलङ्कारौ पदद्वयद्योत्यावाह।

जन्मसहस्रैरिति। अतिशयोक्ती इति समस्तदुष्कृतफलानां तदप्राप्तिदुःखतया समस्तसुकृतफलानां तच्चिन्ताह्लादतया चाध्यासस्य व्यङ्ग्यत्वादतिशयोक्तिद्वयं व्यङ्ग्यमित्यर्थः तदुच्यते निगीर्य्याध्यवसानन्तु प्रकृतस्य परेण यत्। विज्ञेयातिशयोक्तिः सेति प्रकृतस्यात्र समस्तपापफलानां समस्तपुण्यफलानाञ्च अप्रकृततदप्राप्तिदुःखेन तच्चिन्ताह्लादेन च स्वाभेदेन अध्यासात् निगरणञ्च स्ववाचकशब्देनानुपादानं तच्चात्र पापपुण्यफलानामनुपात्तत्वात् तेषां प्रकृतत्वञ्च प्रकृतमुक्त्युपयोगित्वात्। तयोरशेषचयपदप्रकाश्यत्वन्तु तन्महिम्नैवाध्यासविषयफलानां सामस्त्यलाभात् अशेषचयपदयोरेकवाक्यस्थत्वेऽपि स्वव्यङ्ग्यभेदात् तद्द्वारा अपरैकव्यञ्जकत्वाभावाच्च पदत्वमेव धन्यासीत्यादौ तु न किमपि पदं तादृशमिति वाक्यमेव व्यञ्जकम्। स्वतः सम्भव्यलङ्कारव्यङ्ग्यं पदप्रकाश्यं महावाक्यव्यङ्ग्योपकारकं वस्तु आह।

क्षणदेति। अक्षणदा अनुत्सवदा अवनं रक्षकं शत्रूणां पलायनस्थानत्वात् व्यसनं द्यूतन्त्वित्यादि अव्यसनमविस्तीर्णं दुःखदशायां तदविस्तारात् यद्वा अरिभिर्व्यसनं क्षेपणं तादृशं व्यसनमापदित्यर्थः त्वदादिष्टा वत द्विषन्तः शिरसाक्षिप्ता निःसारिता इत्यर्थः अथच अक्षणदा अरात्रिः अवन मनरण्यम् अव्यसनं व्यसनभिन्नमिति।

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्त्तत इति सर्वपदद्योत्यं वस्तु।

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो।
इअ णववहुआ सोऊण कुणइ वअणं महीसम्मुहम्॥ [९]

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं, येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम्। एषु स्वतःसम्भवी व्यञ्जकः।

---

शब्दशक्तिमूलव्यञ्जनया चण्डादीनां चण्डालादिपराङ्मुखत्वे विरुद्धे वतेत्यादिना अर्थान्तरन्यासमाह पराङ्मुखे त्वयीति। स चार्थान्तरन्यासो दृष्टचरत्वात् स्वतः सम्भव्येव तद्व्यङ्ग्यसर्वपदद्योत्यं वस्तु महावाक्यव्यङ्ग्योपकारकमाह।

अत्र शब्दशक्तीति विरोधाङ्गेन विरोधनिर्वाह्येन महावाक्यव्यङ्ग्योऽत्र राजविषयभावः। विधिरपीत्यादिकं वस्तु तदुपकारकं सर्वपदद्योत्यमिति सर्वत्वेन विधेरपि प्राप्तेः न च तस्य सर्वपदवाच्यत्वेन कथं व्यङ्ग्यत्वमिति वाच्यं वैरेषु पराङ्मुखत्वान्वये तस्य वाच्यत्वेऽपि तस्य तदनुवर्त्तनस्य विधित्वेन रूपेण तस्य च व्यङ्ग्यत्वादेव। दर्पान्धगन्धगजेत्यादौ न किमपि पदं तादृशं व्यञ्जकमिति। तत्र वाक्यमेव व्यञ्जकं न च कालीकटाक्ष इवेति इवशब्देन नित्यसमस्तं पदमेव तत्र तादृशं व्यञ्जकमिति वाच्यं कोपकषायकान्तिविशेषेण साचिव्यादेव तत्र दर्शितव्यञ्जकत्वेन वाक्यत्वात्। स्वतःसम्भव्यलङ्कारव्यङ्ग्यं पदद्योत्यमलङ्कारं महावाक्यव्यङ्ग्योपकारकमाह।

तुह वल्लहस्सेति। तव वल्लभस्य गोशे आसीदधरो म्लानं कमलदलम्। इति नववधूः श्रुत्वा करोति वदनं महीसम्मुख मिति॥ संस्कृतम्।

गोः शेतेऽत्रेति गोशं प्रभातं नववधूर्नवयौवना वधूर्वल्लभाधरे म्लानकमलदलरूपणेन रात्रिवृत्तातिचुम्बनप्रकाशनाल्लज्जया बध्वा मुखनमनं तेन च रूपकेण चुम्बनहेतुकमधरे म्लानत्व मित्येवं रूपो हेत्वलङ्कारो व्यज्यत इति आह।

अत्रेति। रूपकबोधकस्य च समासपदत्वमिति रूपकद्वारेव तस्य प्रकाशकता गाढकान्तदशनक्षतेत्यादौ तु नैदृशं किमपि पदं किन्तु वाक्यमेव व्यञ्जकं व्यङ्ग्यश्च हेत्वलङ्कारोऽधरम्लानत्वहेत्वतिचुम्बनरूपी महावाक्यात्मकपूर्वार्द्धव्यङ्ग्यत्वसधूभी-

राइसु चन्दधवलासु ललिअमाप्फालिऊण जो चावं।
एकछत्तं बिअ कुणइ भुअणरज्जं विअम्भन्तो॥ [१०]

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चि-दपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशा-अतिवाह्यते इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते।

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले।

---

तस्य उपकारकः स्पष्ट एव अस्य रूपकस्य चाधरस्य सदृशे कमलदले सादृश्यघटक-शोणत्वस्य दृष्टत्वात् स्वतःसम्भवित्वमित्युक्तमेव प्राक्। कविप्रौढोक्तिसिद्धवस्तु-व्यङ्ग्य पदप्रकाश्यं वस्तु महावाक्यव्यङ्ग्योपकारमाह।

राईस्विति। रात्रिषु चन्द्रधवला सुललितमास्फाल्य यथापभ्।

एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणम् इति॥ संस्कृतम्।

य इत्यस्य प्रकरणलभ्यः कामी विशेष्यः भुवनराज्यं भुवनराजत्वम्। अत्र अनङ्गे राजकर्तृत्वस्य राज्यकर्त्तरि तत्सादृश्यस्य च बाधादिदं वाक्यार्थरूपं कविप्रौढोक्त्यैव सिद्धं तस्य व्यङ्ग्य माह।

येषां कामिनामिति तेभ्यो न कश्चिदित्यत्र तेभ्योऽपेत इत्यपाये पञ्चमी निर्धारणे तु तदनुपपत्तेः पराङ्मुख इत्यन्तमेकं व्यङ्ग्यं स्वतोऽसम्भविन स्तस्यापि व्यङ्ग्यान्तरमाह जाग्रद्भिरिति। ईदृशञ्च व्यङ्ग्यं महावाक्यव्यङ्ग्यस्य नवयुवतिमात्रशृङ्गारस्य उपकारकं तस्य भुवनराज्यपदद्योत्यता भुवनत्वेन समस्तलोकाधारत्वाद् यूनां साकल्यलाभात् राज्यपदेन च तेषां स्ववश्यतालाभेन अपराङ्मुखत्वलाभात् पदद्वयसमासे नचैक-पदत्वात्। कैलासस्येत्यादौ तु नेदृशं किञ्चित्पदम्। एकच्छत्रं विअ इत्यत्र एकच्छत्र-मिवेति संस्कृतम् आह चक्रवर्त्ती तन्न।

तदा उत्प्रेक्षालङ्कारस्यैव व्यञ्जकतापत्ते र्नतु वस्तुनः। कवि प्रौढोक्तिसिद्धवस्तु-व्यङ्ग्यं पदद्योत्यमलङ्कारं महावाक्य व्यङ्ग्योपकारक माह।

निशितेति। अराले कुटिले अर्थात् यौवनरूपे वयसि सति सुदृशो दृशि स्वबल-मनङ्गोऽर्पयति कुत इत्यत्राह निशितेति। अस्या दृगेव मम निशितः शर इति बुद्ध्या

दिशि निपतति यत्र सा च, तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ [११]

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः।

वारिज्जन्तोवि उणो सन्दावकअत्थिएण हिअएण।
थणहरवअस्सएण णविसुद्धजाइ ण चलइ से हारो॥ [१२]

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति ण चलइपदद्योत्यं वस्तु।

---

इत्यर्थः। सा च प्राप्तवला दृक् यत्र दिशि निपतति तत्र अर्थाद् यूनामवस्थाव्यतिकरं परस्परमिलनमेत्य समुन्मिषन्ति जायन्ते अवस्थाश्च कामिनां दश दशारूपाः ताश्च यथा।

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः।
अधृतिश्चाप्यनालम्बस्तन्मयोन्मादमूर्च्छनाः॥
मृतिश्चेति क्रमात् ज्ञेया दशा स्मरदशा इह।

एतासु च ज्ञानसाध्यानां तापारुच्यधृतीनाम् अनालम्बनोन्मादमूर्च्छनाभिरज्ञानरूपाभिः सह युगपत्ताऽभावेन मिलनोन्मेषस्य कविप्रौढोक्तैव सिद्धिः युगपत् परस्परविरुद्धाश्च ता इत्यतो युगपत्तासां विरोधो व्यङ्ग्यमित्याह।

अत्र वस्तुनेति। व्यतिकरपदद्योत्यता च तद्वशादेव युगपत्ताभानात् अस्य व्यङ्ग्यस्य च महावाक्यव्यङ्ग्यसमस्तपुरुषविप्रलम्भोपकारकत्वम्। कैशेषु बलामोडिश्च इत्यादौ तु नेदृशं किमपि पदं व्यञ्जकमिति वाक्यमेव व्यञ्जकम्। कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यपदद्योत्यं वस्तु महावाक्यव्यङ्ग्योपकारमाह वारिज्जन्त इति।

वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन।
स्तनभरवयस्यतया विशुद्धजातिर्न चलति तस्या हारः॥ इति संस्कृतम्।

पुनरित्यत्र वीप्सार्थो बोध्यस्तथाच सन्तापकदर्थितेन हृदयेन पुनः पुनर्वार्यमाणोऽपि तस्या हारः स्तनभरवयस्यतया हेतुना न चलति नापगच्छति वयस्यं त्यक्त्वा नापगच्छतीत्यर्थः। अत्र हेतुगर्भविशेषणम्।

विशुद्धजातिरिति। मुक्ताजातेरत्यन्तशुभत्वरूपे विशुद्धत्वे ब्राह्मणत्वादिकुल-

सो सुद्धसामलाङ्गो धम्मिल्लो कलिअललिअणिअदेहो ।
तीए खंधाहि बलं गहिअ सरो सुरअसङ्गरे जअइ ॥ [१३]

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावपि अनिवृत्ताभिलाषः कामुकोऽभूत् इति खंधपदद्योत्या विभावना । एषु कविप्रौढ़ोक्तिमात्रनिष्पन्नशरीरः ।

---

विशुद्धत्वाध्यासात्तस्य अचलनहेतुता वस्तुतोऽसम्भविनीति कविप्रौढ़ोक्त्यैव सिद्धा तदाङ्गमाह अत्रेति कम्पमान एवेति वारणात् स्थैर्याभावेनानपगमात् हृदयत्यागाभावाच्च । कम्पनैयत्यां न चलतीत्यस्य पदत्वञ्च चलतीति क्रियाया अकारकीभूतनञर्थान्वितायां वाक्यभिन्नत्वेन पदत्वस्यैवाभ्युपगमस्य प्रागुक्तत्वाचस्याः कर्तृकारकान्वयसत्त्वेऽपि तदन्वयवशेनाव्यञ्जकत्वात् नञर्थान्वयेनैव व्यञ्जकत्वात् तादृशव्यङ्ग्यस्य च महावाक्यव्यङ्ग्यनायिकाविप्रलम्भोपकारकत्वं हारकम्पेन विप्रलम्भप्रकर्षकबोधात् । गाढ़ालिङ्गनेत्यादौ न किमपि पदमीदृशं व्यञ्जकमिति वाक्यमेव तत्र व्यञ्जकम् । कविप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यं पदद्योत्यमलङ्कारं महावाक्यव्यङ्ग्योपकारकमाह सो सुद्धेति ।

सशुद्धो श्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥ इति संस्कृतम् ।

सुरतोत्तरं नायिकाया स्कन्धपतितश्लथबन्धकेशदर्शनादुद्दीप्तमदनस्य नायकस्य पुनः सुरतवर्णनमिदम् । धम्मिल्लः संयतकेशपाश एव सुप्रसिद्धः शुद्धः श्यामलाङ्ग स्मरः तस्या नायिकायाः स्कन्धाद्बलं गृहीत्वा सुरतसङ्गरे जयति सुरतः प्रवर्त्तकतारूपोत्कर्षवान् भवति इत्यर्थः कीदृशः कलितशुद्धश्यामलरूपललितनिजदेह इत्यर्थः ।

अत्रेति । श्यामतनुत्वं कामे कुतोऽप्यप्राप्तत्वेन बाधात्तद्रूपणस्य स्वतोऽसम्भवित्वात् कविप्रौढ़ोक्त्या सिद्धिः तदाङ्ग्यालङ्कारमाह रतिविरतावपीति । रत्युत्तरकालस्याभिलाषहेतोरभावेऽपि अभिलाषरूपफलव्यक्त्यात्मिका विभावनेत्यर्थः तस्य अलङ्कारस्य स्कन्धपदद्योत्यतायुक्तिमाह मुहुराकर्षणेनेति स्कन्धप्राप्तिमहिम्नैव रत्युत्तरत्वलाभादभिलाषोत्पादाच्च स्कन्धवाचकपदं द्योतकमित्यर्थः स च विभावनालङ्कारो महावाक्यव्यङ्ग्यनायकशृङ्गारप्रकर्षकः । अकालेऽप्यभिलाषेण शृङ्गारातिशयलाभात् ।

णवपुण्णिमामिअङ्कस्स सुहअ ! को तंसि भणसु सच्चं ।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥ [१४]

अत्र वस्तुना मयि इव अन्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादिपओसेत्यादिपदद्योत्यं वस्तु व्यज्यते ।

सहि ! णवणिहुवणसमरम्मि अङ्कवालीसहीए निविड़ाए ।

---

ना ठेरमित्यादौ तु न ईदृशं किमपि पदमिति तत्र वाक्यमेव व्यञ्जकं कविनिबद्धवक्तृ-प्रौढ़ोक्तिसिद्धवस्तुव्यङ्गं पदद्योत्यं वस्तु महावाक्यव्यङ्गप्रकार्षकमाह । णवेति ।

नवपूर्णिमामृगाङ्कस्य सुभग ! कस्त्वमसि ? भण सत्यम् ।

का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥ इति संस्कृतम् ।

उपनायिकागृहजिगमिषुं स्वनायकमुपहसन्त्या उक्तिरियम् । नवीनपूर्णिमा-चन्द्रस्य त्वं कोऽसि ? किं सम्बन्ध्यसि ? त्वय्यपि तद्दर्शनचणिकारागित्वोपलब्धेरिति भावः । तथा तव सौभाग्यं त्वदीयसुभगत्वं समग्रं समस्तं यस्यां का नायिका अद्य तादृशी तव सुभगेत्यर्थः चन्द्रस्य प्रदोषरजनीव अत्र चन्द्रस्य कोऽसीति प्रश्नवाक्ये पुत्रत्व-भ्रातृत्वरूपः सम्बन्धः षष्ठ्यर्थो विवक्षितः तदीयधर्मवत्तया उपहासी सम्बन्धप्रश्नेन तद-निर्वाहात् तथाच पूर्णिमाचन्द्रबिम्बस्य अप्राणिनस्तत्प्रदेशाप्राण्यन्तरस्य वा तादृशसम्ब-न्धाप्रसिद्धा प्रश्नस्य मनोऽप्रसिद्धा मनोहरत्वरूपसुभगत्वस्य चाप्रसिद्धा स्वतोऽसम्भवेन कविनिबद्धाया नायिकायाः प्रौढोक्त्यैव सिद्धिः तद्वाक्यद्वयस्य पदद्वयव्यङ्ग्यद्वयमाह ।
मयि इवेति । न तत इति च नवत्वेन प्रथमानुरागित्वलाभः प्रदोषरजन्युपमया च तदुत्तररागराहित्यलाभः रागस्य च अनुरागलौहित्यरूपतया नायकचन्द्रयोर्भेदे अपि एकशब्दवाच्यतयाऽभेदाध्यासादित्यं प्रतीतिः यद्यप्येतद्व्यञ्जक उपमालङ्कार एव न वस्तु न वा स्वतोऽसम्भवी तथापि न वेत्यादि दलेनाप्येतद्व्यञ्जनात्तथात्वं न च इव-शब्दार्थान्वयेनैव प्रदोषपदस्य व्यञ्जकत्वेन वाक्यव्यङ्ग्यतैवेति वाच्यम् इवशब्देन सह नित्यसमासात् समासपदत्वात् । जे लङ्कागिरिमेहलेत्यादौ तु न ईदृशं किमपि पद-मिति वाक्यमेव तत्र व्यञ्जकम् उक्तव्यङ्ग्यद्वयञ्च महावाक्यव्यङ्ग्योपहासप्रकर्षकमिति बोध्यम् । कविनिबद्धवक्तृ प्रौढ़ोक्तिसिद्धवस्तु व्यङ्ग्यमलङ्कारमाह ।

सहि णअणिहु वणेत्यादि ।

सखि । नव निधुवनसमरेऽङ्कपालीसख्या निविड़या ।

हारो णिवारिओ च्छिण्णिअ उह्निअमाणो तदा कहं रमिअं ॥[१५

अत्र वस्तुना हारच्छेदादनन्तरमन्यदेव रतमवश्यमभूत् तत् कथय कीदृगिति व्यतिरेकः कहं पदगम्यः।

पविसन्ती घरदुवारं बिवलिअवअणा बिलोइ ऊण पहं।
खन्धे घेतूण घटं हाहा णट्टोत्ति रुअसि सहि! किंत्ति?॥

अत्र हेत्वलङ्कारेण सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुं इच्छसि, तदा अपरं घटं गृहीत्वा गच्छेति वस्तु किंत्ति-पदद्योत्यम्। यथावा

---

हारो निवारितश्छित्वा उह्रियमाणस्ततः कथं रमितम्॥ इति संस्कृतम्॥

निविड़या अत्यन्तप्रत्यासन्नया आलिङ्गनार्थकाङ्कपालीरूपया सख्या हारश्छित्वा उह्रियमाणो गलितद्वित्रिमौक्तिकः सन्निवारितोऽपसारितस्ततो निरुद्धापसारणात् कीदृशं परस्परं रमितं कीदृशी रतिः कारितेत्यर्थः।

अत्र ज्ञानसाध्यहस्तादिकरणकहारच्छेदिकायाः सख्याः अचेतनाया मङ्कपाल्यां रूपणं ज्ञानादिरूपस्तद्धर्मवत्त्वात्मकसादृश्याभावात् स्वतोऽसम्भवि तदसम्भवाच्च तत्कर्तृकहारच्छेदानन्तररतिवैलक्षण्यप्रश्नोऽपि स्वतोऽसम्भवीति कविनिबद्धायाः सख्याः प्रौढ़ोक्त्यैव सिद्धः तद्ग्राह्यमलङ्कारं कथं पदव्यङ्ग्यमाह।

अत्रेति। साधारणरतिस्वरूपोपमानतो वैलक्षण्यरूपोऽव व्यतिरेकालङ्कारः कथं पदाद्विशेषतोऽज्ञायमानत्वे लाभाद्वैलक्षण्यस्य तद्ग्राह्यता तदुभयशृङ्गारस्य महावाक्यव्यङ्ग्यस्य उपकारकत्वं तस्य च स्फुटमेव। स हि विरह ऊणेत्यादौ तु न तादृशं किमपि पदमिति तत्र वाक्यमेव व्यञ्जकम्। कविनिबद्धप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्तुपदद्योत्यं महावाक्यव्यङ्ग्योपकारकमाह। प्रविसन्तीति।

प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पुनः पन्थानम्।

स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि! किमिति॥ इति संस्कृतम्।

नष्ट इत्यस्यात्र घट इति शेषः किमिति रोदिषि निर्हेतुकमेव रोदिषि त्वत्प्रयत्नं विना घटभङ्ग एव रोदनहेतुः स एव नास्ति निरर्थकमेव रोदिषीत्यर्थः।

अत्रेति। घटनाशो रोदनहेतुः स च स्वतोऽसम्भवी उपस्थितनायकसन्निधिजिगमिषाया एव रोदनहेतुत्वेन घटनाशे तदसम्भवादिति सख्याः प्रौढ़ोक्त्यैव

विहलंखलं तुमं सहि ! दिट्ठूण घटेण तरलतरदिट्ठिं ।
दुवारप्फंसमिसेण अप्पा गुरुओत्ति पाडिअ विभिण्णो ॥ [१६]

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय हारोपघातव्याजेन बुद्धिपूर्वं व्याकुलतया त्वया घटः स्फोटित इति मया चिन्तितम् तत्किमिति नाश्वसिषि ? तत्समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये इति हारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु ।

जोह्णाइ महुरसेण अ विइण्णतारुण्णउत्सुअमणा सा ।

---

तत्सिद्धिः तद्व्यङ्ग्यं वस्तु आह सङ्केतनिकेतनमिति । तच्च महावाक्यव्यङ्ग्यस्य नायिकाविषयस्य सखीनिष्ठभावस्य उपकारकम् । किमिति पदद्योत्यता च तस्य रोदनवैयर्थ्यबोधकेन तेन समीहितसाधनानुमतिलाभात् । ननु तस्य रोदनहेतुलाभावेऽपि तत्सदृशघटभङ्गान्तरे तद्धेतुत्वं दृष्टमेवेत्यतः स्वतः सम्भवित्वमेव कथमन्यथा अधरे म्लानकमलदलरूपणस्य प्रागुक्तं स्वतः सम्भवित्वमित्यत उदाहरणान्तरमाह यथा वेति ।

विशृङ्खलां त्वां सखि । दृष्ट्वा घटेन तरलतरदृष्टिम् ।
हारस्पर्शमिषेणात्मा गुरुक इति पातयित्वा विभिन्न इति ॥ संस्कृतम् ।

विशृङ्खलां व्याकुलां तरलतरदृष्टिं त्वामित्यन्वयः । विभिन्न इति अन्तर्भूतकारितार्थं विभेदित इत्यर्थः । आत्मनोगुरुत्वं तच्च हेतुः वाच्यस्य पतनस्य हेतो गुरुत्वे स्वनाशेनापि नायिकानुकूल्यरूपपरोपकारकारित्वरूपं गुरुजनत्वं व्यङ्ग्यम् । अत्रेति भेदहेतोः हारस्पर्शनस्यापह्नवेन विशृङ्खलत्वदर्शने तद्धेतुत्वारोपरूपयाऽपह्नुत्या इत्यर्थः अचेतनस्य घटस्य दर्शनबाधादपह्नूयमानहारस्पर्शमिथ्यात्वाच्च तस्याः स्वतोऽसम्भवित्वं नदीगमनायेत्यन्त मपह्नुतिबीजकथनं तत्वपह्नुतिशरीरं चेति तमित्यन्तमपह्नुतिज्ञानकथनम् । तत्किमित्यादिकन्तु व्यङ्ग्यवस्तुकथनं तस्य सखीपदद्योत्यता च तादृशीपदेशस्य सखिकृत्यत्वात् तादृशीपदेशस्य महावाक्यव्यङ्ग्यनायिकासम्भोगानुकूलत्वं स्फुटमेव । उन्नीलकार अर इत्यादौ तु नेदृशं किमपि पदव्यञ्जकम् । कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं महावाक्यव्यङ्ग्योपकारकमलङ्कारं पदद्योत्यमाह ।

जोह्णा इति । ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।

वुड्ढावि णवोढ्व्व परवहू अहह ! हरइ तुह हिअअं ॥ [१७]

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवधूपदप्रकाश्यः। एषु कविनिबद्धवक्तृप्रौढ़ोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाशे तु पूर्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः।

**प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४१ ॥**

यथा गृध्रगोमायुसंवादादौ

---

वृद्धापि नवोढ़ेव परवधू रहह ! हरति तव हृदयम् ॥ इति संस्कृतम् ।

गलितयौवनोपनायिकां रिरमयिषुं पतिमुपहसन्त्या उक्तिरियम्। वृद्धापि सा तारुण्याभावेऽपि ज्योत्स्नया मधुरसेन च दत्ततारुण्या कामोत्कण्ठितमना स्तव हृदयं हरति अत्र हेतुः परवधूरिति परवधूत्वे तारुण्यादिकं त्वयानापेक्ष्यते इत्यर्थः।

अत्रेति। काव्यलिङ्गं हेत्वलङ्कारः परवध्वाः त्वच्चित्तहरणार्थपदार्थत्वात् स चोपहासार्थमेव चित्तहरणहेतुतया तथोक्ता न तु वास्तवः कुरूपया परवध्वा चित्तहरणाभावादिति प्रौढ़ोक्त्यैव तद्धेतुतासिद्धिः त्वदीयं चरितमित्यादिकं व्यङ्ग्याक्षेपालङ्कारकथनम्।

निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया।
वक्ष्यमाण उक्तविषयः स आक्षेपो द्विधा मतः॥

इति तल्लक्षणम् अभिलषतीत्यन्तन्तु तदुपकारकथनं परवधूत्वमात्रादेव अभिलाषाच्च चरितकथनाशक्यत्वरूपाक्षेपलाभात्तस्य परवधूपदप्रकाश्यता तस्य च महावाक्यव्यङ्ग्योपहासोपकारकत्वं स्फुटमेव अयुक्तकारित्वेन अनिर्वचनीयचरितस्य उपहास्यत्वात्। महिला सहस्सेत्यादौ न तादृशं किमपि पदं व्यञ्जकमिति तत्र वाक्यमेव व्यञ्जकम्। पञ्चत्रिंशदिति पदवाक्यप्रकाश्यत्वेन सप्तदशद्वैगुण्ये चतुस्त्रिंशत् उभयशक्त्युत्थस्तु वाक्यमात्रप्रकाश्य इत्येक इति पञ्चत्रिंशत्। प्रबन्धेऽपि न केवलं पदवाक्ययोरपि तु प्रबन्धेऽपीत्यर्थः। प्रबन्धश्चात्र एकवाक्यतापन्नमनेकवाक्य मितिहासरूपं तद्ग्राम्निमहादुःखेत्यादि पद्यद्वयन्तु नानेकवाक्यमिति नासौ प्रबन्ध इत्यवधातव्यम्। अर्थशक्तिभूः स्वतःसम्भविवस्तुव्यङ्ग्यवस्त्वादिरूपः द्वादशविधः। तत्र स्वतःसम्भविवस्तुव्यङ्ग्यं प्रबन्धप्रकाश्यं यथाह।

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः, प्राणिनां गतिरीदृशी ॥
इति दिवाप्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।
आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं मूढाः ! त्यजध्वमविशङ्किताः ॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठञ्च वचनमिति प्रबन्ध एव प्रथते । अन्ये तु एकादशभेदा ग्रन्थविस्तरभयान्नोदाहृताः, स्वयं तु लक्षणतोऽनुसर्त्तव्याः । अपिशब्दात् पदवाक्ययोः ।

---

अलमित्यादि । श्मशाने त्यक्तमृतबालकान् तद्बन्धून् स्वगृहगमनाय त्वरयती गृध्रस्योक्तौ प्रथमपद्यद्वयरूपः प्रबन्धः कालधर्मं कालस्य यमस्य धर्मं मारणरूपं दिवा प्रभवत इति दिवाभक्षणप्रभोरित्यर्थः पुरुषविसर्जनपरमिति शिशुं त्यक्त्वा यूयं गच्छतेति यत् पुरुषाणां विसर्जनरूपं वस्तु तद्व्यञ्जकोऽयं पद्यद्वयरूपगृध्रवचनरूपप्रबन्ध इत्यर्थः । तत्प्रबन्धार्थश्च स्वतःसम्भविवस्तुरूपो व्यञ्जकः । गोमायोरुक्तौ पद्यद्वयात्मकप्रबन्धं व्यञ्जकमाह ।

आदित्योऽमित्यादि । आदित्यसत्त्वाद् युष्माकं श्मशानस्थितावन्धकारभयं नास्तीति भावः । स्नेहकरणं स्थितेरेव तत्फलमाह जीवेदपीति । बहुविघ्न इत्यनेन विघ्नवन्मुहूर्त्तमृतस्य विघशून्यमुहूर्त्तान्तरे जीवनसम्भावना तत्सम्भावनायां हेतुमाह अमुमिति । कनकवर्णाभमित्यनेन वर्णविपर्य्ययाभावात् जीवनसम्भावना अप्राप्तयौवनमित्यनेन यौवनाधीनस्य मरणहेतोरपचारस्याभावाज्जीवनसम्भावना मूढा इत्यत्र बाला इति क्वचित्पाठः शिशुबुद्धय इत्यर्थः ।

विजृम्भमाणस्य भक्षणसमर्थस्य जनव्यावर्त्तनं बालकबन्धुजनानां व्यावर्त्तनं गृह-

पदैकदेशरचनावर्णेष्वपि रसादयः ।

तत्र प्रकृत्या यथा ।

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तीतिअणअणं पव्वईपरिचुंबिअं जअइ ॥

अत्र जयतीति न तु शोभत इत्यादि समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापाररूपेणास्य पिधानमिति तदेवोत्कृष्टम् । यथा या

---

गमनतो निवर्त्तनं तन्निष्ठं तत्र निष्ठा पर्य्याप्तिर्यस्येति विग्रहेण तद्व्यञ्जकमित्यर्थः । तद्रूपं वस्तु च गोमायुवाक्यरूपप्रबन्धार्थेन स्वतःसम्भविवस्तुना व्यज्यत इत्यर्थः । अन्येत्विति । स्वतःसम्भविवस्तु व्यङ्ग्यालङ्कारादय इत्यर्थः । प्रबन्धेऽपीत्यपिशब्दस्य उक्तसमुच्चयपरतामाह अपिशब्दादिति । पदैकेति पदैकदेशः प्रकृतिप्रत्ययोपसर्गरूपः । रसादयोऽसंलक्ष्यक्रमत्वेन कथिताः प्रकृत्यादेरपि व्यङ्ग्या इत्यर्थः । रइ केलीति ।

रतिकेलिहृतनिवसनाकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥ इति संस्कृतम् ।

नग्नीकृतया पार्वत्या करद्वयेन महेशस्य नयनयुगले पिहिते चुम्बनेन पिहितस्य ललाटनेत्रस्य वर्णनमिदम् । रतिकेलौ हृतं निवसनं परिधानवस्त्रं यस्यास्तादृश्या अर्थात् पार्वत्या करकिसलयाभ्यां रुद्धं नयनयुगलं यस्य तादृशस्य पार्वत्या परिचुम्बितं तृतीयनयनं जयति उत्कर्षभागित्यर्थः शृङ्गारानुभावेन चुम्बनेन पिहितत्वात् शृङ्गारोत्कर्षव्यञ्जकत्वादुत्कर्षः । णिअसणेत्यत्र प्राकृतोक्तौ यद्वा हृतनिवसनं यतस्तादृशाभ्यां पार्वतीकरकिशलयाभ्यां रुद्धेत्यर्थः नितम्बादाकृष्यमाणं वस्त्रं कराभ्यां धृतं ततोऽप्याकृष्टमित्यर्थः । यद्वा हृतं निवसनं येन तादृशासौ पार्वत्याः करकिसलयेन निरुद्धं नयनयुगलं चेति कर्मधारयः । उत्कर्षं घटयति अत्रेति । जयतीत्यनेन जिधातुरूपप्रकृतेर्नयननिष्ठोत्कर्षवाचकता दर्शिता । शृङ्गारोत्कर्षस्तु व्यङ्ग्य इत्यवधातव्यं शुभधातोऽस्तु न ईदृशी व्यञ्जकता कान्त्यर्थकत्वात् तस्य इत्याह नत्विति । समाने करद्वयपिहितचक्षुर्द्वयसमाने लोकोत्तरेण शृङ्गारानुभावेन तदेव तृतीयनयनमेव उत्कृष्टं व्यङ्ग्यभूतशृङ्गारोत्कर्षव्यञ्जकतारूपेण जिधातुवाच्येनोत्कर्षेण विशिष्टमित्यर्थः । धातुप्रकृतेः व्यञ्जकत्वमुदाहृत्य नाम प्रकृतेस्तदाह ।

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया,
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥

अत्र पदानीति न तु द्वाराणीति । तिङ्सुपोर्यथा ।

पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां,
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा,
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥

---

यथेति । पादानतः सोऽयं प्रेयान् कान्तया सशपथमपाकृत उन्मनाः स न यावद्वासभवनात् द्वित्राण्येव पदानि न याति तावत् धावित्वैव कृतप्रणामं यथा स्यात्तथा कान्तया धृत इत्यन्वयः । प्रत्युतेत्यपाकरणवैपरीत्ये कथमेवं कृतमित्यत आह अहो प्रेम्ण इति गतिर्व्यवसायः । धावनक्रियाविशेषणमाह पाणिसम्पुटेति । पाणिसम्पुटस्थो गलन्नीवीनिबन्धो यत्र धावने तादृशं धावित्वेत्यर्थः न तु पाणिसम्पुटे गलनं गलत एव पाणिसम्पुटधृतत्वात् गलदित्यत्र लसदिति पाठान्तरं तदा नीवीनिबन्धस्य गलितत्वसूचनम् अहो इति तादृशगतिवैचित्र्यविषयविस्मये प्रेम्णो गतिः स्वभावः ।

अत्रेति । अल्पगमनस्यैव अत्र औत्सुक्यरूपव्यभिचारिभावव्यञ्जकत्वात् पदानीत्यत्र बहुवचनमव्यञ्जकमतः प्रकृतिः पदस्यैव व्यञ्जकत्वं दूरगमने तु न तद्व्यञ्जनेत्याह नन्विति । प्रत्ययव्यञ्जकत्वमाह ।

तिङ् सुपोरिति । पथि पथि अङ्कुराणामाभा शुकचञ्चूनामिव चारुरिति षष्ठीसमासः अङ्कुराश्च पल्लवाङ्कुरास्तेषामेव तादृशाभत्वात् वीरुधां लतानां लासको नर्त्तकः नरि नरीति नृशब्दस्य रूपं द्राक् झटिति चर्चा प्रसङ्गः किरणस्येति क्वचित्पेइत्यस्य त्रुटि करणमेव भवति न केवलं उणादिप्रत्ययान्तस्तु रश्मिवाचक एव किरणशब्दः अतोऽत्र किरणं किरतिक्विबन्तात् किरशब्दात् तत्करणमित्यर्थे णाभकारितं ततो भावत्रुटि रूपमिदम् । तिङा सुपा चेति किरतीति साध्यत्वं तिङोवाच्यं निवृत्तेत्यत्र प्रथमाविभक्तिरूपस्य सुपः सिद्धत्वं वाच्यम् एवं क्तप्रत्ययस्य चातीतत्वं वाच्यमेव द्योत्यत इत्यत्र तु उच्यत इत्यर्थः तथाच सायककिरणमाननिवृत्त्योः

अत्र किरतीति किरणस्य साध्यमानत्वं, निवृत्तेति निवर्त्तनस्य सिद्धत्वं तिङा सुपा च तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते । यथा वा

लिखन्नास्ते भूमिं वहिरवनतः प्राणदयितः,
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः
तवावस्था चेयं, विसृज कठिने ! मानमधुना ॥

अत्र लिखन्निति न तु लिखतीति, तथा आस्त इति न तु आसीदिति, अपि तु प्रसादपर्य्यन्तमास्त इति, भूमिमिति न तु भूमाविति, न हि बुद्धिपूर्वकमपरं किञ्चिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् ।

---

कारणकार्य्ययोः पौर्वापर्य्यविपर्य्यये आहार्य्यतया अवगते माननिवृत्तेरतिशीघ्रोत्पन्नत्वं तद्दशामानिनोश्शृङ्गाररसोत्कटत्वञ्च व्यञ्जनया प्रतीयत इत्यभिप्रायः अतस्तद्व्यञ्जनात् अत्र तिङ् सुप् क्तप्रत्ययानां रसादिव्यञ्जकता बोध्या । प्रपञ्चयति यथा वेति । बहुदिनव्यापकमानां मानिनीं प्रति सख्या उक्तिरियम् ।

प्राणदयितः प्राणतुल्यो दयितः अवनतः सन् भूमिं लिखन् वहिरास्ते इत्यन्वयः उच्छूनमुत्फुल्लं अवस्था अभ्यासान्मानो बहुदिनव्यापकः अत्र सकलक्रियाकारकस्य-प्रत्ययानां मोहरूपव्यभिचारिभावव्यञ्जकत्वं दर्शयति ।

अत्रेति लिखन्निति । सन् तिङा लिखन् वैशिष्ट्यमात्रेण स्थितिप्रतीत्या बुद्धिपूर्वकलिखनाभावरूपो मोहो व्यङ्ग्यः प्रयत्नवाचकाख्यातप्रत्ययनिर्देशे तु प्रयत्ननिदानभूता बुद्धिरपि प्रतीयेत अतो लिखतीति नोक्तमित्याह ।

लिखतीति । आस्त इत्यत्र वर्त्तमानया मोहव्यञ्जकावस्थया स्थितेर्वर्त्तमानत्वलाभात् वर्त्तमानमोहो व्यङ्ग्य इत्याह अपित्विति । एवञ्च आस्त इत्यत्र तिङा व्यङ्ग्यो दर्शिते तथा आस्त इति पुनर्लिखनं न त्वासित इति प्रत्युदाहरणप्रदर्शनायेति बोध्यम् । निर्देशे मूढ़ता व्यञ्जकावस्थया स्थितेरतीतत्वप्राप्ताविदानीं मूढ़ता न प्रतीयेतेति भावः । भूमिमितीति । भूमेः कर्मत्वोक्तौ लेख्यरूपं कर्म न प्रतीयते येन लेख्यविषय

गामरुहम्हि गामे वसामि णअरट्ठिइं ण जाणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥

अत्र नागरिकाणामिति षष्ठ्या: ।

रमणीय: क्षत्रियकुमार आसीदिति कालस्य, एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्ति: । वचनस्य यथा

ताणं गुरुग्गहणाणं ताणं उक्कंठाणं तस्स पेम्मस्स ।
ताणं भणिआणं सुन्दर ! एरिसिअं जाअमवसाणं ॥

---

ज्ञानपूर्वकता प्रतीयेत अतो लेख्यज्ञानमूढ़ता तदग्राह्या प्रत्युदाहरति न तु भूमाविति । तदाहि सकर्मकलिखधातोर्लेख्यं कर्म प्रतीयेत ततश्च लेख्यविषयज्ञानमूढ़ता न प्रतीयते इति भाव: । न च भूमिमिति करणेऽपि भूमिविषयज्ञानं प्रतीयत एव अत: कथं मूढ़तेति वाच्यम् उन्मीलितेन चक्षुषा भूमिविषयज्ञानजननेऽपि लेख्यलिखनज्ञानराहित्यरूपस्यैव मौढ्यस्याच व्यङ्ग्यत्वात् तदाह न बुद्धिपूर्वकमिति । सम्बन्धस्येति सम्बन्धार्थकविभक्तेरित्यर्थ: सम्बन्धस्य पदैकदेशत्वाभावात् ।

ग्रामरुहास्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥ इति संस्कृतम् ।

कस्यहि नागरिकस्त्रीरुपहसन्त्या ग्राम्यस्त्रिया उक्तिरियम् । ग्रामरुहा ग्रामभवा नागरिकाणामित्यनादरे षष्ठी तस्याश्चानादर: सम्बन्धश्चार्थ: तथाच नागरिका: अनादृत्य तासां पतीन् स्वयं हरामीत्यर्थ: तत्पतिभिस्तदनादरणस्य ग्राम्यस्त्रीप्रयुक्तात् साऽप्यादर्शीयती हरणादनयोरेककर्तृकता ।

अत्रेति । अनादरबोधनद्वारा गर्वरूपकव्यभिचारिभावोऽत्र षष्ठ्या व्यङ्ग्य इत्यर्थ: । चक्रवर्त्तीतु अनादर एव व्यङ्ग्य इत्याह तन्न । अनादरे षष्ठ्यानुशासनात् तद्वाच्यत्वादेव अनादरस्य वस्तुरूपत्वेन रसादित्वाभावात् च । आसीदिति सम्प्रति त्वमध: कवलितत्वान्न भविष्यतीति भाव: । कालस्येति कालार्थकविभक्तेरित्यर्थ: अत्रापि गर्वो व्यङ्ग्य: । वचनस्येति एकत्वादिवचनस्येत्यर्थ: ।

तेषां गुरुग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्ण: ।
तासां भणितीनां सुन्दर ! ईदृशं जातमवसानम् ॥ इति संस्कृतम् ।

अत्र गुणग्रहणादीनां बहुत्वं, प्रेम्णस्त्वेकत्वं द्योत्यते।
पुरुषव्यत्ययस्य यथा

रे रे चञ्चललोचनाञ्चितरुचे! चेतः! प्रमुच्य स्थिर
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि?।
किं मन्ये विहरिष्यसे? बत हतां मुञ्चान्तराशामिमाम्
एषा कण्ठतटे कृता खलु शिला संसारवारां निधौ॥

अत्र प्रहासः। पूर्वनिपातस्य यथा

येषां दोर्बलमेव, दुर्बलतया ते सम्मताः, तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्य्यं किमुर्वीश्वरैः।

---

कृतावज्ञं नायकं प्रति नायिकायाः प्रीतिभर्त्सनमिति।

अत्रेति। गुणबाहुल्यप्राप्त्या तद्ग्रहणे बहुवचनम् अन्तरा अविच्छेदेन प्रेम्णः एकवचनं द्योत्यत इति उच्यत इत्यर्थः। तदुक्तिद्वारा च अनुरागरूपरत्यतिशयो व्यङ्ग्य इत्यर्थः। पुरुषव्यत्ययस्येति व्यत्ययितमध्यमोत्तमपुरुषयोरित्यर्थः।

रेरे इति साक्षेपसम्बोधने चञ्चलनयनायाम् अञ्चिता गमिता रुचिर्येन रेरे चेतः! एणनयनां नारीमवलोक्य स्थिरप्रेमाणमात्मनो धैर्यरूपं महिमानं विमुच्य किं नृत्यसि? नर्त्तकवल्लोलं कथं भवसि? नृत्यहेतुं तदभिधानं पृच्छति किं मन्य इति। किं मन्यसे इत्यर्थः। मन्यमानमर्थमाह विहरिष्यसे इति विहरिष्यामीत्यर्थः। अनया सह विहरिष्यामीति किं मन्यसे इत्यर्थः अत्राभ्युपगमं निवारयति बत हतामिति। हतां दुष्टाम् अन्तराशामिमां मुञ्च कथं मोक्ष्यामीत्यत्राह।

एषेति एषा आशा त्वया संसारवारांनिधौ कण्ठतले शिला कृता अनया शिलया मोक्ष्यसीति भावः। शान्तपुरुषस्योक्तिरियम्।

अत्रेति। परिहासे मन्योपपदे मन्यतेरुत्तम एकवच्चेति सूत्रेण उत्तममध्यम-पुरुषद्वये विधीयमाने परिहासो गम्यमान एव इत्यर्थेन अत्र परिहासो व्यङ्ग्य इत्यर्थः न तु वाच्यः पुरुषद्वयान्तपदयोर्वाक्यत्वे नियमे न परिहासस्य परस्परसापेक्षतद्वाच्य-त्वासम्भवात् वाच्ये न शक्तिर्न वा लक्षणेति नियमात्। तथाच व्यङ्ग्यप्रहासद्वारा शान्तरसप्रकर्षो व्यङ्ग्य इत्यर्थः। पूर्वनिपातस्येति पूर्वनिपतितसमासपदैकदेशस्य इत्यर्थः। पूर्वनिपतितपदस्येत्यर्थः।

ये क्ष्माशक्र ! पुनः पराक्रमनयस्वीकारकान्तक्रमाः,
ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते। विभक्तिविशेषस्य यथा

प्रधनाध्वनि वीर ! धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप ! भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥

अत्र दिवसेनेत्यपवर्गे तृतीया फलप्राप्तिं द्योतयति।

भूयोभूयः सविधनगरीरथ्यया पर्य्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।

---

दीर्वलमेवेत्यत्र एवकारात् नीतिवलव्यवच्छेदः ते दुर्वलतया सम्मता ज्ञाता इत्यर्थः। नीतिमात्रवलानामपि वलवत्त्वं खण्डयति तैरपीति। तैः वुद्धिस्थैः किं कार्य्यं किमपिकर्त्तुं न शक्यत इत्यर्थः। क्ष्माशक्र ! हे पृथिवीन्द्र ! ये पुनरित्यन्वयः पराक्रमी दोर्वलं नयो नीतिः कान्तक्रमाः कमनीयव्यवसायाः ते भवादृशाः भवत्सधर्माणः परं केवलं पवित्रा स्त्रिजगति द्वित्रा द्विधा त्रिधा नैव स्युः कदाचिदेकः स्यादिति भावः।

अत्रेति। यत्रार्च्चितं द्वयी रित्यनेन पूर्वनिरूपितपदस्य स्वार्थेऽर्च्चितत्ववोधकत्वात् ततश्च पराक्रमि राजविषयभावप्रकर्षो व्यङ्ग्य इत्यर्थः। विभक्तिविशेषस्य पवर्गविहिततृतीयायाः।

हे वीर ! धनुर्ध्वनिभृति धनुष्टङ्कारयुक्ते प्रधनाध्वनि युद्धपथे तव विधुरैः शत्रुभिः दिवसं व्याप्य अयोधि हे नरप ! भवांस्तु विधिसिद्धस्य युद्धविधायकविधिसिद्धस्य साधुवादस्य पदं यथा स्यात् तथा दिवसेन अयुद्ध दिवसवृत्तियुद्धक्रियाफलसिद्धौ तत्समाप्तिमानित्यर्थः। युद्धफलञ्चात्र जय एव न तु पराजयः। विधिसिद्धेत्यादि विशेषणात् एष स च अपवर्गे तृतीयेति सूत्रेण विहिता। अर्थ इत्याह अत्रेति फलसिद्धौ क्रियासमाप्तिः अपवर्गलक्षणं द्योतयतीति वक्तीत्यर्थः। सूत्रानुष्ठितार्थस्य वाच्यत्वात् तदुक्तिद्वारा च राजविषयभावप्रकर्ष स्तद्व्यङ्ग्य इत्यर्थः।

भूयो भूय इति लवङ्गिकया कथितमिति मालतीमाधवे चूर्णकेनान्वयः। भवनवलभी भवनोपरिभवनं तस्य तुङ्गवातायनम् उच्चगवाक्षस्तत्र स्थिता मालती-

साक्षात्कामं नवमिव रतिर्मालती माधवं यत्
गाढोत्कण्ठाललितलुलितैरङ्गकैस्ताम्यतीति ॥

अत्र अनुकम्पावृत्तेः करूपतद्धितस्य ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते ॥

अत्र प्रशब्दस्य उपसर्गस्य ।

कृतञ्च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।

---

तन्निकटया नगरीरथ्यया नगरीमध्यराजपथेन भूयो भूयः पर्य्यटन्तं माधवं दृष्ट्वा दृष्ट्वा ललितललितैः अत्यन्तकोमलैः अङ्गकैः विशिष्टा ताम्यतीत्यर्थः । साक्षादित्यव्ययं कामरत्योर्द्वयोरपि विशेषणं प्रत्यक्षं नवं कामं प्रत्यक्षा रतिः इवेत्यर्थः ।

अत्रेति । तथाच ताल्पर्य्योग्यैरनुकम्पनीयै रङ्गै रित्यर्थे ताल्पर्य्योग्याङ्गताल्पा विप्रलम्भप्रकर्षो व्यङ्ग्य इत्यर्थः कप्रत्ययस्य तद्धितत्व' पाणिनिमते बोध्यन् उपसर्गरूपस्य पदैकदेशस्य रसादिव्यञ्जकत्व माह परिच्छेदेति । माधवस्य मकरन्दे स्वावस्थानिवेदनमिदम् । मम कोऽपि विकारोऽन्तर्मनस' जडयति तापञ्च कुरुते । विकार विशेषणान्याह ।

परिच्छेदेति । इयत्तया ज्ञानं परिच्छेदः अस्मिन् जन्मनि पुनरनुभवपथम् इत्यन्वयः पुनः शब्दोऽत्र व्यवच्छेदार्थः तथा चास्मिन् जन्मनि तु इत्यर्थः तेन जन्मान्तरे कदाचित् तथा स्यादित्यर्थः । आवृत्तिवाचीतु नात्र पुनः शब्दः प्राग्जन्मनि पुनर्जन्मत्वस्य प्रागनुभवे पुनरनुभवत्वस्य वा सम्भवात् विवेकस्य इतरभेदविचारस्य प्रध्व'सान्निःशेषाभावादुपचितेन महामोहेन विवेकविपरीतज्ञानेन गहनो व्याप्तः प्रपूर्वो ध्व'सः प्रकर्षं द्योतयन् माधवस्य विप्रलम्भप्रकर्षं व्यनक्तीत्यर्थः ।

कृतञ्चेति । राज्ञि मन्त्रिवाक्यमिदं गर्वोऽत्र क्रोधहेतुभूतो विवक्षित स्तथाच

तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ॥

अत्र तुल्ययोगिताद्योतकस्य च इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्
अस्मद्भाग्यविपर्य्ययात् यदि परं देवो न जानाति तम् ।
वन्दी वैष यशांसि गायति मरुत् यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकव-चनानां न त्वदिति न मदिति अपि तु अस्मदिति अस्य सर्वांशे-

---

किमन्यदुत्तरमेवं सति एव नोऽस्माकं द्विषो निहताः अवन्ध्यक्रोधत्वादिति भावः। अत्र दृष्टान्तालङ्कारमाह तमांसीति। मौलितां मौलिस्थताम्।

अत्रेति। तुल्ययोगिता सा च द्वितीयसमुच्चयालङ्काररूपा सत्वन्या युगपद्या गुण क्रियेति तल्लक्षणं नत्वत्र तुल्ययोगिताऽसंलक्ष्योऽलङ्कारनियतानां सकृद्धर्मः सा पुन स्तुल्ययोगितेति तल्लक्षणेन नियतानां प्रकृतानामप्रकृतानामेव वा एकधर्मान्वय एव तदलङ्कारबोधनात् तद्द्योतकस्य वाचकस्य कारणकार्य्ययोः गर्वशत्रुघातयोः एककार्य्यताया आहार्य्यबोधने शीघ्रशत्रुघातव्यञ्जनात् राजविषयभावप्रकर्षो व्यङ्ग्य इत्यर्थः। च शब्दस्य अव्ययत्वेऽपि पदोत्तरनिपातनियमान्निपातत्वं पदैकदेशत्वञ्च। एकत्रैव प्रत्ययप्रकृतीनां व्यञ्जकत्व मुदाहरति रामोऽसाविति।

रावणं प्रति विभीषणस्य वाक्यमिदं असौ बुद्धिस्थः पुरः प्रायोव्यञ्जनाच्च पुरः प्राय इत्यर्थः रामो रामनाम्ना ख्यातः देवो भवान् पुन र्यदि तं न जानाति तदा अस्मद्भाग्यविपर्य्ययादेवेत्यर्थः यस्य रामस्य यशांसि वन्दी स्तुतिपाठक इव मरुद्वायुः सप्तभिः स्वरैर्गायति कीदृशैः स्वरैः एकवाणस्य आहतिः यत्र तादृशा ये श्रेणीभूता विशालास्ताला येषां विवरैः उद्गीर्णैः रामैकबाणभिन्नसप्ततालसप्त-विवरप्रविष्टवायुफूत्कारानेव निषादर्षभगान्धारादिसप्तस्वरकरणकयशोगानत्वेनाध्य-स्येद मुक्तम्।

अत्रेति। असावित्यनेन पुरः प्रायत्वस्य तदेकवचनेन च सहायनिरपेक्षमेव

पिणः भाग्यविपर्य्ययादिति अन्यथासम्पत्तिमुखेन न तु अभाव-मुखेन अभिधानस्य।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना।

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य, तरुण-त्व इति धनुषः समीप इति मौलौ वसतीति त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित् स्वरूपस्थविशेषो यश्चमत्कारका-री,—स एव व्यञ्जकत्वं प्राप्नोति। एवमन्येषामपि बोद्ध-व्यम्।

---

तत्पौरुषस्य भुवनपदेन वासप्रसिद्ध्यधिकरणदेशविस्तारस्य तदीयबहुवचनेन तद्बाहुल्यस्य गुणपदेन पित्रादिपौरुषनिरपेक्षस्वगुणाधीनपौरुषस्य तदीयबहुवचनेन च तद्बाहुल्यस्य बोधनात् त्वासरूपव्यभिचारिभावस्तद्व्यञ्जक इत्यर्थः। यद्यपि एकेनैव तद्व्यञ्जनसम्भवेऽन्यवैयर्थ्यं तथापि बहुभिः प्रकृष्टं तद्व्यञ्जनं बोध्यम्। नत्वदितीति त्वद्भाग्यविपर्य्ययान्मद्भाग्यविपर्य्ययादिति न कृतमित्यर्थः। तथा करणे एकैकस्य भाग्यविपर्य्ययलाभः स्यात् अस्मदिति करणे तु बहुवचनान्तसमास एव तथा रूप-मित्येतदाह अपि तु इति। अस्मत् भाग्यादित्यकृत्वा अस्मद्भाग्यविपर्य्ययादिति करणव्यञ्जकत्वमाह भाग्येति। अभाग्यनिर्देशेऽपि भाग्यभावात् शुभं न जायेत अनि-ष्टन्तु कुतः स्यात् विपर्य्ययत्वेनोपादाने तु भाग्यस्यैव दुरदृष्टरूपान्यथासम्पत्त्या अनिष्टोत्पत्तिः प्रतीयते इति भावः। तथा चास्यापि त्रासव्यञ्जकत्व मेवेत्युक्तम्। विदग्धप्रयोज्यसंस्कृतविशेषस्वरूपैकदेशस्यापि व्यञ्जकत्व माह।

तरुणिमनीति। तस्याः तरुणिमनि तारुण्ये कर्त्तरि कलां रसचातुरीं कलयति जनयति सति भ्रुवोरग्रे च कर्त्तरि अनुमदनधनुर्मदनधनुषः समीपे कलां पठति सति इयञ्चकितहरिणचलनयना सकलललनामौलिमधिवसति सर्वाङ्गेन अधिका भवतीत्यर्थः।

अत्रेति। तरुणिमनीत्यत्र इमनिच् अनुमदनधनुरित्यत्राव्ययीभावः। मौलीमधि-वसतीत्यत्र वसत्याधारभूतो मौलिः कर्मभूतः। स्वरूपस्येति एष स्वरूपविशेषः गाढ-

वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते।

अपिशब्दात् प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः।

**भेदास्तदेकपञ्चाशत्**

व्याख्याताः।

**तेषां चान्योन्ययोजनम् ॥ ४२ ॥**

---

व्युत्पन्नैरेव प्रयोज्यः तथाच तत्प्रयुक्तत्वज्ञानादेव रसप्रकर्षबोध इति भावः। संस्कृतमात्रज्ञसामान्यप्रयोज्यस्तु तरुणत्वं इत्यादिना शृङ्गारोत्कर्षव्यञ्जक इत्याह तरुणत्वं इत्यादित्वादिभिरिति भावविहितत्वं प्रत्यये इमनिजोस्तुल्यं वाचकत्वम् एवमपरयोः द्वयोरपि। अस्ति कश्चिद्विशेष इति गाढव्युत्पन्नप्रयोज्यत्वं हि सविशेषः तदवच्छेदकधर्मस्य च चमत्कारात्मकफलाधीनानुभावैकगम्यत्वेन विशिष्य वक्तुमशक्यत्वात् कश्चिदित्युक्तम्। चक्रवर्त्ती तु इमनिजादीनां कोमलवर्णघटितत्वमेवेति व्याचष्टे तन्न, तदा वर्णव्यञ्जकत्वोदाहरणत्वस्यैवापातात् तस्य वक्ष्यमाणत्वादेव।

अपिशब्दादिति।

वर्णेषु अपि इति अपिशब्दादित्यर्थः। कुलकान्तकमहावाक्यरूपप्रबन्धव्यङ्ग्यस्य अर्थशक्त्युद्भवे पूर्वदर्शितत्वात् तद्व्यावर्त्तनायाह नाटकादिषु इति। आदिशब्दान्नाटिकारूपकादीनां दशविधानामेवाभिनेयार्थानां परिग्रहः। शकुन्तलादि नाटकं रत्नावल्यादि नाटिका वा महावाक्येन शृङ्गारस्य हि व्यञ्जकम्। एव मुत्तररामचरितम् करुणस्येति। गणितभेदाभ्यां सहेति। असंलक्ष्यक्रमस्य रसादिरूपत्वेन तस्य पदवाक्यप्रकाश्यत्वरूपगणितभेदाभ्यां सहेत्यर्थः। एवञ्च प्रभेदद्वयस्य पूर्वगणितपञ्चविंशद्भेदगणनप्रविष्टत्वात् तत्परिहारेण पदैकदेशध्वनौ अन्यं नाटकादिप्रबन्धव्यङ्ग्यरूपं प्रभेदचतुष्टयमेव रसादीना मपरं गणनीयम्। तथाच पूर्वगणिताः पञ्चविंशत्कुलकात्मकमहावाक्यव्यङ्ग्या अर्थशक्त्युद्भवा द्वादशभेदा रसादीनाञ्च पदैकदेशादिव्यङ्ग्यं प्रभेदचतुष्टयमिति एकपञ्चाशद्भेदा ध्वनयः इत्याह भेदाः तदेकेति। एवं शुद्धानेकपञ्चाशत्भेदेन गणयित्वा तेषामेकत्रीकामिलने बाहुल्यमाह तेषाञ्चेति। योजनं मिलनं तद्वेव केन प्रकारेण इत्यत्राह।

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति, यावत्तेषां स्वप्रभेदैरेकपञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने ।

वेदखाब्धिवियच्चन्द्राः (१०४०४)

शुद्धभेदैः सह

शरेषु युगखेन्दवः ॥४३॥ (१०४५५)

---

सङ्करेणेति । त्रिरूपं सङ्करं व्याचष्टे संशयास्पदत्वेनेति । उभयथापि सम्भवात् किमिदं वा ध्वनिप्रभेदमिति संशयास्पदत्वं प्रकृष्टसानत्वमनुग्राह्यत्वं प्रकर्षकत्वमनुग्राहकत्वम् उभयस्य एकेन व्यञ्जकेन व्यङ्ग्यत्वमेकव्यञ्जकानुप्रवेशः ।

वेदिति । अङ्कानां वामतः क्रम इति रीत्याऽयं निर्देशः तथाच चतुरधिकचतुः शताधिकमेकमयुतं परस्परयोगघटिता ध्वनयः इत्यर्थः । व्यङ्ग्यसङ्ग्राहद्विवशादेव तद्वतां ध्वनिकाव्यानामपि सङ्ग्राहर्द्धः न च एकपञ्चाशच्चतुर्गुणने चतुरधिकद्विशतमेव भवति तत्कथं वेदखाब्धीत्यादि रङ्क इति वाच्यम् ? एकपञ्चाशता सह एकैकस्यैव चतुर्गुणने एकैकस्यैव चतुरधिकद्विशतरूपत्वेन एकपञ्चाशतामेव चतुरधिकद्विशतगुणने वेदेत्याद्यङ्कलाभः स्यात् न चैकस्य परैः पञ्चाशता सह संशयास्पदत्वादि चातुर्विध्यं घटत एव स्वेन सह स्वस्य तदसम्भवादेकपञ्चाशता सह चातुर्विध्यं कथमुपपद्यतामिति वाच्यं स्वसजातीयव्यक्तीनाम् अनेकत्वेन सजातीययोः तत्सम्भवात् अवेदमवधेयम् उत्सर्गतः प्राप्तत्वादेव ग्रन्थकृता इयं गणना कृता निपुणावधाने तु इदं स्रयमेव तथाहि लक्षणामूलाभिधाध्वनीनाम् एकव्यञ्जकानुप्रवेशो न सम्भवत्येव व्यञ्जकस्यैकपदस्य लाक्षणिकवाचकत्वोभयाभावात् तथा शब्दार्थोभयभुवः पदैकदेशप्रकाश्यैः पदप्रकाश्यैर्वा सह एकव्यञ्जकानुप्रवेश एव न सम्भवति व्यञ्जकद्वयस्य तत्र वाक्यत्वनियमात् किञ्च एकस्य एकपञ्चाशता सह चातुर्विध्यं गणनीयमस्तु तदुत्तरस्य तु पञ्चाशतैव चातुर्विध्यं गणनीयं स्वपूर्वेण चातुर्विध्यस्य तु पूर्वचातुर्विध्यगणना-

तत्र दिङ्मात्रम् उदाह्रियते

खणपाहुणिआ देअर ! जाआए सुहअ ! किंपि दे भणिआ ।
रुअइ पड़ोहरवलहीघरम्मि अणुणिज्जउ बराई ॥

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे सङ्क्रमितः किमनुरणनन्यायेनोपभोगे एव व्यङ्ग्ये व्यञ्जकः ? इति सन्देहः ।

---

प्रविष्टत्वात् तन्न पुनर्गणनीय एव तदुत्तरस्य जनपञ्चाशतैव सह चातुर्विध्यं गणनीयं स्वपूर्वद्वयेन सह चातुर्विध्यद्वयस्य पूर्वगणनाप्रविष्टत्वादित्येवं रीत्या चरमस्यैव स्वेन सह चातुर्विध्यं गणनीयं तथाच वेदेत्याद्यङ्कान्नवशताधिकचतुःमहस्रं ह्रासनीयं तथाच ५५०४ वेदाकाश शरेषव एवाङ्का भवन्ति दर्शयिष्यते च स्वयमेवं रीतिर्विरोधालङ्कार गणने जाति श्चतुर्भिर्जात्याद्यैः विरुद्धात् गुणैस्त्रिभिः । क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश । इत्यनेन अन्यथा तत्रापि षोड़शविधत्वस्यैवापत्तेर्न दशविधत्वस्येति । इत्थं मिलितानां सङ्ख्याप्रदर्शने कृते तत्र शुद्धैकपञ्चाशतः प्रवेशेन सङ्ख्यामाह शुद्धभेदैः सहेति । युगानि चत्वारि ।

खण पाहुणि आ इति ।

क्षण प्राघुणिका देवर ! जायया सुभग ! किमपि ते भणिता ।
रोदिति पश्चाद् भागवलभीगृहेऽनुनीयतां वराकी ॥ इति संस्कृतम् ॥

देवरं प्रति भातृपत्न्या उक्तिरियम् ।

क्षण उत्सवः तत्र प्राघुणिकाऽतिथिरुत्सवमिलितेत्यर्थः पश्चादर्थे परोहड इति देशी । तथाच हे देवर ! उत्सवमिलिता काचित् तव जायया किमपि भणिता गदिता पश्चाद्वलभीगृहे रोदिति सा वराकी दुःखिता त्वयाऽनुनीयतामिति सपरिहासोक्तिः ।

अत्रेति । उपभुज्यतामिति प्रतीतिस्तावन्नवत्येव परन्तु प्रीतिजनकक्रियात्मकस्य अनुनयस्य विशेषे उपभोगेऽनुनयपदं लक्षणया किं तत् क्रोधापसारणपूर्वकत्वं तद्व्यङ्ग्यं किं वाऽनुनीयतामिति पदादनुनयत्वेनैव अभिधयाऽनुनयोपस्थितौ उपभुज्यतामिति तद्व्यङ्ग्यमिति संशयादर्थान्तरसंक्रमितवाच्यलक्षणामूलध्वनिना सह स्वतःसम्भव्यर्थशक्त्युद्भववस्तु व्यङ्ग्यवस्तुनः पदप्रकाश्यस्य संशयास्पदत्वरूपसङ्करध्वनिरित्यर्थः । व्यङ्ग्ययोः

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे,
वैदेही तु कथं भविष्यति हहा हा देवि! धीरा भव॥

अत्र लिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह रामोऽस्मीत्यर्थान्तरसङ्क्रमितवाच्यस्य अनुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन च अर्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः। एवमन्यदपि उदाहार्यम्।

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थः उल्लासः।

---

संशयास्पदत्वेन तद्वतः काव्यस्यैव तन्नामकत्वं बोध्यमित्युक्तमेव। द्विविधसङ्करस्य संसृष्टिरूपैकविधस्य च एकमुदाहरणमाह।

स्निग्धश्यामलेति। वर्षासु सीताविरहिणो रामस्योक्तिरियम्। स्निग्धया श्यामलया च कान्त्या लिप्तं वियत् यैः तादृशाः प्रचलद्बलाकाश्च घना जाता इति शेषः। तथा वाताः शीकरिणोऽम्बुकणयुक्ता जाता इति शेषः। तथा पयोदसुहृदां मयूराणाम् आनन्दजन्याः केकाः शब्दाः कला गभीरा इत्यर्थः। केकापदोपादानादेव मयूरशब्दप्राप्तावपि पयोदसुहृदामित्यस्य उपादानमानन्दसम्बन्धित्वेनैवेति केचित्। वस्तुतस्तु केका वाणी मयूरस्येत्यनेन मयूरवाण्याम् एव केकाशब्दः तत्र शब्दान्तरे तादृशप्रयोगाभावानुसन्धानसाचिव्यात् मयूरशब्दोपस्थितिरिति ब्रूमः। यद्वा मयूरादिसमभिव्याहारसत्त्वे स्वार्थैकदेशे शब्दमात्रे केकादिशब्दा निरूढलाक्षणिका इति ब्रूमः। एते उद्दीपकाः कामं यथेष्टं सन्तु मां हन्तुं न समर्था इति भावः। ननु त्वामेते हनिष्यन्तीत्यत आह कठोरेति। रामोऽस्मि दुःखसहिष्णुरस्मि अतः सर्वमेतदुद्दीपककृतं प्रहारं सहे। दुःखसहिष्णुत्वमेव कथमित्यत आह कठोरेति। सर्वं सहे इति वसुमती सम्बोधनमिति ऋजुबुद्धयः। अकठोरहृदया वैदेही तु कथं भविष्यति किं प्रकारा भविष्यतीत्यर्थः। अत्रेति द्रवद्रव्यकरणव्याप्तेरेव लेपपदार्थत्वेन कान्त्या व्याप्तौ लक्षणैव तथा चेतनस्यैव सुहृत् हृदयशून्यस्य पयोदस्य तु उद्याने नर्त्तितत्वेन रूपेण

## पञ्चमः उल्लासः ।

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥१॥**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।**

---

लक्षणैव अनयोर्विरहोद्दीपकत्वं सामाजिकज्ञेयं व्यङ्ग्यं मेघकान्त्या वियद्व्यापनस्य मयूरनृत्यस्य च विरहदुःखोद्दीपकत्वात् तयोः परस्परनिरपेक्षत्वरूपा संसृष्टिरित्यर्थः । अत्यन्ततिरस्कृतवाच्ययोरित्यत्र तन्मूलव्यङ्ग्ययोरित्यर्थः । ताभ्यां सहेति रामपदेन दुःखसहिष्णुत्वेन रूपेण रामस्योपस्थानादर्थान्तरसंक्रमितवाच्यलक्षणा तद्व्यङ्ग्यञ्च दुःखेऽप्यम्रियमाणत्वेन रामस्य स्वावधीरणं तत्प्रयोजनं गूढरूपं व्यङ्ग्यम् । तस्य च ताभ्यां तत्पदद्वयव्यङ्ग्याभ्यां विरहदुःखोद्दीपकत्वं व्यक्तिभ्यां सहानुग्राह्यानुग्राहक-भावेनेत्यर्थः रामस्य स्वावधीरणमनुग्राह्यं विरहदुःखोद्दीपकत्वं द्वयमनुग्राहकमित्यर्थः इमौ विरहदुःखोद्दीपकौ इति रामेण ज्ञाते तथापि स्वामरणात् स्वावधीरणातिशयात् रामपदेति दुःखसहिष्णुत्वलाक्षणिकरामपदेन तत् स्वावधीरणमिव तदीयविप्र-लम्भोऽपि दुःखसहिष्णुत्वबोधनद्वारा व्यज्यत इत्येकस्मिन् रामपदे व्यङ्ग्यत्वेन तत् द्वयानुप्रवेश इत्यर्थः अर्थान्तरसंक्रमितेति वाच्यपदं तद्व्यङ्ग्यपरम् अत्र रसध्वनिपदञ्च ध्वन्यमानरसपरम् अत्र बोध्यम् ।

काव्यप्रकाशादर्शे चतुर्थः प्रतिबिम्बः ।

---

एवं ध्वनाविति ध्वनिसामान्यलक्षणानन्तरं गुणीभूतव्यङ्ग्यसामान्यलक्षणस्य कृतत्वात् तत् प्रभेदकथनेऽपि तथैव क्रम इति दर्शितमनेन ।

अगूढमित्यादि सन्दिग्धप्राधान्यं तुल्यप्राधान्यञ्चेति द्वयं तथाच व्यङ्ग्यमित्यस्य वचनव्यत्ययेनैव द्विवचनान्तद्वयेऽन्वयः प्राधान्यवाच्यार्थापेक्षया बोध्यम् । एवं व्यङ्ग्या

कामिनीकुचकलशवत् गूढ़ं चमत्करोति अगुढ़न्तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव। अगूढ़ं यथा

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचिव्यधव्यतिकरेण युनक्ति कर्णौ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न सम्प्रति भवामि किमावहामि ?॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु।

---

ष्टकौ उक्तौ तद्वशात् काव्यस्याप्यष्टभेदत्वमित्याह एवं गुणीभूतव्यङ्ग्यस्येति भिदा भेदः। व्यङ्ग्यस्य अगूढ़त्वे कथं गुणीभूतत्वमित्याह।

कामिनीति। तथा च गूढ़त्वे ध्वनित्वमेवेत्युक्तम्। तत्र लक्षणामूलव्यङ्ग्यस्य अगूढ़त्वे दर्शयितव्ये अर्थान्तरसंक्रमितवाच्यलक्षणामूलव्यङ्ग्यस्य अगूढ़त्वं दर्शयति।

यस्या सुहृदिति। शत्रुसेवया जीवतो राज्ञः सुहृदं प्रत्युक्तिरियम्। असुहृदा कृतातिरस्कृतिवार्त्तारूपा एत्य यस्य मम कर्णौ तप्तसूचीनामिव वेधव्यतिकरेण वेधसमूहेन युनक्ति रिपुतिरस्कारवार्त्तापि यस्य दुःश्रवेत्यर्थः सोऽपि अहं काञ्चीगुणग्रथनभाजनमस्मि रिपोः काञ्चीगुणं ग्रथ्नामीत्यर्थः अतः सम्प्रति जीवन्नेव न भवामि किमात्मनो हितचेष्टामावहामि करोमीत्यर्थः। चक्रवर्त्ती तु शरणागतस्तप्तशलाकया स्वकर्णौ विध्यतीति पाश्चात्यव्यवहारानुसारिणीोक्तिरियं तथाच मयैव कृता तिरस्कृतिर्यस्य ममाऽसुहृत्तप्तसूचीनां वेधव्यतिकरेण स्वकर्णौ युनक्ति इति तच्च तादृशव्यवहारस्य वैरूप्यदुष्टत्वादुपेक्षितम्।

अत्रेति। कथयतोऽजीवनस्य बाधितत्वात् जीवनपदस्य प्रकृष्टजीवने लक्षणा मृतप्रायत्वञ्च नञ् समभिव्याहारात् तद्व्यङ्ग्यम्। तच्च विदग्धाविदग्धसकलप्रतीयमानत्वात् वाच्यायमानत्वेनागूढ़मित्यर्थः। अत्यन्ततिरस्कृतवाच्यलक्षणामूलमगूढ़ं तदुदाहरति।

एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥

अत्र चुम्बनस्य अत्यन्ततिरस्कृतवाच्यस्य

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥ (१)

अत्र केनापि अत्र इति अर्थशक्तिमूलानुरणनरूपस्य। तस्यापि अत्र इति युक्तः पाठः।

अपरस्य रसादेर्वाच्यस्य वा (वाक्यार्थीभूतस्य) अङ्गं रसादि अनुरणनरूपं वा।

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

अत्र शृङ्गारः करुणस्य।

कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।
स्पर्द्धाबन्धसमृद्धयेव सुदृढं रूढ़ा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्य्यते॥

अत्र भावस्य रसः।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयः,
तानेतानपि बिभ्रतो किमपि न क्लान्तासि तुभ्यं नमः।

---

उन्निद्रेति। मानिनीं प्रति कामिनः प्रातःकालवर्णनमिदम्। कोकनदं रक्तपद्मम् एतच्च रवेर्बिम्बं चकास्तीत्यन्वयः। उदयाचलचुम्बि उदयाचलस्पर्शीत्यर्थः।

भावस्य अङ्गं भावमाह।

अत्युच्च इति। अर्थात् हे राजन् ! गिरिसमुद्रधरणाश्चर्य्येण यावन्मुहुर्मुहुर्भव

आश्चर्य्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भ्रुवः,
तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः॥
अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य।
वन्दीकृत्य नृप! द्विषां मृगदृशस्ताः पश्यतां प्रेयसाम्,
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे!
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे॥
अत्र भावस्य रसाभासभावाभासौ प्रथमद्वितीयार्द्धद्योत्यौ।

---

इति स्तुतिं प्रस्तौमि करोमि तावदिमां भुवं बिभ्रत्तव भुजः स्मृतः ततो भवतोऽशक्य-स्तुतिकत्वात् वाचो मुद्रिताः आरोप्यत्वाभावात् तद्गुणानामिति भावः। यद्यपि भुजेन पृथिव्या वस्तुतो धरणं नास्ति तथापि धरणपोषणार्थकश्लिष्टभृमहिम्ना पोषण एव धारणाध्यासादिदमुक्तम्। भुवः स्तुतिरीतिमाह अत्युच्चा इति। अत्युच्चत्वस्फार-त्वाभ्यां प्रथमं गिर्य्यम्भोध्योः स्तुतिं कृत्वाह तानेनानिति। तानेतान् गिर्य्यम्भोधीन् किमप्यल्पमपि न क्रान्तासि एतदन्तां स्तुतिं कृत्वा तां नमस्यति तुभ्यमिति एवञ्च स्तुतिमित्यत्र सनमस्कारामिति बोध्यम्। अत्रेति रत्याख्य इत्यनेन भूविषयहर्षादिरूप-व्यभिचारिभावशङ्का वारिता एवं राजविषयेत्यत्रापि। रतभावयोराभासद्वयाङ्गकं भावमाह वन्दीकृत्येति। हे नृप! तव सैनिकाः सैन्यास्तव द्विषां मृगदृशो वन्दीकृत्य ताः पश्यतः प्रेयसोऽनादृत्य ता एव श्लिष्यन्तीत्यादि क्रिया चतुष्टयम्। लान्ति गृह्णन्ति पश्यतामित्यनादरे षष्ठी तैः प्रत्यर्थिभिस्तु त्वं तथापि स्तूयसे स्तुत्याकारमाह अस्माक-मिति। हे औचित्यस्य वारांनिधे! समुद्र! तत्तस्मात् दुष्कृतैर्निपतितोऽपि सुकृतैरिति अनौचित्यकरणेऽपि औचित्य समुद्रेति विपज्जननेऽपि विपदो यास्ता इति भीत्या उक्तम्।

अत्रेति। प्रात्यर्थिकृतस्तुत्या राजविषयो वक्तृभावो निराकाङ्क्षवाक्यव्यङ्ग्यतया अङ्गी तदङ्गे च परनायिकालिङ्गनादि व्यङ्ग्यः पूर्वार्द्धद्योत्यो रसाभासो वैरिविषय-स्तुतिव्यङ्ग्यो वैरिणामेव भावाभासश्च द्वितीयार्थद्योत्य इत्यर्थः। शत्रुनायिका-विड़म्बनेन शत्रुस्तुत्या राज्ञ औत्कर्षात्तयोरङ्गता। भावशान्त्यङ्गकं भावमाह

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥

अत्र भावस्य भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्त्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो ! गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥

अत्र त्रासोदयः ।

असोढ़ा तत्कालोल्लसदसहभावस्य तपसः,
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटवटुवेशापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

---

अविरलेति। ददृशे ज्ञातः मदो गर्वः तवेक्षणे त्वत्कर्मकदर्शने सतीत्यर्थः ।

अत्रेति। अत्र मददर्शनात् यः शत्रुविषयी वक्तुर्भावस्तस्य तन्मदनाशदर्शनात् प्रशमो राजविषयवक्तृभावस्याङ्गमित्यर्थः। वैरिविषयभावप्रशमेन राजविषयभावप्रकर्षणात्। चक्रवर्त्ती तु वैरिणां मदरूपव्यभिचारिभावस्यैव प्रशम इत्याह तन्न। अगूढ़मपरस्येत्यादिना व्यङ्ग्यस्यैव अङ्गताबोधनात् अद्रव्यस्य मदस्य गमनबाधेन तत्प्रशमस्य तन्मच्यत्वे नैव व्यङ्ग्यत्वाभावेन अपराङ्गत्वाभावात्। भावोदयस्य भावाङ्गत्वमाह ।

साकमिति। हे विभो ! कुरङ्गकदृशा सुहृद्भिरपि साकं मधुपानलीलां कर्त्तुं तव वैरिणि प्रवृत्ते सति केनाऽप्यन्यजनार्थकं तव नाम गृहीतं कर्त्तृ तेषां विषमां व्याकुलामवस्थामकरोदित्यर्थः ।

अत्रेति। त्वन्नामस्मृतिप्रयोज्यशत्रुत्रासेन त्वद्विषयभावप्रकर्षणात् उदयश्च मधुपानप्रवृत्तिदशोत्तरमुत्पत्तिः। भावसन्धेर्भावाङ्गत्वमाह ।

असोढ़ेति। पार्वतीतपोभङ्गार्थं ब्राह्मणवटुवेशेन उपस्थितस्य महेशस्य वर्णनमिदम्। स्मरहरो वः प्रमोदं दिश्यात् कीदृशः कपटवटुवेशापनयने त्वराशैथिल्याभ्यां युगपदेव अभियुक्तः सम्बन्धः। त्वराहेतुं प्रथमपादेनाह असोढ़ेति। तत्काले उल्लसन्

अत्र आवेगधैर्य्ययोः सन्धिः ।

पश्येत् कश्चित् चल चपल रे ! का त्वराऽहं कुमारी,
हस्तालम्बं वितर, हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ़ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता। एते च रसवदाद्यलङ्काराः यद्यपि भावोदयभावसन्धिभावशबलत्वानि न अलङ्कारतया उक्तानि तथापि कश्चित् ब्रूया-

---

असहभावी दुःसहत्वं यस्य तादृशस्य तपसोऽसोढ़ा सहनासमर्थः तपोवद्धः स्वं रूपमदर्शयित्वा स्थातु मशक्त इत्यर्थः। शैथिल्यहेतुं द्वितीयपादेनाह कथानामिति। विश्रम्भो विश्वासः स्वीयकथाविषये शैलदुहितुर्विश्वासेषु इत्यर्थः।

अत्रेति। न अत्र आवेगः सम्भ्रमो राजगजवर्षादिसम्भव इति कृतलक्षणः आवेगः किन्तु उत्कण्ठाधीना अनवस्थारूपा चपलतैव व्यभिचारिभाव आवेगपदार्थः चापल्यन्त्वनवस्थितिरिति तल्लक्षणात्तस्य धैर्य्यस्य च विरोधिनोरपि परस्पराबाधनेन सतोः निराकाङ्क्षवाक्यव्यङ्ग्यसहैकविषयभावाङ्गत्वमिति सन्धिः अङ्गता च तादृशोभयवैशिष्ट्येन तद्विषयभावप्रकर्षस्यानुभविकत्वात्। भावशवलताया भावाङ्गत्वमाह।

पश्येदिति। किञ्चिदुद्भिन्नयौवनायाः प्रकृतनृपविरोधिवनगतनृपकन्यायाः फलाद्याहरणे परपुरुषाक्रान्ताया उक्तिवर्णनमिदम्। कश्चिदित्यन्ते तस्या अनर्थचिन्तनरूपा शङ्का रे इत्यन्ते सहिष्णुतारूपा असूया का त्वरा इत्यत्र अनुत्कण्ठा पर्य्यवसन्ना सम्पूर्णस्पृहतारूपा धृतिस्तु तदुभयबाधिका शबला कुमारीत्यन्ते कुमार्य्यकार्य्यत्वस्मृतिधैर्य्यबाधिका शबला वितरेत्यन्वित तद्विषयभावोद्बोधात् खेदरूप-श्रमस्तद्बाधकः शबलः हहहेत्यत्र च असाधीन मनोजस्वरूपं जन्यं व्युत्क्रम इत्यत्र तु अकार्य्यत्वावधारणात्ममतिरूपो विरोध स्तदुभयबाधकः शबलः यासीत्यन्ते च कालक्षेपासहिष्णुतारूप मौत्सुक्यं तद्बाधकं शबलं बोध्यम्। असीति त्वमित्यर्थेऽव्ययम्।

अत्रेति। ईदृश्याः शबलतायाः प्रकृतराजप्रयोज्यशत्रुवनगमनमूलत्वेन प्रकृतराजविषयभावप्रकर्षणादङ्गता। ते च गुणीभूता व्यङ्ग्याभिधान इत्याद्युक्तं दर्शयति एते चेति। रसस्याङ्गत्वे रसवान् भावस्याङ्गत्वे प्रेयान् आभासस्याङ्गत्वे

दित्येवमुक्तम्। यद्यपि स नास्ति कश्चिद्विषयः, यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित् केनचिद्व्यवहारः।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया,
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्त्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥

---

ऊर्जस्वी भावशान्त्यादीनामङ्गत्वे समाहितोऽलङ्कार इत्यर्थः उक्तानि इति अपरे रितिशेषः। ननु अयं स रसनोत्कर्षीत्यादिषु अङ्गिनं रसादिकमादाय कथं न रसादिध्वनिव्यवहारः कथं वा जाने कोपपराङ्मुखीत्यादौ अङ्गं रसमादाय न अपराङ्गव्यवहारः तत्रानुग्राह्यानुग्राहकतापन्नसङ्करध्वनेरैक्यापत्तिरेवात्र सङ्करः संसृष्टिस्तु ध्वनिगुणीभूतव्यङ्ग्ययोः समस्तप्रभेदैरेव सहेति बोध्यम्। यद्यपि शून्यं वासगृहमित्यादिकमेव असङ्कीर्णविषयोऽस्ति तथापि प्रायशः स नास्ति कश्चित् विषय इत्यर्थः। स्वप्रभेदादिभिः इत्यादि पदात् गुणालङ्कारवच्चित्रकाव्यप्रभेदैः सहापि ऐक्यापत्तिरूपः सङ्कर आशङ्कितः समाधत्ते तथापीति। प्रधानेन चमत्कारवशात् प्रधानेन न तु निराकाङ्क्षवाक्यव्यङ्ग्यतया प्रधाने जाने कोपेत्यादौ निराकाङ्क्षवाक्यव्यङ्ग्यतया अङ्गिनि चमत्कारित्वेन च प्रधान मसूयैवेति तयैव ध्वनिव्यवहारः। अयं स रसनेत्यादौ तु प्राकरणिकतया प्रधान मङ्गिनमपि करुणमपेक्ष्य चमत्कारितया प्रधानेन शृङ्गारेणैव अङ्गेन अपराङ्गव्यवहार इति विनिगमनेत्युक्तं चमत्कारश्चानुभवसिद्ध वैचित्र्यादित्यवधेयं स्वतन्त्रसंसृष्टित्वे तु ध्वनित्वप्रयोजकव्यङ्ग्यस्यैव गुणीभूतव्यङ्ग्यताचित्रिता प्रयोजकौ व्यङ्ग्यालङ्कारावपेक्ष्य चमत्काराधिक्यात् ध्वनिव्यवहार एवेति बोध्यम्। वाक्यार्थीभूतस्य अङ्गेऽनुरणनरूपे उदाहर्त्तव्ये तस्यैव शब्दशक्त्यर्थशक्त्युत्थत्वभेदात् क्रमप्राप्तं शब्दशक्त्युत्थ मलङ्कार मादौ उदाहरति।

जनस्थान इति दरिद्रस्योक्तिरियम्। मया रामत्वं रामाभिन्नत्वमाप्तमिति रूपकं कुशलवसुता तु नाधिगता कुशलं दरिद्रापनायकं वसु यस्य तथात्वं न आप्तं रामेण तु कुशलवौ सुतौ यस्यास्तादृशी माता अधिगतैवेति कुशलवसुतापदश्लेषात् तु शब्दार्थः

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेय-भावो वाच्याङ्गतां नीतः।

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीम्
अम्भोजिनीं क्वचिदपि क्षपितत्रियामः।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि! पादपतनेन सहस्ररश्मिः॥

---

रामत्वप्राप्तिहेतुमेकशब्दवाच्यत्वं साधर्म्यमाह जनस्थान इति। कनकमृगस्य तृष्णयाऽन्वितधिया भ्रान्तं तथा वैसम्बोधने हे देहीति वचः प्रतिपदं स्थाने स्थाने प्राप्तं कातर्य्यादुदयु यथा स्यात्तथा प्रलपितं तथा अलमत्यर्थं भर्त्तुरीश्वरस्य परिपाटीषु परिचर्य्यानिमित्तं का घटना न कृता मया तद्वत् रामेण अपि लङ्काभर्त्तूरावणस्य वदनानां परिपाट्यां पङ्क्तौ परिपाटननिमित्तं वा इषुघटना बाणसन्धानं कृता।

अत्रेति। रूपकस्योपमानोपमेयभावमूलकत्वेन एकशब्दवाच्यत्वरूपसादृश्यघटित उपमानोपमेयभाव उपमा इवादिशब्दाभावादार्थ्यः। स च वाक्यस्य कुशलवसुताऽप्राप्तिरूपस्य उपमानीभूतरामव्यतिरेकालङ्कारस्य प्रकर्षतयाऽङ्गतां वक्त्रा नीत इत्यर्थः। तद्दृश्यति उपमानाद्यदन्यस्य व्यतिरेकः स एव सः इति। अन्यस्योपमेयस्य व्यतिरेक आधिक्यं दरिद्रस्य दुःखाधिक्यरूपं नचैवं व्यतिरेकालङ्कारशरीरघटिकैव उपमा कथं तत्प्रकर्षिकेति वाच्यं बहुविशेषणलभ्यात् सादृश्यात् प्रतीताया उपमायाः प्रकृष्टत्वेन तथा व्यतिरेकालङ्कारस्य निर्वाहणात् प्रकर्षणाच्च यत्र तु नोपमायास्तादृशः प्रकर्षस्तत्र व्यङ्ग्यया अपि उपमया व्यतिरेकालङ्कारस्य निर्वाहमात्रं न तु प्रकर्षणमिति। तत्र नापराङ्गत्वं यथा नियतिकृतनियमरहितामित्यत्र एवं यत्र उपमाया वाच्यत्वं तत्रापि तस्या व्यतिरेकाङ्गत्वाभावान्नापराङ्गता यथा।

असिमात्रसहायस्य प्रभूतारिपराभवे।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः॥ इत्यर्थः।

अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यमप्रस्तुतप्रशंसालङ्कारं वाक्यार्थीभूतवस्तुनोऽङ्गमाह।

आगत्येति। प्रातर्मानिनीं प्रति नायकस्योक्तिरियम्। हे तन्वङ्गि! पश्य क्वचिदपि द्वीपान्तरे क्षपितत्रियामः गमितरात्रिः सहस्ररश्मिः सम्प्रति प्रभाते

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपणेनैव स्थितः । [२]

वाच्यसिद्ध्यङ्गं यथा

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

---

आगत्य अब्जिनीं प्रातः रश्मिना द्वारभूतेन पतनेन शनैः प्रसादयति विकासरूपां प्रसादवतीं करोति कीदृशीं वियोगेन व्याकुलाङ्गीं अङ्गमत्र पुष्पमेव एतत्प्रदर्शनञ्च न मानिन्यामुपयुक्तमतोऽस्य नायकनायिकावृत्तान्तप्रदर्शने तात्पर्य्यात्तथैवावगम्यते भवति हि नायकोऽपि क्वचिदपि नायिकान्तरगृहे क्षपितरात्रिः प्रभाते आगत्य वियोगव्याकुलाङ्गीं नायिकां पादयोः पतनेन प्रसादयति तथाच नायकान्तरस्यापि नायिकान्तरं प्रति इयं रीतिरिति मयि क्रोधस्त्यज्यतामिति भावः । ईदृशौ नायकनायिकावृत्तान्तौ रविकमलिनीवृत्तान्तेऽभेदेनारोपित इत्याह ।

अत्रेति । नायिकेत्येकशेषो नायिकाया नायकवृत्तान्त इत्यर्थः वस्तुरूप इति नञ् प्रश्लेषादलङ्काररूप इति वा वाच्यसिद्ध्यङ्गतारूपत्वनिराकरणायाह निरपेक्षेति । व्यङ्ग्यनिरपेक्षमसंमुग्धप्रतीतेत्यर्थः वाच्यसिद्ध्यङ्गत्वे तु वाच्यार्थसंमुग्धप्रतीतौ बाधावतारे सति व्यङ्ग्यान्वयेनैवासंमुग्धप्रतीत इत्ययं दर्शयिष्यते तादृशि रविकमलिनीवृत्तान्तेऽध्यारोपितेनैव नायकनायिकावृत्तान्तः स्थित इत्यर्थः । रविकमलिनीवृत्तान्त एव नायकनायिकावृत्तान्त इत्येव मध्यारोपः । तथाच व्यङ्ग्यभूततदारोपवशात् वाक्यार्थीभूतरविकमलिनीवृत्तान्तस्य प्रकर्षाद्भवति उक्तव्यङ्ग्यस्य तदङ्गतेति । वाच्यसिद्धीति प्रथमं जनितान्वयबोधस्य वाक्यस्यार्थे पश्चादनुपपत्त्यवतारे तादृशानुपपत्तिनिरासकं यत्तस्यैव व्यङ्ग्यं तद्वाच्यसिद्ध्यङ्गं तादृशव्यङ्ग्यवत् काव्यमपि तन्नामकम् ।

भ्रमिमित्यादि । जलदभुजगजं विषं जलं प्रसह्य बलात्कारेण वियोगिनीनां भ्रम्याद्यष्टकं करोतीत्यन्वयः । मेघजलस्योद्दीपकत्वात् पौरुषं विषमस्, चेत्यमरकोषात् जलधारा जलदे भुजगजन्यत्वाभावेऽपि जलदे तदभिन्नत्वबोधे सति जलदजन्यत्वं तदासीत्यतः कथमनुपपत्त्यवतार इति वाच्यम् । अन्वयानुयोगिषु रूप्यमाणप्रतियोगि-

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत्।
यथा वा

गच्छाम्यच्युत! दर्शनेन भवतः किं तृप्तिरुत्पद्यते?
किं त्वेवं विजनस्थयो र्हतजनः सम्भावयत्यन्यथा।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्
आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥

अत्र अच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य।
एतच्चैकत्र एकवक्तृगतत्वेन अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः। [२]

---

कस्यैवान्वयस्य व्युत्पत्तिसिद्धत्वात्। अतएव सौभाग्यं वितनोतु वक्त्रशशिनी ज्योत्स्नेव हासद्युतिरित्यत्र हासद्युतेः शशिन्यनन्वयाद्रूपकासम्भवात् उपमासमासमेव स्वीकरिष्यत्यग्रे। ननु विद्वन्मानसहंसेत्यादौ तु प्रकृतरूपणोपायस्याप्रकृतरूपणस्य परम्परितरूपत्वं वक्ष्यते तत्कथमत्र भुजगरूपणोपायस्य हालाहलरूपणस्य गुणीभूतव्यङ्ग्यत्वमिति चेन्न अत्र हालाहलरूपणस्यापि प्रकृतत्वादङ्गत्वाच्च। अत्र तु द्वयोर्वाच्यत्वादेव। गच्छामीति गोपीमाश्लिष्यन् पुलकोत्कराञ्चिततनु र्हरिर्वः पातु गोपीं कीदृशीं इत्यामन्त्रणस्य पूर्वार्द्धरूपामन्त्रणविशिष्टवाक्यस्य भङ्ग्या व्यङ्ग्यार्थेन सूचितो यो वृथावस्थानखेदस्तेनालसाम्। आमन्त्रणवाच्यवाक्यार्थस्तु।

हे अच्युत! कृष्ण! अहं गच्छामि भवतो दर्शनेन किं तृप्तिरुत्पद्यते नैवेत्यर्थः। किन्तु स्वीयगार्हस्थ्योपयुक्तचेष्टयैवेत्यर्थः प्रत्युत विजनस्थयोरन्यथा मनःपथाविषयमपि चेष्टितं हतजनो दुर्जनः सम्भावयति तद्वाक्ये व्यङ्ग्यार्थस्तु हे अच्युत! मद्दर्शनेन धैर्य्यादच्युतो भवतो दर्शनेन किं तृप्तिरुत्पद्यते नैवेत्यर्थः अपि तु सम्भोगेनैव यदि तथा न करोषि तदा गच्छामि उद्देश्यासिद्धौ स्थितिः प्रत्युत दुर्जनानां परिवादसम्भावनाजनिकैव विदग्धजनानां तथा सम्भावना तु न दुःखजनिकेत्येवं रूपः।

अत्रेति। इत्यामन्त्रण भङ्गिं सूचितेत्यादि वाक्यार्थः प्रथममामन्त्रणरतिवाक्ये भङ्गीसम्भावनयैव प्रतीतः पश्चात्तु भङ्ग्यदर्शनात् बाधावत्ता बाधसिद्धस्य तस्य बाधनिरासकमनुसन्धीयमानमामन्त्रणवाक्यव्यङ्ग्यं पराद्धवाक्यवाच्यसिद्धिकृदित्यर्थः।

अस्फुटं यथा

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥

अत्र अदृष्टो यथा न भवसि, वियोगभयञ्च यथा न उत्पद्यते, तथा कुर्य्या इति क्लिष्टम् । [४] सन्दिग्धप्राधान्यं यथा

---

उदाहरणद्वयदर्शनबीजमाह एतच्चेति । गतत्वेन सम्बन्धित्वेन वाच्यव्यङ्ग्ययोरिति शेषः । पूर्वत्र कविरूपवक्तृवाक्यव्यङ्ग्येन कविरूपवक्तृवाक्यवाच्यस्यैव सिद्धिः । परत्र कविरूपवक्तृवाक्यवाच्यस्य गोपीरूपवक्तृवाक्यव्यङ्ग्येन सिद्धिरित्यर्थः । अपराङ्गस्य परप्रकर्षतयाऽस्वातन्त्र्याद्गुणीभूतत्वं वाच्यसिद्ध्यङ्गे तु वाच्यसाधकत्वेनैव अस्वातन्त्र्याद्गुणीभूतत्वम् ।

अस्फुटमिति । विदग्धानामपि कृच्छ्रगम्यमस्फुटं तत्र च प्रौढ़ालङ्काराभावे स्फुटप्रतीयमानार्थरहितत्वात् गुणालङ्कारयुक्तत्वाच्च चित्रत्वमेव पूर्वोक्तं बोध्यं प्रौढ़ालङ्काराभावे तु गुणीभूतव्यङ्ग्यत्वमिति विषयविभागः ।

अदृष्ट इति । भवता करणभूतेन । अत्रेति उभयथैव सुखाजनकत्वात् सुखजनक एव न त्वमित्येव सर्वैः प्रतीयते । दर्शितं व्यङ्ग्यन्तु प्रणिधानकृच्छ्रेणैव विदग्धैरपि प्रतीयते इत्यभिप्रायः । क्लिष्टं क्लिष्टं क्लिष्टमिति पुस्तकभेदेन पाठाः सर्व एव विदग्धानामपि क्लेशगम्यार्थकाः क्लिष्टत्वादेव गुणीभूतत्वं व्यङ्ग्यस्य । सन्दिग्धेति । उत्कटे चमत्कारे जातेऽपि किमसौ वाच्येन किं वा व्यङ्ग्येन जनित इति सन्दिग्धत्वतत्त्वम् । हरस्त्विति । वसन्तप्रवृत्तावन्येषां चेष्टायां वर्णितायां हरस्य चेष्टावर्णनमिदं हरः पुनरित्यर्थः । चन्द्रोदयस्यारम्भे प्राथमिके चन्द्रोदये ।

अत्रेति । प्रधानसम्भोगरूपशृङ्गारव्यञ्जनवशात् उत्कटचमत्कारि तत्र योगिनो हरस्य धैर्य्यपरिवृत्तिः । किञ्चित्त्वं किं दिदृक्षामात्रेण उमामुखावलोकनमात्रपर्य्याप्तिकं किंवा चुम्बनेच्छयैव तत्कृतमिति निश्चेतुमशक्यत्वात् चुम्बनेच्छारूपं व्यङ्ग्यम् सन्दिग्धम् ।

अत स्तस्य शृङ्गारव्यञ्जकतारूपे प्राधान्ये सन्देह इत्यर्थः । व्यञ्जकस्य तस्यैवानिश्चयादिति भावः । नचैवं निश्चितं वाच्यमेतादृशं प्रधानमस्त्विति वाच्यं तदेव किं चुम्बनेच्छामुत्पाद्यैव वा शृङ्गारं स्वयमेव वा व्यञ्जयामासेति सन्देहानपगमात् ।

हरस्तु किञ्चित् परिवृत्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं, किंवा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः। [५]

तुल्यप्राधान्यं यथा

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रम्, अन्यथा दुर्मनायते॥

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामपि रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्। [६]

काक्काक्षिप्तं यथा

मथ्नामि कौरवशतं समरे न कोपात्, ?
दुःशासनस्य रुधिरं न पिबाम्युरस्तः? ।
सञ्चूर्णयामि गदया न सुयोधनोरू, ?
सन्धिं करोतु भवतां नृपतिः पणेन॥

---

अत्र व्यङ्ग्यस्य प्राधान्यरूपातिशयित्वसंशयाद्गुणीभूतत्वम्। तुल्येति वाच्यव्यङ्ग्ययोर्द्वयोरपि चमत्कारजनकत्वरूपप्राधान्यग्रहतौल्यं तत्त्वम् अतएव च व्यङ्ग्यस्यातिशयित्वाद्गुणीभूतत्वम्।

ब्राह्मणेति। दिग्विजये परशुरामजिगमिषुं रावणं प्रति तन्मन्त्रिवाक्यमिदं वाच्यार्थपक्षे तथा मित्रं ब्राह्मणरूपं मित्रं ब्राह्मणत्वं मित्रत्वञ्च द्वयमप्यनतिक्रमहेतुः अन्यथाऽतिक्रमे दुर्मनायते शापहेतुदौर्मनस्यवान् स्यात्। व्यङ्ग्यार्थमाह।

अत्रेति। सर्वेषां प्राधान्यमिति त्रासं जनयित्वाऽकार्य्यतो निवर्त्तनीयमिति हि नीतिस्त्रासजनकत्वेनैव अत्र चमत्कारः। त्रासस्तु उक्तव्यङ्ग्येनैव मित्रब्राह्मणातिक्रमेणापीति प्राधान्यग्रहतुल्यता। काक्काक्षिप्तमिति। वाच्यपदार्थोपस्थितिकाले ध्वनिविशेषरूपया काक्कापि अन्वयप्रतियोगितया उपस्थापितं व्यङ्ग्यं काक्काक्षिप्तम्।

मथ्नामीति। राजा कृष्णं प्रस्थाप्य दुर्य्योधनेन सह पणेन सन्धिमीहत इति

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्। [७]

असुन्दरं यथा

वाणीरकुं जोड्डीणसउणिकोलाहलं सुणन्तीए।
घरकम्मवावड़ाए बहुए सीअन्ति अङ्गाइं॥

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्। [८]

---

सहदेवीक्त्यनन्तरं क्रुद्धस्य भीमसेनस्योक्तिरियम्। मथ्नामीत्यादौ सर्वत्र भविष्यत्सामीप्ये वर्त्तमानः न मथिष्यामीत्यर्थः। उरसो वक्षःस्थलात् सुयोधनेति दुर्योधनस्यैव नामान्तरं भवतामेव नृपतिः युधिष्ठिरः न तु मम अनभीष्टसन्धिचिकीर्षुत्वात्।

अत्रेति। प्रतिपज्ज्ञातकौरवशतबधादिर्भीमस्योक्तौ न मथ्नामीति निषेधमात्रपरत्वं नञि न प्रतीयते इत्यतोऽपरनञर्थव्यञ्जिका शिरश्चालनसहोत्पन्नकाकुरेव प्रतीयते। तथाच वाच्यव्यङ्ग्यभूतयोर्नञर्थयोरुपस्थितौ न न मथिष्यामि इत्येवार्थः प्रतीयते तदाह मथ्नाम्येवेतीति अयोगव्यवच्छेदकस्यैवकारस्य नञ् द्वयार्थकत्वात् तेन विवरणं कृतं मथ्नाम्येवेत्यादीत्यत्र मथ्नाम्येवेत्यादेरेकदेश एकनञर्थो व्यङ्ग्यः अपरनञर्थस्य वाच्यत्वादेव। सहभाव एकदोपस्थितिः शाब्दी। एवञ्च शाब्दी आर्थी काकुमात्रवृत्तिश्चेति त्रिधा व्यञ्जना उक्ता। कटाक्षादिक्रियावृत्तिरपि वक्ष्यते। काक्वाक्षिप्तस्य वाच्यसहभावेनोपस्थित्या शाब्दबोधजनकत्वेन वाच्यायमानत्वात् न वाच्यातिशयित्वमतो गुणीभूतत्वम्।

असुन्दरमिति। वाच्यार्थसाहित्यं विना चमत्काराजनकं व्यङ्ग्यमसुन्दरमतो वाच्यन्यूनचमत्कारित्वाद्‌ गुणीभू ग्रामतरुणमित्यादेरेव तदुदाहरणस्य सौलभ्येऽपि प्रपञ्चार्थमन्यदाह। वाणीरेति।

वाणीर कुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृतायाः वध्वाः सीदन्त्यङ्गानि॥ इति संस्कृतम्।

वाणीरं लताविशेषः शकुनयः पक्षिणः नायकस्य सङ्केतस्थलतादृशकुञ्जप्रवेशात्तेषां कोलाहलः।

अत्रेति। प्रविष्ट इत्यन्तमेकदेशकीर्त्तनपरं स प्रविष्ट इयञ्च न गतेति पर्य्यन्तं

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥२॥**

यथायोगमिति 'व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा। ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्' इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम्।

**सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः।**

---

व्यङ्ग्यमेतत् पद्यश्रोतृभिः सामाजिकैः प्रतीयते तस्य च चमत्कारिव्यङ्ग्यवशात् भक्तु वाच्यार्थो विप्रलम्भस्यानुभाव इत्युक्तव्यङ्ग्यनिरपेक्ष्य एव विप्रलम्भव्यञ्जक इत्यधिकचमत्कारी शकुनिकोलाहलश्रवणेन सङ्केतस्थले नायकप्रवेशज्ञानादेवाचाङ्गावसादः प्रतीतस्तस्य अनन्यहेतुकत्वात्।

एषामिति। उक्तगुणीभूतव्यङ्ग्यप्रभेदानामित्यर्थः। पूर्ववदिति व्यङ्ग्यस्यागूढत्वादित्वेऽर्थान्तरसङ्क्रमितवाच्याद्येकपञ्चाशद्विधा इत्यर्थः। तथा चैतदष्टकस्य एकपञ्चाशद्गुणने ४०८ वस्ताकाशाभ्रयोऽङ्काः एतदङ्कादिकमाकृष्यमाणमाह।

यथायोगमिति। आकृष्यमाणं दर्शयति व्यज्यन्ते इति। वस्तुमात्रेणेति मात्रपदादुभयशक्त्युत्थस्य गुणीभूतत्वमप्यस्तीति दर्शितम्। अर्थालङ्कारस्य वस्तुमात्रव्यङ्ग्यत्वे गुणीभावो नास्तीत्यत्र किं बीजमिति चेद्व्यङ्ग्यत्वरूपवैचित्र्यवतोऽगूढत्वादिना गुणीभावेऽप्यलङ्कारत्वरूपवैचित्र्यवशात् गुणीभावात्। न चैवमलङ्कारेण शब्दशक्त्या गुणीभावसम्भवात्। एवं शाब्दव्यञ्जनायामपि शब्दश्लिष्टत्वे नियमेन श्लेषालङ्कारच्छायाविशिष्टस्य तस्यार्थेऽपि वैचित्र्ये लब्धे व्यङ्ग्यालङ्कारस्य तदपेक्षया अतिशयित्वाभावात् एवमुभयशक्त्युत्थत्वेऽपि श्लिष्टशब्दावश्यम्भावात् तत्रापि इयं युक्तिः। इदानीं न तेषां पञ्चाशद्गुणिताष्टप्रभेदानां स्वप्रभेदैः ध्वनिप्रभेदैः योगमाह।

सालङ्कारैरिति। तैः स्वीयप्रभेदैर्ध्वनेः प्रभेदैश्चेत्यर्थः। तैरेवालङ्कारैरिति न च सालङ्कारैरित्युक्तौ कथमलङ्कारैरित्यर्थलाभ इति वाच्यं तैः परस्परं योग इत्युक्त्यैवापराभूतरसवदाद्यलङ्कारैरन्यप्रभेदैश्च योग इत्यर्थलाभात् सम्भावितार्थप्रदर्शनरूपत्वादेव तस्य व्याख्यानन्तु अलङ्कारयुक्तैश्चेत्येवेति बोध्यम्। एवञ्च सालङ्कारत्व-

सालङ्कारैरिति तैरेवालङ्कारैः अलङ्कारयुक्तैश्च तैः, तदुक्तं ध्वनिकृता

'स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।

सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥' इति।

**अन्योन्ययोगादेवं स्यात् भेदसङ्ख्याऽतिभूयसी ॥३॥**

'एवम्' अनेन प्रकारेण अवान्तरभेदगणनेनातिप्रभूततरा गणना, तथाहि शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यं, का गणना तु सर्वेषाम्। सङ्कलनेन पुनः अस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्, तथाहि किञ्चिद्वाच्यतां सहते, किञ्चित् तु अन्यथा, तत्र वाच्यतासहमविचित्रं विचित्रं चेति, अविचित्रं वस्तुमात्रं, विचित्रं तु अलङ्काररूपं (यद्यपि प्राधान्येन तदलङ्कार्य्यं, तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते); रसादि-

---

निरलङ्कारत्वाभ्यां अन्यप्रभेदबाहुल्यमिति दर्शितम्। सगुणीभूत इति स ध्वनिर्गुणीभूतव्यङ्ग्यैः स्वैः प्रभेदैश्चेत्यन्वयः। सङ्कलने पुनरिति व्यङ्ग्यस्य न्यूनसमाधिकचमत्कारानादरे व्यङ्ग्यवत् काव्यमात्रमेव ध्वनिः तत्रापि एकपञ्चाशत्प्रभेदानादरे त्रय एव भेदा इत्यर्थः। भेदत्रयं दर्शयितुमाह व्यङ्ग्यस्येति। विभक्तविभागेन त्रिरूपतां दर्शयितुमादौ द्विरूपतामाह किञ्चिद्वाच्यतामिति। यदेव वस्तु यत्र वा अलङ्कारो वा व्यङ्ग्यः स एव तदर्थकशब्दोपादानेन वाच्यत्वेऽपि काव्यतां नातिक्रमत इत्यर्थः। रसादेस्तु वाच्यताऽसहत्वमग्रे स्वयमेव दर्शयिष्यते। ननु अलङ्कारस्य व्यङ्ग्यत्वे स्वयमेव प्रकृष्टस्य तस्य परप्रकर्षकत्वाभावात् अलङ्काररूपत्वमेव नास्ति तत्कथं व्यङ्ग्यस्यालङ्काररूपत्वमुच्यते इत्याशङ्क्यते यद्यपीति। अव्यङ्ग्यावस्थामादाय तस्य अलङ्कारत्वेवं समाधत्ते तथापीति। श्रमणः सन्न्यासी तस्यासन्न्यासावस्थामादाय ब्राह्मणत्ववदित्यर्थः। वाच्यताऽसहत्वं दर्शयति रसादीति। तत्प्रयोगेऽपीति तथा च तत्प्रयोगे तस्य रसत्वमेव व्याहन्यत इति भावः। अतएव रसादेः स्वशब्दवाच्यत्वादीवोपेक्ष्यते व्यङ्ग्य एवेत्येवकारात् वाच्यतामात्रनिरासः व्यञ्जनानन्तरं साक्षात् कार्य्यत्वस्य सिद्धान्तितत्वात्

लक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः, स हि रसादिशब्देन शृङ्गारादिशब्देन वा अभिधीयेत। न च अभिधीयते, तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्य अप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेति अन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते, तेनासौ व्यङ्ग्य एव, मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम्। शब्दशक्तिमूले तु अभिधाया नियन्त्रणेन अनभिधेयस्य अर्थान्तरस्य, तेन सहोपमादेः अलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम्। अर्थशक्तिमूलेऽपि, विशेषे सङ्केतः कर्त्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात् परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्त्ता व्यङ्ग्यस्य अभिधेयतायाम्।

---

ननु तर्हि लक्षणीय एव स्यात् इत्यत्राह मुख्यार्थेति। तस्यापरपदार्थेऽन्वयाभावादपि लक्षणीयत्वासम्भव इत्यपि बोध्यम्। ननु एवमस्तु रसादिव्यञ्जनागम्यत्वमेव लक्षणामूलव्यङ्ग्यं वस्तुनस्तु व्यङ्ग्यत्वं न ब्रूमः तत्र लक्षणाया एव सम्भवात्। तथाच कथं व्यङ्ग्यस्य त्रिरूपत्वमित्यत आह अर्थान्तरेति। एवमपि अनवस्था स्यादित्यादिना एव तन्नोत्तरमित्यर्थः। इत्थं वस्त्वलङ्काररूपव्यङ्ग्यार्थानां मुख्यार्थबाधाद्यभावादियुक्त्या लक्षणीयत्वे निवारिते तेषामभिधेयता स्यादित्येवाशङ्का सम्भवति तत्रोत्तरमाह शब्दशक्तीति। निर्विवादं व्यङ्ग्यत्वमिति अभिधानियन्त्रणात् नाभिधेयत्वं मुख्यार्थबाधाद्यभावाच्च न शक्यत्वमतो निर्विवादव्यङ्ग्यत्वं लक्षणामूलव्यङ्ग्यस्याभिधेयता तु आपाततो नाशङ्किता अर्थशक्तिमूलव्यङ्ग्यस्याभिधेयताशङ्कायां दास्यमानोत्तरेणैव तन्निरास इत्यभिप्रायात्। ननु शक्तिलक्षणान्यतरानुपस्थापितो न शाब्दबोधविषय इत्येवं व्याप्त्या व्यङ्ग्यत्वाभिमतस्यार्थशक्तिमूलस्य मुख्यार्थबाधाद्यभावेन अलक्षणीयत्वेऽपि अभिधेयतयैव स्यात् न तु तत्रातिरिक्ताधिकव्यञ्जनारूपा वृत्तिः कल्पनीया।

येऽप्याहुः,

'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वम् अनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्याऽवबुध्येत सम्बन्धं त्रिप्रमाणकम् ॥'

इति प्रतिपादितदिशा 'देवदत्त ! गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनन अस्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्नः' इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोः अर्थापत्त्या वाच्यवाचकभावलक्षणसम्बन्धमवधार्य्य बालस्तत्र व्युत्पद्यते ; परतः 'चैत्र ! गामानय, देवदत्त ! अश्वमानय, देवदत्त ! गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थम्

शक्तियाहकसद्बोधार्थं वृद्धप्रयोग एवास्तित्यतस्तस्या व्याप्तेर्व्यभिचारं पदार्थसंसर्ग एवाह अर्थशक्तिमूलेऽपीति। विशेषे शक्तिग्रहकालदृष्टव्यक्तिविशेषे कर्त्तुमशक्याभिर्वक्तं न युज्यते आनन्त्यव्यभिचाराभ्यामिति शेषः। सामान्यरूपाणां सामान्यलक्षणया सामान्यरूपेणोपस्थितानां परस्परसंसर्गे भासमानतया स्वीकृते इति शेषः। यत्र मतेऽपदार्थोऽपि संसर्गो वाक्यार्थो वाक्यमात्रप्रतिपाद्यः स्वीक्रियते इति शेषः का वार्त्तेति संसर्ग एव व्याप्तेर्व्यभिचारमाह येऽप्याहुरिति। येऽप्यन्विता अभिधानवादिन इति सुदूरोक्तेनान्वयः। वाक्यस्थितानामेव पदानां परस्परान्वितैः पदार्थैः सहान्वितानामेव अन्वयविशिष्टानामेव सङ्केतशक्तिर्गृह्यतेऽन्वयांशेऽपि शक्तिर्गृह्यत इत्यर्थ इति येऽप्यन्विताभिधानवादिन आहुरित्यर्थः। पदानां केवलानामप्रयोगित्वं किन्तु वाक्यस्थितानामिवेति प्रदर्शनं वाक्यग्राह्यसंसर्गे पदानां शक्तिरिति प्रतिपादनार्थं तथा च वाक्यश्रुत्यर्थं वा पदस्य शक्तिग्रह इति सिद्धे वाक्यश्रवणात्। यथा शक्तिग्रहस्तं प्रकारं प्राचीनोक्तकारिकाभिः प्रदर्शयति शब्दवृद्धेति। गामानयेत्यादिः शब्दः तद्वाक्यार्थे व्युत्पन्नः श्रोता वृद्धः वक्तृदर्शनमपि बालकस्य शक्तिग्राह उपयुज्यत इति भसेष वृद्धाविति व्याचष्टे चक्रवर्त्ती तु तत्र। गृहाभ्यन्तरतिवक्तृकादपि वाक्यात् श्रोतुः महत्सिदर्शनेन बालकस्य शक्तिग्रहात् अभिधेया गवानयनादयः प्रत्यक्षेण

अवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानाम् अन्वितैः पदार्थैः अन्वितानामेव सङ्केतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थः, न तु पदार्थानां वैशिष्ट्यम्, यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानीति निश्चीयन्त इति पदार्थान्तरमात्रेण अन्वितः पदार्थः सङ्केतगोचरः, तथापि सामान्यावच्छेदादितो विशेषरूप एव असौ प्रतिपद्यते,

---

इन्द्रियेण पश्यति जानाति चेष्टया अनुमानेन अनुमितिकरणेन ज्ञायमानलिङ्गकरणतावादिमतमिदम्। अन्यथानुपपत्त्या एतद्वाक्यस्यैतदर्थे सम्बन्धं विना एतद्वाक्यादस्यैतदर्थः प्रतिपत्तिः अनुपपन्नेत्यन्यथानुपपत्त्या बोधेत् बाल इति शेषः। बुधिरत्र भौवादिकः द्वयात्मिकां वाक्यद्वयं तदर्थयोरात्मा यस्याः तादृशीं ईश्वरेच्छात्मिकायाः शक्तेर्विषयतासम्बन्धेन वाक्यतदर्थयो र्वृत्तिः बोधकतया वाक्यस्य बोध्यतया चार्थस्य तद्विषयत्वात्। चक्रवर्त्ती तु वाक्ये आश्रयतयार्थे च विषयतया शक्तिस्थितिरित्यर्थः तन्न। ईश्वरेच्छाया ईश्वरमात्राश्रयत्वात्। अर्थापत्त्या इति प्रथमं वाक्ये शक्तौ गृहीतायामपि वाक्यस्थितपदानामेव वाक्यार्थप्रविष्टतत्तत्पदार्थेऽन्वयव्यतिरेकदर्शनात् पदानामेव पदार्थ एवावापोद्वापरूपयाऽर्थापत्त्या सम्बन्धं शक्तिमवबुद्ध्यन्ते बालका इति शेषः। बुधिरत्र दैवादिकः पूर्वत्र बालकत्वजात्याश्रयणादिकत्वमिह तु व्यक्त्याश्रयत्वाद्बहुत्वम्। त्रिप्रमाणकमुक्तप्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयं बोध्यम्। इति प्रतिपादितेति इति यत् प्राचीनैः प्रतिपादितं तद्दिशा तद्रीत्या सङ्केतो गृह्यत इति दूरेण अन्वयः। तामेव कारिकोक्तरीतिं व्याचष्टे देवदत्तेति। उत्तमवृद्धो वाक्यप्रयोक्ता मध्यमवृद्धः श्रोता तयोश्च बालकापेक्षया व्युत्पन्नत्वमेव वृद्धत्वं अनुमायेत्यन्ता प्रथमकारिकाव्याख्या व्युत्पद्यत इत्यन्ता द्वितीयकारिकाप्रथमार्द्धव्याख्या परत इत्याद्यवधारयति इत्यन्ता अर्थापत्त्येत्याद्यर्द्धव्याख्या तत्र प्रथमगृहीतशक्तिकाखण्डवाक्यस्थपदानां विभज्य प्रयोगदर्शनाद्वाक्यगृहीतां शक्तिं विभज्य वाक्यस्थपदेष्वेव वाक्यार्थप्रविष्टपदार्थशक्तिग्रहोऽर्थः। विशिष्टा एव इति विशिष्टेषु पदार्थत्वं विधेयमत्र बोध्यं तेन वैशिष्ट्यांशेऽपि पदार्थत्वं बोध्यं तत्र च वाक्यार्थ एवार्थः इत्याह वाक्यार्थ इति न तु पदार्थानाम्। वैशिष्ट्यमित्यत्र वाक्य-

व्यतिसक्तानां पदार्थानां तथाभूतत्वात् इति अन्विताभिधानवादिनः। तेषामपि मते सामान्यविशेषरूपः पदार्थः सङ्केतविषय इति अतिविशेषभूतो वाक्यार्थान्तर्गतोऽसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरे अर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेण अन्वितस्त्वन्विताभिधाने अन्वितविशेषस्त्ववाच्य एव इति उभयनयेऽपि अपदार्थ एव वाक्यार्थः।

---

स्यैवार्थ इत्येकारं पूरयित्वा व्याख्येयं तेन पदार्थोऽपीति सिद्ध्यति। ननूक्तमहद्धप्रयुक्तवाक्यस्थपदव्यक्तिविशेषे बालकस्य शक्त्यनुभवेऽपि तत्समानानुपूर्वीके पदव्यक्त्यन्तरे कथं तस्य शक्तिस्मरणं तत्रानुभूतत्वादित्याशङ्कां पदाभेदाङ्गीकारेण समाधाय गृहीतशक्तिकगवादिव्यक्तिभिन्नगवादिव्यक्तौ शक्तिस्मरणानुपपत्तिं यद्यपि इत्यादिगोचर इत्यन्तेनोद्भावयति अत्र च निर्णीयन्त इतीत्यनन्तरं पदभेदनिबन्धनदोषपरीहारेऽपि इति पूरणीयं पदार्थव्यक्तिभेदनिबन्धनानुपपत्तिमाशङ्कते पदार्थान्तरमात्रेणेति। पदार्थान्तरं शक्तिग्रहकालदृष्टगोव्यक्तिमात्रपदात्तदानीमदृष्टगोव्यक्तेः सङ्केतागोचरायाः स्मृत्यनुपपत्तिरुक्ता। समाधत्ते तथापीति। सामान्यं शक्तिग्रहप्रकारीभूतो धर्मस्तदवच्छेदादित स्तद्विशिष्टोऽसावगृहीतशक्तिका गोव्यक्तिः प्रतिपद्यते शक्त्या स्मारिताऽप्यनुभूयत इत्यर्थः। एवञ्च शक्तिग्रहस्य शक्यस्मरणस्य च स्वप्रकारीभूतधर्माश्रयानुभवं प्रत्येव जनकत्वं न तु स्वविषयानुभवं प्रत्येवेति सिद्धान्तितं प्रतिपद्यत इत्यत्रानुभवं प्रमाणयति व्यतिसक्तानामिति शक्यस्मरणप्रकारीभूतधर्मव्यतिसक्तानामशक्यव्यक्तीनामपि तथाभूतत्वात् शक्यस्मरणजन्यानुभवविषयत्वस्यानुभूतत्वादित्यर्थः। एवञ्च गवानयनमनुभवामीत्यनुभव एव अत्र प्रमाणमित्युक्तमेतावता इति। येऽप्यन्विताभिधानवादिन आहुस्तेषामपि मते इत्यन्वयः। सामान्यविशेषरूपो गोत्वादिसामान्याक्रान्तविशेषः शक्तिग्रहकालदृष्टगोव्यक्तिविशेषस्तद्रूप इत्यर्थः। अतिविशेषभूतोऽगृहीतसङ्केतापूर्वगोव्यक्तिविशेषः वाक्यान्तर्गतद्वितीयवाक्यार्थीभूतवाक्यान्तरगत इति क्वचित् समीचीनः पाठः। असङ्केतितत्वादवाच्य एव तादृशः पदार्थो यत्रान्विताभिधानमते प्रतिपद्यते अनुभूयते तत्र मते-

यदप्युच्यते 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते' इति। तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा? शब्दस्य प्रकाशकत्वात् न कारकत्वम्; ज्ञापकत्वन्तु अज्ञातस्य कथम्? ज्ञातत्वं च सङ्केतेन एव, स च अन्वितमात्रे, एवञ्च निमित्तस्य नियतत्वं यावन्न निश्चितं, तावन्नैमित्तिकस्य प्रतीतिः एव कथम्? इति 'नैमित्तकानुसारेण निमित्तानि कल्प्यन्ते' इति अविचारिताभिधानम्।

---

ऽर्थान्तरभूतस्य उपात्तपदार्थतावच्छेदकसामान्येन अवच्छेदादिसस्य विध्यादेस्तदन्तिकगमननिषेधविपरीतस्य तदन्तिकगमनविधेरादिपदादन्यत्रापि व्यङ्ग्यान्तरस्य दूरे चर्चा दूरपराहती वाच्यताप्रसङ्ग इत्यर्थः। एवमुभयनय एवापूर्वगवान्वितकर्मत्वानयनादिकस्यावाच्यत्वमुपसंहृत्य दर्शयन् शक्तिलक्षणान्यतरानुपसंख्यापितेऽप्यनुभूयमाने द्वितीयवाक्यप्रयुक्तगोव्यक्तिविशेषीयसंसर्गे उक्तव्याप्तेर्व्यभिचारमाह अनन्वित इति। पदार्थानां शक्तिग्रहकालदृष्टगवानयादिव्यक्तिः अन्वितविशेषी द्वितीयवाक्यार्थीभूतगवानयनादिः वाक्यार्थः सम्बन्धः संसर्गः।

ननु शब्दनिमित्तिका व्यङ्ग्यबुद्धिर्नैमित्तिकी तद्विषयतया व्यङ्ग्यमपि नैमित्तिकत्वेनोपचर्य्यते तादृशनैमित्तिकानुसारेण निमित्ततया कल्प्यमानः शब्दो वाचक एव सिद्धप्रतीतिवादिनोऽभिप्रायं विविच्य दूषयति यदप्युच्यत इति। प्रकाशकत्वादिति प्रकाशमात्रत्वादित्यर्थः। तेन धूमस्य जनके प्रकाशके वह्नौ न व्यभिचारः। नचैवं मात्रपदलभ्यस्य कारकत्वाभावस्य हेतोः साध्याविशेष इति वाच्यम्। कारकान्वयव्यतिरेकाभावस्यैवात्र मात्रपदलभ्यस्य हेतुत्वादतथात्वात् तथाच तादृशान्वयव्यतिरेकराहित्ये सति प्रकाशकत्वादित्यर्थः। ज्ञापकत्वं इति नये ज्ञातस्य शब्दस्य ज्ञापकत्वं तेनापि नोच्यते श्रोत्रगृहीतशब्दस्यैव व्यङ्ग्यत्वाभिमतार्थज्ञापकत्वमिति तेनाऽप्युक्तेरिति वाच्यम्। ईदृशज्ञातस्य ज्ञापकत्वे विवादाभावेनैव तदर्थसम्बन्धित्वेनाज्ञातस्येति तदर्थात्। ननु तदर्थसम्बन्धित्वेन ज्ञातस्यैव ज्ञापकत्वं तेन स्वीकार्यमित्यत आह ज्ञातत्वञ्चेति तदर्थसम्बन्धित्वेन ज्ञातत्वञ्चेत्यर्थः। सङ्केतेनैवेति तदर्थसम्बन्धित्वग्राहककोषादिनैवेत्यर्थः। ननु तस्माच्छब्दात्तदर्थग्रहध्रौव्ये तदर्थसम्बन्धित्वग्राहको-

ये त्वभिदधति, 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति 'यत्परः शब्दः स शब्दार्थः' इति च विधिरेव अत्र वाच्य इति। तेऽप्यतात्पर्य्यज्ञास्तात्पर्य्यवाचो युक्तेर्देवानां प्रियाः, तथाहि 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेन अन्वीयमानाः प्रधानक्रियानिर्वर्त्तकस्वक्रियाभिसम्बन्धात्साध्यायमानतां प्राप्नुवन्ति, ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते, यथा ऋत्विक्प्रचरणे प्रमाणान्तरात् सिद्धे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयं हवनस्य अन्यतः सिद्धे

---

ऽप्यसीत्यङ्गीकार्य्यमित्यत आह सचेति। स च तदर्थसम्बन्धिताग्राहकरूपः सङ्केत उपस्थितपदार्थान्तरान्वितपदार्थमात्रे न तु तदन्तिकं न गतासीत्युपस्थितपदार्थानन्वयिनि तदन्तिकमेव गतासीत्यादिरित्यर्थः। एवञ्च नैमित्तिकानुसारेणेत्यादिना व्यङ्ग्ये या शक्तिरापादिता सा शक्तिग्राहकाभावान्न सम्भवतीति साधयित्वा तदङ्कुरविचारितार्थवक्तृत्वमाह एवञ्चेति। यावन्न गृहीतमिति तद्ग्राहककोषाद्यभावादिति बोध्यं तावन्नैमित्तिकस्य प्रतीतिरेव इति तदर्थसम्बन्धित्वाग्रहे तदर्थस्योपस्थितेरेवाभावादित्यर्थः। ननु प्रथमतदन्तिकागमनबोधस्तदनन्तरं तदन्तिकगमनबोध इत्युभयोरविवाद एक एव च शब्दस्तदुभयार्थबोधकः। तत्र च इषुणा यथा एकेनैव वेगेन भेद्यत्वेन धनुर्द्धरप्रतिसंहितं लक्ष्यं तदुत्तरन्तु तदप्रतिसंहितञ्च लक्ष्यं भिद्यते तथा एकयैव शक्त्या शक्यत्वेन बोद्धृज्ञातोऽर्थः तदुत्तरञ्च तथात्वेन तदज्ञातोऽपि व्यङ्ग्यत्वविवादाध्यासितोऽर्थोऽपि बोध्यत इति तदर्थे शक्तिग्राहकाभावेऽपि नोक्तदोष इत्यतो नैमित्तिकानुसारेणेत्यादिमतं दूषितमेव। नापि व्यङ्ग्यता विवादाध्यासितार्थस्य शक्त्या बोध्यत्वे प्रमाणाभावमाशङ्कनीयोऽभियुक्तोक्तेरेव तत्र प्रमाणत्वादित्येतदाह।

येत्वभिदधतीति प्रथमभेद्यलक्ष्ये दीर्घः पश्चाद्भेद्यलक्ष्ये च दीर्घतर एकत्र वेगः व्यङ्ग्यता विवादाध्यासितार्थस्य शक्यत्वेऽभियुक्तोक्तिं प्रमाणयति यत्पर इति। यद्बोधक इत्यर्थः शब्दार्थः शब्दवाच्यः विधिरेवात्रेति निःशेषेत्यादौ तदन्तिकगमनविधिः वाच्य एवेत्यर्थः। अभियुक्तवाक्यात्तदभिमतसिद्धिरेव न भवतीत्यभिप्रायेण तद्वाक्यालम्बिन

'दध्ना जुहोति' इत्यादौ दध्यादेः करणत्वमात्रं विधेयम् ; क्वचित् उभयविधिः, क्वचित्त्रिविधिरपि यथा रक्तं पटं वयेत्यादौ एक-विधिर्द्विविधिस्त्रिविधिर्वा, ततश्च 'यदेव विधेयं तत्रैव तात्-पर्य्यम्' इत्युपात्तस्यैव शब्दस्य अर्थे तात्पर्य्यं न तु प्रतीतमात्रे एवं हि पूर्वो धावतीत्यादौ अपराद्यर्थेऽपि क्वचित् तात्पर्य्यं स्यात्। यत्तु 'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः' इत्यत्र एतद्-गृहे न भोक्तव्यम् इत्यत्र तात्पर्य्यमिति स एव वाक्यार्थ इत्यु-च्यते। तत्र चकार एकवाक्यतासूचनार्थः न च आख्यातवाक्य-योर्द्वयोः अङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेन

---

स्यानधिक्षिपति तदतात्पर्य्येति। अत्र ते इत्यर्थे तदित्यव्ययम्। तात्पर्य्यवाची यत्पर इत्यादितात्पर्य्यकवाची या युक्तिर्विषयविभागः तद्विषयकस्य तत्वाक्यतात्पर्य्यस्यान-भिज्ञास्ते इत्यर्थः। अतएव ते देवानां प्रिया वलित्वेन देवताप्रियाः पशवः इत्यर्थः। देवानां प्रिया इत्यलुक्। समस्तपञ्चार्थकं पदं तथा हीति विधेयतया यत्तात्पर्य्यकः शब्दः स एव शब्दार्थः स शब्दस्य प्रामाण्यप्रयोजकोऽर्थः नत्वनुवाद्यभूतोऽर्थोऽपि तत्प्रामाण्य-प्रयोजक इत्येव यत्पर इत्याद्यभियुक्तोक्तेरर्थः। न तु व्यङ्ग्ये तात्पर्य्यसत्वेऽपि व्यङ्ग्य एव वाच्यार्थः इत्यर्थः। प्रघट्टकेन दर्शयन्नाह भूतभव्येति। प्रमाणान्तरावगतः भव्यस्तदन-वयवः गामानयेत्यादिशब्दे हि प्रमाणान्तरावगतस्य गोरुच्चारणं तत्कर्मकाप्राप्ता-नयनार्थं नन्वेवं गामानयेत्युक्ते कथं गवानयनस्य साध्यता प्रतीयते आनयनमात्र-स्यैव तथा प्रतीत्यौचित्यादित्यत आह कारकपदार्था इत्यादि। कारकपदार्था गवादयः प्रधाना क्रिया आनयनं तदभिनिर्वर्त्तकः स्वक्रिया गोः स्पन्दः तदभिसम्बन्धादित्यर्थः। ततश्च साध्यायमानानभिधेया किन्तु साध्यभूता क्रियैव तत्र विधेरित्याह ततश्चेति। अदग्धेति अदग्धभागमेव वह्निर्दहति न तु दग्धभागमपीत्येवं रीत्या इत्यर्थः। अप्राप्तं प्रमाणान्तरानवगतं कारकपदार्थाः क्रियापदार्थेनेत्युपलक्षणं यावदप्राप्तमिति सामान्य-निर्देशात् क्रियाया अप्राप्तत्वे क्रियैव विधेया कारकस्य विशेषणस्य अप्राप्तत्वे क्रियैव विधेया इति इत्युक्तम् अतएव कारकविशेषणस्य विधेयत्वं दर्शयति यथा ऋत्विगिति यज्ञमण्डपे ऋत्विजां प्रचरणे क्वचिदप्राप्तकारकपदस्यापि विधेयत्वं दर्शयति इन्धनस्येति

अङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा माऽस्य गृहे भुङ्क्थाः इति उपात्तशब्दार्थे एव तात्पर्य्यम्।

---

द्विविधे विविध्यीः उदाहरणमाह यथा रक्तमिति वयेति। वेञ् तन्तुसन्ताने इत्यस्य रूपं तन्तुभिः निष्पादयेत्यर्थः अत्र पटार्थं रक्तं तन्तु समर्पणात् तन्तुवायेण रक्ते पटे ज्ञाते वयनविधिः शुभ्रतन्तुसमर्पणे रक्तवयनोभयविधिः तन्तुसमर्पणे तु पटांशमप्यादाय त्रिविधिरिति अत एकविध्युदाहरणमपीदं भवति इत्याह एकविधिरिति। इत्थं प्रदर्शनस्य प्रकृतोपयोगमाह ततश्चेति तात्पर्य्यं शब्दप्रामाण्यप्रयोजकं तात्पर्य्यमित्यर्थः तथाच तदेवोक्तं यत्पर इत्यादिनेति हृदयं न तु तादृशं तात्पर्य्यमपि व्यङ्ग्यार्थेऽस्त्वेवेत्यत आह उपात्तस्यैवेति अर्थे कोषादिग्राहितशक्तिकेऽर्थ एव तादृशं तात्पर्य्यमित्यर्थः। व्यङ्ग्यार्थस्यापि तद्वाचकपदग्राहितशक्तिकत्वात् तद्वारणायाह उपात्तस्यैवेति। व्यङ्ग्यार्थे तादृशतात्पर्य्यं निरस्यति नत्विति एवं हि इति पूर्वपदादप्यविधित्वे न परप्रतीतेः इत्यर्थः नन्वेतावता उपात्तस्य भव्यार्थकस्य शब्दस्य कोषादिग्राहितशक्तिकेऽर्थे भूतार्थकशब्दार्थस्यान्वयात्तत्र तत्प्रामाण्यप्रयोजकं तात्पर्य्यमित्युक्तं तदेकत्वसार्वत्रिकत्वाद्व्यभिचारि। तथाहि वरं विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था इति भव्यार्थकवाक्ये एतद्गृहे न भोक्तव्यमित्येव प्रतीतिस्तत्र च वरं विषं भुङ्क्ष्व इति वाक्यस्यान्वयाभावाद्व्यस्योपदिष्टत्वाभावेन तत्प्रामाण्यप्रयोजकतात्पर्य्योपपत्त्यभावादित्याशङ्कते यत्तु विषमित्यादि अस्यैकदेशकोर्त्तनरूपत्वमेव बोध्यम्। वरं विषं भुङ्क्ष्वेत्येवमेव वाक्यशरीरं वरं शब्दाभावे विषभक्षणविधेरेव प्रतीतेः। एतद्गृहे न भोक्तव्यमिति मा च अस्य गृहे भुङ्क्था इत्यस्य कोषादिग्राहितसङ्केतोऽर्थः तत्र च वरं विषं भुङ्क्ष्वेति वाक्यस्य प्रामाण्यप्रयोजकं तात्पर्य्यमित्यर्थः। स एव वाक्यार्थ इति विषभक्षणवाक्यस्यापि अर्थः स एव च न घटते विषभक्षणवाक्यार्थस्य मा चास्य इत्यादिभव्यार्थकवाक्यार्थेऽन्वयाभावेन तस्य भव्यार्थोपदिष्टत्वाभावादिति। यत्तु इत्याद्याशङ्कितपूर्वपक्षार्थं समाधातुमाह उच्यते इति। अङ्गाङ्गिभावोऽन्वयकृद्वाक्यत्वं वेति पाठे आख्यातस्य निरर्थकताकल्पनेन धात्वर्थमात्रबोधकयञ्जन्तकृद्वाक्यतापर्य्यावसानेन इत्यर्थः। सुहृद्वाक्यत्वेनेति पाठे तु विषभक्षणानुपदेशकसुहृद्वाक्यतयैव तथा पर्य्यवसानादित्यर्थः। एवं भुङ्क्था इत्यत्र आख्यातार्थत्यागः तदत्यागे विषभक्षणवाक्यार्थेन वाक्यार्थान्वयाभावादिति हृदयेनैकवाक्यरूपतां दर्शयति विषभक्षणादपीति। आख्यातद्वयार्थ-

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते, तावति शब्दस्य अभिधैव व्यापारः, ततः कथं ब्राह्मण! पुत्रस्ते जातः ब्राह्मण! कन्यका ते गर्भिणीत्यादौ हर्षशोकादीनामपि न

---

त्यागक्रियापदद्वयस्य भक्षणभोजनरूपतासिद्धिनामार्थस्य अपरनामार्थे साक्षादन्वयाभावाद्विषभक्षणादिति पञ्चम्यनुप्रवेशः। अपीत्याक्षिप्तपरं शब्दार्थदुष्टमिति माशब्दार्थ इति बोध्यं भोजनदुष्टत्वकथनेन बोध्यमर्थमाह सर्वथेति। अयं मानस बोधाकारः इत्थमत्रापि उपात्तशब्दस्य कोषादिग्राहितशक्तिके भव्यार्थे तदन्वितभूतार्थकशब्दस्य प्रामाण्यप्रयोजकं तात्पर्यमतो न व्यभिचार इति दर्शयति इत्युपात्तेति। भव्यान्वितभूतार्थकशब्दस्य प्रामाण्यप्रयोजकं तात्पर्यमित्यनेन प्रकारेणोपात्तभव्यार्थकशब्दस्य कोषग्राहितशक्तिकेऽर्थ एवेत्यर्थः। इत्थमुपात्तशब्दस्य गृहीतशक्तिके व्यङ्ग्ये विवादाध्यासितेऽर्थे तादृशं तात्पर्यमेव नास्ति। तत्सत्त्वे वा तावतापि यत्पर इत्याद्यभियुक्तवाक्याविषयत्वेन नाभिधेयतासिद्धिरिति साधितम्। तथा चाभिधाया दीर्घतरव्यापारविधया व्यङ्ग्यार्थोपस्थापकत्वे प्रमाणमेव नास्तीत्युक्तम्।

ननु शब्दश्रुत्यन्तरं प्रतीयमानत्वमेव प्रमाणमित्यत आह यदि चेति। ब्राह्मणस्थाने केनापि पुत्रजन्माद्यभीष्टानभीष्टवार्त्ताप्रदाने तस्य यौ हर्षशोकौ तदीयतच्चिह्नाभ्यां तच्छब्दश्रोता तृतीयपुरुषेण ज्ञायेते तयोरपि वाच्यत्वं स्यादित्यर्थः। न च कन्यागर्भश्रवणात् कथं शोक इति वाच्यं कन्यापदस्य अदत्तपरत्वार्थे गर्भिणीति नञ्प्रश्लेषेण स्खलितगर्भेत्यर्थाद्वा। ननु शब्दश्रुत्यनन्तरं शब्दात् यावानर्थः प्रतीयते इत्येव मयोच्यते हर्षशोकलिङ्गात् ज्ञातौ हर्षशोकौ तु न शब्दात् ज्ञातावित्यत आह कस्मात् चेति। ननु सा अस्तु लक्षणारूपमपि वृत्तान्तरमभिधयैव तस्या अन्यथासिद्धेरित्यत आह किमिति चेति। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनिसूत्रम्। तत्र श्रुतिर्द्वितीया क्षमता च लिङ्गमित्यादिना तत्तत्पदार्था विवृताः प्रकृतानुपयोगाच्च साकल्येन तन्न दर्श्यते प्रकृतोपयोगिमात्रं दर्श्यते यथा द्वितीया द्वितीयान्तं पदं क्षमतामन्त्रस्य सामर्थ्यं तयोः पारदौर्बल्यं परस्य दुर्बलत्वं पूर्वमेव बलीय इत्यर्थः। द्वितीयान्तशब्देन योऽर्थो लभ्यते मन्त्रसामर्थ्यात्तद्विरोध्यर्थप्राप्तिसम्भवे द्वितीयान्तपदोपस्थाप्य एवार्थो गृह्यत इत्यर्थः। यथा ऐन्द्र्या ऋचा गार्हपत्यमुपतिष्ठेत इतिश्रुतौ गार्हपत्यमिति द्वितीयान्तपदात् गार्हपत्यनामधेयस्याग्ने-

वाच्यत्वम्? कस्माच्च लक्षणा? लक्षणीयेऽपि अर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वम् इति अन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम्। किञ्च, कुरु रुचिमिति पदयोर्वैपरीत्ये काव्यान्तर्वर्त्तिनि कथं दुष्टत्वम्? न हि अत्रासभ्योऽर्थः पदार्थान्तरैः अन्वितः। इति अनभिधेय एव इति एवमादि अपरित्याज्यं स्यात्।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो न अभ्युपेयते तदा असाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनि-

---

रुपस्थानप्रतीतिः ऐन्द्र्या ऋचेत्युक्ता च इन्द्रप्रकाशकमन्त्रेणेत्यर्थलाभेऽन्यप्रकाशकमन्त्रेण अन्यस्य उपस्थानानौचित्यात् तन्मन्त्रसामर्थ्यादिन्द्रस्योपस्थानप्राप्तावाश्च गार्हपत्यपदे इन्द्रलक्षणयैव उपपत्तिस्तवोक्तं पारदौर्बल्यमिति। मन्त्रसामर्थ्येन इन्द्रोपस्थानप्राप्तौ गार्हपत्यपदस्य इन्द्रलक्षणयोपस्थाप्यमान इन्द्ररूपोऽर्थो गार्हपत्यपदशक्तिर्लभ्यत इत्यपेक्षया विप्रकृष्टः विलम्बोपस्थितिक इत्यर्थः। लक्षणायां मुख्यार्थबाधादुपस्थितिविलम्बेन विलम्बादिति पूर्वं द्वितीयान्तमेव शक्त्योपस्थापकं बलीय इत्यर्थः। तथाच तादृशं बलीयस्त्वं किमिति कया युक्त्या इत्यर्थः। लक्षणोच्छेदे इन्द्रस्यापि शक्त्यै वोपस्थाने विलम्बाभावेन तद्दौर्बल्ये युक्त्यन्तराभावादित्यर्थः। केचित् तु पारदौर्बल्योक्त्या कथं पूर्वबलीयस्त्वं तत्कृते प्रतीयेतेति व्याचक्षते तन्न। शक्त्यैव दीर्घतरव्यापारविषया तत्प्रतीतिसम्भवस्य तद्वादिना वक्तुं शक्यत्वात्। ननु गार्हपत्यपदात् शक्त्या इन्द्रोपस्थितिरपि दीर्घतरव्यापारविषयैव मया वाच्या कोषाद्यगृहीतशक्तिकत्वात्। तथाच दीर्घव्यापारविषया उपस्थानापेक्षया दीर्घतरव्यापारविषया उपस्थाने विलम्ब एव इत्यर्थप्रकर्षाद्दौर्बल्येनोपपद्यत एव पूर्वबलीयस्त्वमित्यत आह किञ्चेति। रुचिं कुर्वित्यानुपूर्वीतत्पदयोर्वैपरीत्यं तत्र च देशविशेषे योऽनन्तर्वर्त्त्यवयवविशेषार्थकचिह्नं पदं प्रतीयते तत्तदर्थव्यञ्जनया तदश्लीलदोषवत् तस्य च क्वचिदपि पदार्थेऽन्वयाभावादनभिधेयत्वाद्व्यञ्जनायाश्चानङ्गीकारात् तादृशं पदं काव्ये अपरित्याज्यं स्यादित्यर्थः। तथानुपूर्व्या कथने स्वस्यापि व्रीडोदयाद्वैपरीत्य इत्युक्तम्।

ननु दीर्घतरव्यापारविषया यदुपस्थाप्यते तस्य पदार्थान्तरान्वयनियमो नास्तीति

त्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न च अनुपपन्नं, सर्वस्यैव विभक्ततया प्रतिभासात् वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयेण तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेव औचित्येन उपपद्यत एव विभागव्यवस्था । 'इयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः' इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ? अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति एकरूप एव इति नियतोऽसौ न हि गतोऽस्तमर्क इत्यादौ वाच्योऽर्थः क्वचित् अन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते, तथा च गतोऽस्तमर्क इत्यतः सपत्नं

---

मयोच्यते इत्यत आह यदि चेति । नित्यदोषत्वं सर्वरससाधारण्येन प्रादेशिकत्वाभावात् कष्टत्वादीनाम् आदिपदात् प्रतिकूलवर्णकष्टसन्धिरूपविसन्धिदोषपरिग्रहः । शृङ्गारकरुणशान्तेषु हि तेषां दोषत्वं न वीरादौ । तद्बीजञ्च कष्टवर्णादिव्यङ्ग्यस्य ओजोगुणस्य शृङ्गारे नतु गुणत्वं वीराद्यनुगुणत्वञ्चेति व्यञ्जनानादरे तु तादृशबीजाभावेन श्रुतिदुःखदायित्वमेव बीजं वाच्यं तथाच तद्दोषाणां सर्वरससाधारण्येन नित्यत्वं स्यादित्यर्थः । न च व्यञ्जनास्थानीयतमा दीर्घतराभिधादरेणैव तद्दोषपरिहार इति वाच्यम् ओजोगुणवृत्तिधर्मान्तराननुभाविनाभिधाया निर्विकल्पकोपस्थापकत्वाभावादिति हृदयात् बहुविधत्वात् किञ्चिद्रसं प्रति अनुगुणत्वं किञ्चिद्रसं प्रति प्रतिकूलत्वं तथा कस्यचित् व्यङ्ग्यस्य स्ववृत्तिधर्मवैशिष्ट्येन उपस्थितत्वं कस्यचिच्च तदवैशिष्ट्येन इत्येवंरूपबहुधात्वादित्यर्थः । तथाच निर्द्धर्मक एव ओजोगुणो व्यञ्जनया बोध्यत इति भावः । ननु अभिधामूलप्रतीयमानस्य रसादिभिन्नवस्तुन एव व्यङ्ग्यत्वं मया न स्वीक्रियते रसस्य तद्वृत्तिगुणस्य वा व्यङ्ग्यत्वस्य तेन असौ व्यङ्ग्य एवेत्यन्तप्रबन्धेन प्रागेव स्वीकृतत्वादित्यतस्तादृशवस्तुनोऽपि व्यङ्ग्यत्वद्वयमित्यादिकपालिपदेन हि विवक्षिता महेशनिन्दा व्यज्यत इति तत्पदस्यानुगुण्यम् । ननु अत्र दत्तमेवोत्तरं कपालिपदाभिधयैव दीर्घतरव्यापारविधया महेशनिन्दाबोधनं स्यादित्यतो वाच्यार्थव्यङ्ग्यार्थयोः वैधर्म्येण भेदं दर्शयन्नभिधाभेदं व्यञ्जनया साधयति अपि चेति ।

प्रत्यवस्कन्दनावसरं इति अभिसरणम् उपक्रम्यतामिति प्राप्तप्रायस्ते प्रेयानिति कर्मकरणान्निवर्त्तामहे इति सान्ध्यो विधिरुपक्रम्यतामिति दूरं मा गा इति सुरभयो गृहं प्रविश्यन्तामिति सन्तापोऽधुना न भवतीति विक्रेयवस्तूनि संह्रियन्तामिति नागतोऽद्य प्रेयानित्यादिः अनवधिर्व्यङ्ग्योऽर्थः तत्र तत्र प्रतिभाति ।

वाच्यव्यङ्ग्ययोः निःशेषेत्यादौ निषेधविध्यात्मना

मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य्यमार्य्याः समर्य्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणाम् उत स्मरस्मेरविलासिनीनाम् ॥

---

सपत्नं प्रतीति अवस्कन्दनमाक्रमणं कूटयोधी प्रकरणादेवं प्रत्येति अभिसरणमित्यत्राभिसारिका प्रतिपत्त्री प्राप्तप्राय इत्यत्र प्रोषितभर्तृका कर्मकरणादित्यत्र स्वाधीनभर्तृका सान्ध्य इत्यत्र ब्राह्मणा दूरमित्यत्र पथिकाः सुरभय इत्यत्र गोरक्षकाः सन्ताप इत्यत्रातपक्रान्ताः विक्रेयेत्यत्र परिक्रेतारः नागत इत्यत्र प्रोषितदाराः प्रतिपत्तारः तत्र तत्र प्रतिपत्तरि ननु अभिधयैव प्रथमं सूर्य्यास्तगमनरूपमतुवर्थं प्रतिपाद्य दीर्घतरव्यापारविधया तत्तत्प्रकरणादिसाहाय्येन नानार्थाः प्रतिपाद्यन्त इति ब्रूमस्तत्कथं तयोर्भेदसिद्धिरित्यत आह वाच्यव्यङ्ग्ययोरिति । निःशेषेत्यादौ वाच्यव्यङ्ग्ययोः स्वरूपस्य निषेधविध्यात्मना निषेधविधिरूपेण भेदेऽपि यद्येकत्वं तदा नीलानीलादौ क्वचिदपि भेदो न स्यादिति दूरतरेणान्वयः । तस्यान्तिकं न गतासि इति निषेधो वाच्यः गतासीति विधि र्व्यङ्ग्यः । एवञ्च वाच्यव्यङ्ग्यभेदस्य शक्तिव्यञ्जनाभेदाधीनत्वात् तयोः अपि भेदसिद्धिरिति भावः ।

मात्सर्य्यमित्यादि । हे आर्य्याः ! उत्तरदानसमाधीनां मयि असूयां त्यक्त्वा समर्य्यादं मर्य्यादानुरोधेन भवन्त उदाहरन्तु । किं भूधरनितम्बाः तपस्यार्थं सेव्याः ? उत स्मरेण स्मेराः महामायाविलासिन्यः तासां नितम्बाः सेव्याः ? इति किमुशब्दयोः वाच्यार्थः संशयः वक्तुः शान्तत्वेन भूधरनितम्बा एव सेव्याः इति तस्य निश्चयः । तस्य शृङ्गारित्वे तु स्त्रीनितम्बा एव सेव्या इति निश्चयो वा व्यङ्ग्यः । प्रकरणसंशयात् तदन्यतरत्वसंशयेऽप्यस्यान्यतरसेवने निश्चय इत्यस्य व्यङ्ग्यत्वात् तदुभयरूपेण वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपीत्यन्वयः । संशयश्च शान्तशृङ्गार्य्यन्यतरगतनिश्चयश्चेति द्वन्द्वः । संशये संशयेनेति च क्वचित् क्वचित् प्रामादिकौ पाठौ ।

इत्यादौ संशयशान्तशृङ्गार्य्यन्यतरगतनिश्चयरूपेण

कथमवनिप ! दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्त्तिरेभिः॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य पूर्वपश्चाद्भावेन प्रतीतेः कालस्य शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रयत्वेन च आश्रयस्य शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य बोद्धृमात्रविदग्ध-

---

कथमवनिपेति हे अवनिप ! निशातासिधारया यत् दलनं तेन गलितमूर्ध्नां विद्विषां श्रीस्त्वया स्वीकृतेत्ययं कथं दर्पः दर्पोऽयमित्यकार प्रश्लेषः। दर्पे किं बाधकमित्यत आह नन्विति ननु भोः निहतारेरपि तव वल्लभा कीर्त्तिरपगताङ्गैरपि तैः किं त्रिदिवं न नीता अपि तु नीतैव तथाचायं तव को दर्पः साङ्गत्वाद्यपेक्षयाऽपगताङ्गत्वकर्माधिक्याद्दर्पोऽनुचित इत्यर्थः।

निन्देति। यद्यपि निन्दा न वाच्या स्तुतिरपि शब्दरूपा न व्यङ्ग्या तथापि अत्र निन्द्यता स्तुत्यताप्रयोजकरूपत्वनिन्दा स्तुतिपदे तथा च दर्पकरणनिषेधोपयोगी कीर्त्तिहरणरूपो वाच्यार्थो निन्दाताप्रयोजकः स्वर्गपर्य्यन्तगामिनी ते कीर्त्तिरित्यर्थस्तु स्तुत्यताप्रयोजको व्यङ्ग्यः विरुद्धतदुभयवपुषा वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपीति पूर्ववदन्वयः। अर्थयोर्विरुद्धस्वरूपता चात्र तज्ज्ञाप्यनिन्द्यतास्तुत्यतयोः विरोधादवसेया। ननु यथा विरुद्धवामदक्षिणयोः सव्यपदशक्तिर्विरुद्धधवलनीलयोः शितिपदशक्तेश्चाभेदः तत्रापि अभेदः स्यादित्यत आह पूर्वेति। पूर्वं वाच्यार्थस्य पश्चात्तु व्यङ्ग्यार्थस्य प्रतीतिरिति स्वजन्यप्रतीतेः कालस्य भेदेऽपीत्यन्वयः। ननु क्रमशः प्रत्यायने तात्पर्य्यसत्त्वे प्रतीतिकालभेदोऽपि न भेदक इत्यतः शक्तिव्यञ्जनयोराश्रयः भेदादपि भेदं साधयति शब्दाश्रयत्वेनेति शक्तत्वाच्छब्दस्यैव शक्त्याश्रयत्वेन क्वचिच्छब्दः क्वचित्तदेकदेशाद्याः अपि व्यञ्जका इति व्यञ्जनयोः तत्तदाश्रयस्य भेदेऽपीत्यन्वयः। ननु एकस्या एव शक्तेः जातेरिवाश्रयभेदो सद्याङ्गीकर्त्तव्य इत्यतः स्वजन्यज्ञाननिमित्तभेदा-

व्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात् कार्य्यस्य गतो-ऽस्तमर्क इत्यादौ प्रदर्शितनयेन सङ्ख्यायाः

कस्स ण वा होइ रोसो दट्ठूण पिआए सव्वणं अहरं।
सभमरपउमग्घाइणि ! वारिअवामे ! सहसु एण्हिं॥

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत् क्वचिदपि नीलानीलादौ भेदो न स्यात्। उक्तं

---

दपि भेदं साधयति शब्दानुशासनेति। शक्यार्थज्ञानं शब्दानुशासनज्ञानेनैव व्यङ्ग्यार्थ-ज्ञानन्तु प्रकरणस्वप्रतिभानैर्मल्यसहितेन शब्दानुशासनज्ञानेनेत्यर्थः। वाच्यार्थबोधान-न्तरमेव व्यङ्ग्यार्थबोधाद्वाच्यार्थबोधकस्य शब्दानुशासनज्ञानस्याप्यपेक्षा निमित्तस्य स्वस्वजन्यज्ञाननिमित्तस्य एवञ्च स्वस्वजन्यकार्य्यजनने सहकारिभेदोऽपि भेदक इत्युक्तम्। ननु इदमपि न भेदकं एकेनैव कुलालेन सहकारिभेदेन स्थाली-घटादिकार्य्यजननात् स्वस्वकार्य्यभेदेनैव सहकारिणोरभिधाव्यञ्जनयोः भेदः स्यादित्यापातत आह बोद्धृस्वेति। शक्त्या शक्यज्ञानरूपा बोद्धृसामान्यस्यैव प्रतीति-र्जन्यते व्यञ्जनया तु विदग्धव्यपदेशवतः पुरुषस्य व्यङ्ग्यार्थद्वारा आस्वादात्मिका चमत्कृतिरपि जन्यत इत्यर्थः। बोद्धृमात्रविदग्धयोः प्रतीतिचमत्कृतौ यथासङ्ख्यं बोध्ये। ननु कार्य्यभेदोऽङ्गारभूतव्यङ्ग्यबोधाबोधाभ्यामेव स्यादित्यतः स्वस्वाप्या-र्थयोः सङ्ख्याभेदेनापि भेदं साधयति गतोऽस्तमिति। न च एतत् पुनरुक्तमिति वाच्यं पूर्वं विभिन्नसङ्ख्याबोद्धृकत्वमुक्तमिदानीं तु विभिन्नसङ्ख्याबोधकत्वमिति भेदात्। ननु एकस्या एव शक्तेर्विभिन्नप्रकरणादिसाहचर्य्याद्बोध्यसङ्ख्याभेदः स्यादतः स्वस्वजन्य-ज्ञानविषयस्य बोद्धृभेदेन भेदं साधयति कस्स वा वेति।

कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम्॥ इति संस्कृतम्।

उपनायकदष्टाधरां पत्नीं तर्जयति पत्यौ भ्रमरदंशत्वेन प्रतारयन्त्यास्तत्सख्या-श्चतुरोक्तिरियम्। हे वारिते ! अथ वामे ! निषिद्धाघ्रायिणि ! हे सभ्रमरपद्मा-घ्रायिणि ! अखिन्न निषिद्धसभ्रमरपद्माघ्राणशीले ! इदानीं सहस्व पत्युसर्जनमिति शेषः यतः प्रियायाः सव्रणमधरं दृष्ट्वा कस्य वा रोषो न भवति।

सखी तत्कान्तादीति सखी नायिका सव हि अधरदंशफलकं सभ्रमरपद्माघ्रा-

हि अयमेव हि भेदो भेदो हेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च इति वाचकानामर्थापेक्षा व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम्।

किञ्च वाणीरकुडङ्ग इत्यादौ प्रतीयमानम् अर्थम् अभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्ये अतात्पर्यीभूतोऽपि अर्थः स्वशब्दानभिधेयः प्रतीतिपथम् अवतरन् कस्य व्यापारस्य विषयताम् अवलम्बताम्? इति।

---

रूपं वाच्यार्थं तत्कान्तादयो बुध्यन्ते वक्त्री सखी नायिका तु जानाति अधरदंशफलकातराया निषेधाग्राहिण्या मम तर्जनेनेयं भ्रमरदंशत्वेन प्रतारयतीति अत्र विभिन्नबोद्धृमध्यस्वरूपस्य भेदः निःशेषेत्यादौ तु तदन्तिकागमनरूपयोः विरोधिनीर्वाच्यव्यङ्ग्ययोः स्वरूपभेद इत्यतः पृथक् स्वरूभेदप्रदर्शनम्। अत्र प्रकरणभेदादिसहायाभावात् बोध्यभेदादनुपपत्त्या शक्तिर्व्यञ्जनार्थे सिद्धिः। नीलानीलेति वैधर्म्यानुभवे सत्यप्यभेदाङ्गीकारे नीलारुणयोरप्यभेदः सुवचः स्यादित्यर्थः। वैधर्म्यमेवान्योन्याभाव इति मतेऽयमेव भेद इति वैधर्म्यमन्योन्याभावस्य ज्ञापकमेवेति मते भेदहेतुर्वेति हेतुश्च ज्ञापकः ननु एवं तार्णतार्णवह्न्योर्विरुद्धधर्माध्यासाभावात् भेदस्तद्ग्रही वा न स्यादयमेवेत्येवकारेण भेदकान्तरनिरासादित्यत आह कारणभेदो वेति। ननु एवं वाच्यव्यङ्ग्ययोर्विरोधिस्वरूपत्वबोद्धृभेदो वा यत्र तत्रास्तां शक्त्यतिरिक्ता व्यञ्जना यत्र त्वेकबोद्धृकत्वमविरुद्धस्वरूपत्वं वा तत्र व्यङ्ग्यबोधिका दीर्घतरव्यापारविधयाऽभिधैवास्तामित्यतस्तत्रापि वैधर्म्याध्यासेन भेदं साधयति वाचकानामिति। वाचकानामभिधयाऽन्वयबोधजननकालीनानां अर्थापेक्षा स्वोत्पाद्येऽन्वयबोधे द्वारीभूतपदार्थोपस्थित्यपेक्षा तेषामेव व्यञ्जकानां व्यञ्जनया बोधजननकालीनानां तदनपेक्षत्वमपि तदर्थोपस्थित्यनपेक्षत्वमपीत्यर्थः। विशिष्टस्वरस्यैव विशिष्टव्यङ्ग्यबोधस्यापि स्वविशेषणीभूतपदार्थोपस्थित्यनपेक्षत्वमपि क्वचिदित्यर्थः। अपिकाराद् वाच्यसिद्धयङ्गं काकाक्षिप्तस्थलयोर्व्यञ्जनया व्यङ्ग्यपदार्थमुपस्थाप्य विशिष्टशब्दे बोधजननं तत्सापेक्षत्वमपीति सूचितम्। एवञ्च बोधयोः पदार्थोपस्थितिसापेक्षत्वनिरपेक्षत्वे कारणवैलक्षण्यप्रयोज्ये एवेति कारणे शक्ति व्यञ्जने विभिन्ने एव सिद्ध्यत इति भावः। ननु पदार्थोपस्थितिजन्यतावच्छेदकधर्मवत्त्वतदभावाभ्यामेव बोधयोः वैलक्षण्योपपत्तौ तदर्थं

ननु रामोऽस्मि सर्वं सह इति रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये ! नोचितमिति रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परामित्यादौ लक्षणीयोऽपि अर्थो नानात्वं भजते, विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम ? उच्यते, लक्षणीयस्य अर्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियत-

---

शक्तिव्यञ्जनारूपकारणवैलक्षण्यं कथं कल्पनीयमित्यत आह किञ्चेति। वाच्यमङ्गावसादरूपस्वरूपे वाच्यतावच्छेदकावच्छिन्नरूपे विश्राम्यत्यवतिष्ठते रसबोधने व्यङ्ग्यसाहाय्यार्थं स्वतः स्ववाचकशब्दशक्त्यैव पुनरुपतिष्ठत इति यावत्। रसव्यञ्जनार्थमुक्तव्यङ्ग्यसाहाय्याय तस्य पुनर्ग्राह्यत्वात् अतात्पर्यभूतः शक्तिग्राहकजननतात्पर्याविषयीभूतोऽर्थः दत्तसङ्केतः कश्चित् लतागहनं प्रविष्टो बधूश्च न गतेत्येवंरूपः स्वशब्दानभिधेयः स्वस्मिन् ग्राहिवसङ्केतपदाप्रतिपाद्य इत्यर्थः। कस्य व्यापारस्येति न च दीर्घतरव्यापारविधया अभिधाया एव विषय इति दत्तमेवोत्तरमिति वाच्यम्। इषुव्यापारदृष्टान्तेनैव हि तथात्वसिद्धिः। इषुव्यापारस्य वेगस्य च न विभिन्नलक्ष्यं पुनर्भेदनमतोऽभिधायाः कथं दीर्घतरव्यापारविधया व्यङ्ग्यं बोधयित्वा पुनर्वाच्यबोधकत्वं स्यात् अतएव पुनर्वाच्यबोधकोऽसुन्दरास्यगुणीभूतव्यङ्ग्य एवेवं रीतिसम्भवाद् गुणीभूतव्यङ्ग्य इत्युक्तं न ध्वनावित्ति। ननु मास्त्वभिधैव व्यञ्जना किन्तु लक्षणैव साम्यात् न च मुख्यार्थबोधादिसापेक्षत्वतदनपेक्षत्वे भेदके स्यातामिति वाच्यलक्षणाविशेष एव तत्सापेक्षत्वस्वीकारात्। व्यञ्जना तु अन्यविधैव लक्षणा स्यात् सोपस्याप्यलक्ष्यार्थव्यङ्ग्यार्थयोस्तुल्यानेकधर्मवत्त्वात् इत्याह रामोऽस्मीति गतोऽस्तमर्क इत्यादौ एकस्यैव शब्दस्य व्यङ्ग्यार्थानां नानात्वं यद्दर्शितमेकरामपदलक्ष्यार्थानामपि तथा नानात्वमित्यर्थः। रामोऽस्मीत्यत्र हि दुःखसहिष्णुर्लक्ष्यार्थः रामेणेत्यत्र तु निःस्नेहो लक्ष्यार्थः रामोऽसावित्यत्र तु तन्नामख्यातस्तेन तेन रूपेण ते लक्ष्यार्था इति विशेषेति व्यवदेशः संज्ञा काव्यस्यालक्ष्यक्रमव्यङ्ग्यलक्ष्यव्यङ्ग्यक्रमव्यपदेशविशेषहेतुर्यथा व्यङ्ग्यार्थस्तथाऽर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यव्यपदेशविशेषहेतुर्लक्ष्यार्थोऽपीत्यर्थः। शब्दायत्तः शब्दतदर्थावगमायत्तः इत्यर्थः। अनेकार्थशब्दाभिधेया यथा इयन्त एवेति कोषाः प्रतिनियमितास्तथा लक्ष्यार्था अप्युपस्थितमुख्यार्थसम्बन्धा एवेति व्यवहारसमुदाय-

त्वमेव, न खलु मुख्येन अर्थेनानियतसम्बन्धो लक्षयितुं शक्यते, प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसम्बन्धः अनियतसम्बन्धः सम्बद्धसम्बन्धश्च द्योत्यते। न च

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ! रत्तिअंधअ सेज्जाए मह णिमज्जहिसि॥

---

प्रतिनियमिता इत्यर्थः तमेव मुख्यार्थसम्बन्धोपस्थितिनियमं दर्शयति न खल्विति अनियमतसम्बन्धः खरीषात् प्रागुपस्थितिनियमरहितमुख्यार्थसम्बन्धः न तु कादाचित्कसम्बन्धेन कुन्तेनापि कुन्ते लक्षणात्। चक्रवर्त्ती तु विभिन्नबोद्धृत्वेन विभिन्नबोद्धृबोध्यमेवानियतसम्बन्धत्वं तच्च लक्ष्यार्थस्य नास्ति गङ्गादिशब्दवाच्यलक्ष्यार्थयोः एकबोद्धृबोध्यत्वात् व्यङ्ग्यार्थस्य तु तदस्तु अतएवाग्रे कस्मण वेत्यादिकमेवानियतसम्बन्धोदाहरणं वक्ष्यते। तत्र पत्युर्वाच्यबोद्धृत्वेन पत्न्याश्च व्यङ्ग्यबोद्धृत्वेन विभिन्नबोद्धृबोध्यत्वादिति व्याचष्टे। तच्च कस्मणवेत्याद्युदाहरणप्रदर्शनावसरे दूषयिष्यते। लक्ष्यार्थवैलक्षण्यं व्यङ्ग्यार्थे दर्शयति प्रतीयमानस्त्विति सम्बन्धस्य नियतत्वानियतत्वे उपस्थितौ बोध्ये तच्चाग्रे दर्शयिष्यमाणेषु नियतसम्बन्धादिविषयोदाहरणेषु दर्शयिष्यते। एवञ्च साधर्म्यमात्रान्नैकत्वं किन्तु वैधर्म्यादेव भेदसिद्धिरित्युक्तं मुख्यार्थबाधादिनिरपेक्षत्वं तस्या वृत्तेः लक्षणाविशेषरूपत्वे प्रमाणमपि नास्त्यतो मुख्यार्थबाधादिसापेक्षैव लक्षणा वाच्या विवक्षितान्यपरवाच्यध्वनिस्थलीयव्यञ्जनायास्तु तत्सापेक्षत्वं नास्तीत्याह न च अत्ता एत्थेति। अत्ता एत्थेत्यादौ विवक्षितान्यपरवाच्यध्वनौ न च मुख्यार्थबाधा इत्यन्वयः।

श्वश्रूरत्र निमज्जति अत्राहं दिवस एव प्रलोकय।
मा पथिक! रात्र्यन्धक! शय्यायामावयोर्निमङ्क्ष्यसि॥ इति संस्कृतम्।

कथितस्वीयरात्र्यन्धत्वं कृतवासं पथिकं प्रति स्वयं दूत्या उक्तिरियम्। अत्तेति श्वश्रूर्वा दैशी मृतप्रायत्वसमावार्थं शयने निमज्जतीत्याध्यासेनाह निमज्जतीति निष्पन्दा स्वपितीत्यर्थः। आत्मनस्तु अतथाभूतशयनसूचनार्थमत्राहमिति निष्क्रियनिर्देशः। मा निमङ्क्ष्यसि मा प्रवेक्ष्यसि तत्र प्रवेशे निमज्जनाध्यासोऽन्धत्वे नात्यन्तसंलग्नप्रवेशसम्भावनायां तस्य निमज्जनप्रायतासूचनाय अत्रानाकाङ्क्षितवक्तृत्वरूपवक्तुर्वैलक्षण्येन वाच्यार्थस्य व्यङ्ग्यं मम शय्यायां निमङ्क्ष्यसीति। अत्र मुख्यार्थबाधाभावात्

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः। तत् कथम् अत्र लक्षणा? लक्षणायामपि व्यञ्जनम् अवश्यम् आश्रयितव्यमिति प्रतिपादितम्। यथा च समयसव्यपेक्षा अभिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा अत एव अभिधापुच्छभूता सेत्याहुः।

न च लक्षणात्मकमेव ध्वननं तदनुगमेन तस्य दर्शनात्, न च तदनुगतमेव अभिधावलम्बनेन अपि तस्य भावात्। न च उभयानुसार्य्येव, अवाचकवर्णानुसारेण अपि तस्य दृष्टेः। न च

---

कथं लक्षणेत्यर्थः। अलससिरमणीत्यादावेव एतत्प्रदर्शनसम्भवेऽपि उदाहरणसौलभ्यादिदं प्रदर्शितम्। ननु मुख्यार्थेन वक्तृतात्पर्य्यानुपपत्तिरेवात्र मुख्यार्थबाधोऽस्तीत्यत आह। लक्षणायामिति। प्रतिपादितमिति लक्षणाप्रयोजनस्य व्यञ्जनैकगम्यस्योक्तत्वात्। तथाच तच्छय्याप्रवेशस्य लक्षणागम्यत्वाभ्युपगमे तल्लक्षणाया रूढ़िहेतुकत्वाभावेन प्रयोजनमवश्यं वाच्यं तस्य लक्षणीयत्वेऽनवस्था व्यङ्ग्यत्वे तु तत्रैव व्यञ्जनसिद्धौ अलं प्रयासेनेति भावः। लक्षणायां व्यञ्जनाया वैधर्म्यान्तरमभिधायामिवाह यथा चेति। समयः शक्तिग्राहकः कोषादिः समयविशेषो मुख्यार्थे शक्तिग्राहकः कोषादिः मुख्यार्थबाधग्रहणार्थं तदपेक्षा अत ताटृशी लक्षणाधर्मो व्यञ्जनायां नास्त्यतो न लक्षणैव व्यञ्जनेत्याह नचेति। ध्वननं व्यञ्जना तदनुगमनेति। लक्षणोत्तरभावेन तस्य ध्वननस्य दर्शनात् बोधकत्वदर्शनात्। तथाच लक्षणैव मुख्यार्थबाधादिसापेक्षा लक्षणामूलव्यञ्जना तु लक्षणासापेक्षैव न मुख्यार्थबाधादिसापेक्षेति वैधर्म्याद्भेदसिद्धिः इति भावः। ननु लक्षणाया अपेक्षितो यो मुख्यार्थबाधः स एव तदुत्तरव्यञ्जनयाप्यपेक्ष्यते तत्सापेक्षत्वात् सापि लक्षणैव। लक्षणोत्तरत्र लक्षणा तु प्रयोजनं नापेक्ष्यत इत्युच्यत इत्यत आह न च तदनुगतमेवेति। यदि लक्षणोत्तरमेव व्यञ्जना बोधिका स्यात्तदेव तु नेत्यर्थः। तस्य ध्वननस्य भावात् बोधकतया सत्त्वात् मुख्यार्थेन तात्पर्य्यानुपपत्तिः तत्रापि मुख्यार्थबाधः स्यादित्यत आह। नचोभयेति अवाचकेति। तथाच वर्णस्य मुख्यार्थसत्त्व एव तद्बाधः स्यात् स एव तु नास्तीत्युक्तम्। ननु वर्णस्य पदैकदेशत्वात् तदेकदेशिपदमुख्यार्थस्यैव बाधोऽभ्युपगन्तव्य इत्यत आह। न च

शब्दानुसार्य्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेन अपि तस्य प्रसिद्धेरिति अभिधातात्पर्य्यलक्षणात्मकव्यापारत्रयातिवर्त्ती ध्वननादिपर्य्यायो व्यापारोऽनपह्नवनीय एव।

तत्र अत्ता एत्थेत्यादौ नियतसम्बन्धः कस्स ण वा होइ रोसो इत्यादौ अनियतसम्बन्धः,

विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठम्।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ॥

---

शब्देति। ध्वननादिपर्य्याय इति ध्वननव्यञ्जनाद्यनेकनायक इत्यर्थः। इदानीं व्यञ्जनाया नियतानियतसम्बन्धादिविषयबोधकत्वं पूर्वोक्तमुदाहरणेषु दर्शयति। अत्र अत्ता एत्थेति। अत्र सच्छय्यामात्रप्रवेशो वाच्यार्थः तत्र प्रवेशस्तु व्यङ्ग्यार्थ उभयस्यैव बोद्धा पथिकः सामाजिकश्च तत्राप्रवेशे वाच्यार्थे बुध्यमाने व्यङ्ग्ये प्रवेशेऽपि तत्प्रतियोगितारूपो वाच्यार्थसम्बन्धो नियतो भासते तदभावज्ञानस्य तत्प्रतियोगिताविषयत्वनियमादिति भावः। कस्स णवेत्यादाविति। अत्र हि सभ्रमरपद्माघ्राणं वाच्यार्थः। अबाधास्फूर्त्त्या तद्बोध्याङ्गा कान्त एव न तु कान्ता तस्याः तत्र बाधस्फुरणात् किन्तु इयं प्रतारयतीत्येवंरूपस्य व्यङ्ग्यार्थस्यैव सा बोद्धी तत्र च सभ्रमरपद्माघ्राणरूपवाच्यार्थसम्बन्धो न भासते। कदाचित्तु सभ्रमरपद्माघ्राणकथनेनेयं प्रतारयतीत्येवमपि तया बुद्ध्यते इत्यतः प्रतारणे सभ्रमरपद्माघ्राणकथनजन्यतारूपस्य सम्बन्धस्योपस्थित्यनियमः। चक्रवर्त्ती तु वाच्यव्यङ्ग्ययोः विभिन्नबोद्धृकत्वमेव अनियतसम्बन्ध इत्याह। तन्न। वाच्यबोद्धृबोध्यत्वं व्यङ्ग्यस्येत्युच्यते तदा लक्ष्यार्थेऽपि तथात्वसत्त्वादनियतसम्बन्धत्वमस्त्येवेति। कथं ततो वैलक्षण्यमित्यविचारः सुगम एव सः। विपरीअरए इति।

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।
हरेर्दक्षिणनयनं रसाकुला झटिति ढौकते॥ इति संस्कृतम्।

सूर्य्यात्मकदक्षिणनयने हरौ विपरीतरतौ प्रसक्ता लक्ष्मीस्तदीयनाभिकमलस्थं ब्रह्माणं दृष्ट्वा लज्जमाना रसाकुलत्वेनात्यन्यरता च ब्रह्मणः पिधानाय पद्ममीलनार्थं सूर्य्यात्मकं हरेर्दक्षिणनयनं सहसा आच्छादयतीति वाच्यार्थः। तत्र व्यङ्ग्यस्य

इत्यादौ सम्बद्धसम्बन्धः, अत्र हि हरिपदेन दक्षिणनयनस्य सूर्य्यात्मकता व्यज्यते, तन्निमीलनेन सूर्य्यास्तमयः, तेन पद्मस्य सङ्कोचः, ततो ब्रह्मणः स्थगनं, तत्र सति गोप्याङ्गस्य अदर्शनेन अनियन्त्रणं निधुवनविलसितमिति।

अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थं एव वाच्यार्थः, 'वाक्यमेव च वाचकम्' इति येऽप्याहुः, तैरपि अविद्यापथपतितैः पदपदार्थकल्पना कर्त्तव्येवेति तत्पक्षेऽपि अवश्यम् उक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव। ननु वाच्यादसम्बद्धं तावन्न प्रतीयते, यतः कुतश्चित् यस्य कस्यचित् अर्थस्य प्रतीतेः प्रसङ्गात्, एवञ्च सम्बन्धात् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धे अवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत् तद्रूपः पर्य्यवस्यति। तथाहि,

---

वाच्यसम्बन्धिसम्बन्धित्वं दर्शयति अत्र हरीति। हरिः वाच्यार्थः तदवयवनयनाभेदरूपसम्बन्धेन सम्बन्धी व्यङ्ग्यः सूर्य्यः नयननिमीलनजन्यस्तदस्तमयस्तद्वृत्तित्वसम्बन्धेन सम्बन्धी पद्मसङ्कोचस्तज्जन्यतासम्बन्धेन सम्बन्धी ब्रह्मणः स्थानमपि तज्जन्यत्वेनैव तत्सम्बन्धित्वज्ञायन्त्रणारहितं निधुवनविलसितञ्च तज्जन्यत्वेन सम्बन्धीत्येवं समुन्नता। ननु अयं शक्तिव्यञ्जनाभेदविचारः तदशक्यशक्यज्ञाने सत्येव तदेव तु नास्ति तथाहि वाक्यस्यैव प्रयोगयोग्यत्वेन अखण्डतदर्थ एव अखण्डवाक्यार्थः स च व्यङ्ग्यत्वाभिमतार्थोऽपि भवति पदार्थस्तु कश्चिन्नास्ति तदुक्तं भर्त्तृहरिणा। ब्राह्मणार्थो यथा नास्ति कश्चित् ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युरनर्थका इति। अस्यार्थः ब्राह्मणसम्बन्धिनि कम्बले प्रतीयमाने यथा ब्राह्मणरूपोऽर्थो नास्ति तत्सम्बन्धित्वविशिष्टकम्बलस्याखण्डस्य प्रतीतेः तथा देवदत्तो गच्छतीति वाक्ये देवदत्तसम्बन्धिगमनस्याखण्डस्य प्रतीतेः खण्डभूता देवदत्तादयोऽनर्थकास्तदर्थभिन्नादय एव स्युरित्येतद्वैयाकरणमतमाशङ्कते अखण्डेति। समाधत्ते तैरपीति। अन्यथा घटमानयेति वाक्ये व्युत्पन्नस्य आनय घटमिति वाक्यात् तदर्थबोधो न स्यादिति भावः। एवञ्च पदपदार्थकल्पनावश्यादेव अपदार्थभूतस्य व्यङ्ग्यार्थस्य वाच्यार्थात् पृथक्त्वे व्यञ्जनापि

भम धम्मिअ ! वीसत्थो सो सुणओ अज्ज मारिओ देण।
गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण"॥

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणम् अनुमापयति, यद् यद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्, गोदावरीतीरे च सिंहोपलब्धि-

---

शक्तेः पृथगिति भावः। एवञ्च पदार्थकल्पना अद्वैतदर्शिनां तत्त्वज्ञानिनां नास्ति पदपदार्थयोरपि ब्रह्माभिन्नत्वेन तैरवगतत्वादत आह अविद्यापदपतितैरिति। अविद्या द्वैतबुद्धिहेतुर्मिथ्यावासना व्यङ्ग्यार्थोऽनुमितेरेव विषय इति। वादिनां नैयायिकानां मते भूमिकामुत्थापयति वाच्यादसम्बद्धमिति वाच्यस्य पक्षत्वे तत्र बाधनिवर्त्तिका तस्य हेतुत्वे च तत्र साध्यव्याप्तिबोधिकाऽवश्यं न भवतीत्यन्ता भूमिका अप्रतिबन्धेऽसम्बन्धेन भवतीत्यनन्तरमिति स्थिते इति पूरणीयं व्याप्तत्वेनेति। त्रिरूपात् लिङ्गात् लिङ्गिनि पक्षे ज्ञानं साध्यभूतव्यङ्ग्यार्थस्य तदेवानुमानमनुमितिरिति। यत्तद्रूप एव व्यङ्ग्यव्यञ्जकभावः पर्य्यवस्यतीत्यन्वयः। लिङ्गस्य पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वात्मकं त्रिरूपत्वं दर्शयति व्याप्तत्वेनेति। साध्यवदन्यावृत्तित्वरूपव्याप्तिसत्त्वेनेत्यर्थः। अनेन विपक्षासत्त्वं रूपं दर्शितम्। पक्षसत्त्वसपक्षसत्त्वात्मकं रूपद्वयं दर्शयति नियतधर्मीति। साध्यवत्त्वेन नियतौ धर्मिणौ पक्षसपक्षौ तन्निष्ठत्वेनेत्यर्थः। भम धम्मिअ ! इति पद्यव्यङ्ग्यार्थस्यानुमेयतां दर्शयितुमाह तथाहि इति।

भ्रम धार्मिक ! विश्वस्तः स श्वा अद्य मारितस्तेन।
गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति संस्कृतम्।

गोदावरीतीराश्रमस्था काचित् कुलटा तदीयकुञ्जे कृतसङ्केता तन्निकुञ्जे पुष्पावचयनेन प्रत्यहं सङ्केतभङ्गकारिणं कञ्चित् धार्मिकं श्वप्रेरणेन कृतोपद्रवमप्यनिवृत्तं दिनान्तरे एवमाह। यः श्वा प्रत्यहं त्वां भीषयति सोऽद्य गोदावरीकुञ्जवासिना दृप्तसिंहेन मारितः। हे धार्मिक ! तदद्य विश्वस्तो भ्रमेत्यर्थः। इदञ्च वाक्यं सङ्केतस्थलस्य सिंहवत्त्वकथनात्तत्राभ्रमणव्यञ्जकं तच्चाभ्रमणमनुमानगम्यमेवेत्याह।

अत्रेति। विहितमित्यन्तं गोदावरीतीरदेशस्य वाच्यस्य पक्षदर्शनपरं विहितमित्यस्य कुलटयेति शेषः। सिंहोपलब्धेरिति। हेतुप्रदर्शनं अभ्रमणं भीरुधार्मिकस्य सिंहोपलब्धिरप्येतद्वाक्यजन्या तस्यैवानुमानञ्चेतत्पद्यश्रोतॄणां सामाजिका-

रिति व्यापकविरुद्धोपलब्धिः। अत्र उच्यते भीरोरपि गुरोः प्रभोर्वा निदेशे, प्रियानुरागेण, अन्येन चैवम्भूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः, शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात् न च वचनस्य प्रामाण्यमस्ति अर्थेन अप्रतिबन्धात् इति असि-

---

नाम् अनुमापयतीत्यत्र सिंहोपलब्धिजनकमेतद्वाक्यमेव कर्तृ बोध्यं सिंहोपलब्धिरिति पाठे सिंहोपलब्धिरूपहेतोरेव विवक्षावशात् कर्तृत्वं बोध्यम्। सिंहोपलब्धेश्च विषयतासम्बन्धेन पक्षवृत्तित्वं बोध्यम्। तथाच अयं प्रयोगः गोदावरीतीरदेशो भीरुतद्धार्मिकेणाभ्रमणीयस्तदीयसिंहोपलब्धेरिति। तेनान्यदीयसिंहोपलब्धिसत्त्वे तद्भ्रमणसत्त्वेऽपि न व्यभिचारः। पक्षीऽत्र तत्सिंहोपलब्धिमत्त्वेन विशेषणीयः तेनान्यदा तद्भ्रमणसत्त्वेऽपि न बाधः। पक्षतावच्छेदकावच्छेदेन साध्यस्य बोधात्। तत्सिंहोपलब्धिश्चात्र तच्छब्दजन्यैव सामाजिकैरवगतेति। सैवात्र हेतुः स च पक्षमात्रवृत्तित्वेन व्यतिरेक्येव इत्यतो व्यतिरेकेणैव उदाहरणं प्रयुङ्क्ते यद्यदिति। भीरुभ्रमणमित्यत्र भीरोर्भ्रमणं यत्रेति बहुव्रीहिणा भीरुभ्रमणवद्देशोऽर्थः। तेनाभ्रमणस्य साध्यस्याभावानां भ्रमणानामधिकरणान्युक्तानि। तेषां हेत्वभावाधिकरणत्वमाह तत्तद्भयकारणमत सिंहस्य निवृत्त्युपलब्धिरुपलब्धिनिवृत्तिः। राजदन्तादित्वे कृते समासे पूर्वनिपातस्य व्याकरणव्युत्पादितत्वात्। निवृत्तिश्च अभावः सिंहोपलब्धिः अभावो भयकारणनिवृत्त्युपलब्धिपर्य्यन्तस्यार्थः। विशिष्टबुद्धौ विशेषणस्य पूर्वज्ञेयत्वेन तदनुसारात् पूर्वपदमेव विशेषणार्थकं बहुव्रीहौ च कप्रत्ययः तथाच सिंहोपलब्ध्यभावविशेषणकमिति। तत्तदित्यादि समुदायार्थस्तथाच यद्यद्भीरुभ्रमणवत् तत्तत् सिंहोपलब्ध्यभाववदिति। व्यतिरेकोदाहरणमुक्तम्। उपनयनरूपमवयवं प्रयुङ्क्ते गोदावरीतीरे चेति। सिंहोपलब्धेर्हेतोः साध्याभावप्रतियोगित्वं दर्शयति व्यापकेति। व्यापकस्य साध्याभावव्यापकस्याभावस्य विरुद्धाप्रतियोगिनी उपलब्धिः सिंहोपलब्धिर्गोदावरीतीर इत्यर्थः। सिंहोपलब्धेर्गोदावरीतीरवृत्तित्वमुक्त्वा तस्या व्यापकविरुद्धत्वं वाक्यान्तरेण कथितमिति न पौनरुक्त्यं भीरुरपीति भीरुतद्धार्मिकोऽपीत्यर्थः। अन्यभीरुभ्रमणस्य साध्याभावरूपत्वाभावात्। प्रियानुरागेण चेति। सिंहवद्गोदावरी-

श्च, तत्कथमेवंविधात् हेतोः साध्यसिद्धिः। तथा निःशेष-च्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्य्यत्वेन उक्तानीति न उपभोग एव प्रतिबद्धानि इत्यनैकान्तिकानि।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्,

---

तीरदेशप्रविष्टप्रियानुरागिणेत्यर्थः। अन्येन चेति मन्त्रौषधिबलादित्यर्थः। अनैकान्तिक इति। पच एव व्यभिचारीत्यर्थः। पचातिरिक्ते तच्छब्दे सिंहोपलब्धेरभावात् शुनी बिभ्यति स धार्मिको यदि वीरस्तदा शुनो बिभ्यदपीत्यर्थः। विरुद्ध इति। वीरत्वेन तत्र भ्रमणावश्यम्भावेऽभ्रमणरूपस्य साध्यस्य तत्राभावाद्विरुद्ध इत्यर्थः। धार्मिकस्यावीरत्वे सिंहवति कदाचित् अभ्रमणाद्व्यभिचारी वीरत्वे तु यावत् सिंहसत्त्वं तावदेव भ्रमणाद्विरुद्ध इत्यर्थः। भ्रमणीयमेऽपि भ्रमणमित्यभिप्रायात्। अत्र केचित् यद्देशे सिंहोपलब्धिरभ्रमणञ्चेति साध्यहेत्वोः सहचारस्तत्वे कथं विरुद्ध इत्यतो व्यभिचारितो व्यतिरिक्तो विरुद्ध इति परिभाषया व्यभिचरित इत्येवार्थ इत्याहुः तन्न। व्यभिचारस्य प्रागुक्तत्वेन पौनरुक्त्यत्वापत्तेः। शाब्दतदुपलब्धिविशेषस्य हेतुत्वेन पचान्यत्र तदवृत्तेः तदन्यदेशे सामानाधिकरण्यस्यैवाभावात् च अन्यथा अन्वयित्वमेव हेतोरिति। व्यतिरेकेणोदाहरणप्रदर्शनं न क्रियेत। शाब्दस्योपलब्धिविशेषस्य हेतोः सन्दिग्धासिद्धिमप्याह गोदावरीतीर इति न च वचनस्येति। कुलटावचने प्रामाण्यसन्देहेन तस्माद्वचनात् धार्मिकस्य सिंहोपलब्धिर्जाता नवेति पचे हेतोः सन्देह इत्यर्थः। एतावति वोपलब्धिसामान्यस्य न हेतुरिति स्फुटीकृतमित्यवधेयम्। निःशेषच्युतेत्यादेर्व्यङ्ग्यस्यानुमेयत्वे व्यभिचारमाह तथेति। कारणान्तरतः स्नानादित्यर्थः। न प्रतिबद्धानि न व्याप्यतया सम्बद्धानि न च स्नानाद्यजन्यतावधारकप्रमाणे सतीति। विशेषणादव्यभिचार इति इति वाच्यम्। तादृशविशेषणस्यानुपात्तत्वेन तदनुसन्धाने विलम्बस्तदनुसन्धायकाभावश्चेत्यभिप्रायात्। ननु व्यञ्जनावादिनस्तवापि मते तेषामन्यहेतुकत्वसम्भवे कथं तेभ्य उपभोगव्यञ्जनेत्यत आह।

व्यक्तिवादिनेति। व्यञ्जनावादिनेत्यर्थः। अधमपदेति अधमादिपदेत्यर्थः। च्युतादिपदानामपि व्यञ्जकत्वस्य प्राग्दर्शितत्वात् तेषां चन्दनच्यवनादीनां तथाच

न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथम् अनुमानम् ? एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तत् अदूषणम् ।

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चमः उल्लासः ।

---

## षष्ठः उल्लासः ।

शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥१॥

न तु शब्दचित्रेऽर्थस्याचित्रत्वम्, अर्थचित्रे वा शब्दस्य,

---

फलबलात् एषां व्यञ्जकत्वे सिद्धे अन्यहेतुकत्वेन व्यभिचारी नात्र दूषणमिति भावः । ननु अधमत्वादिविशेषणान्येव तेषामनन्यहेतुकत्वादनुसन्धायकानि तथाच तद्बलादेव मम मते न व्यभिचार इत्यत आह न च अत्र अधमत्वमिति । ननु अधमत्वादीनामप्रतिमत्वे कथं व्यञ्जनायां तन्मतेऽपि तेषां सहायतेत्यत आह एवंविधोऽर्थ इति फलमेवात्र प्रमाणमित्यर्थः ।

काव्यप्रकाशादर्शे पञ्चमः प्रतिबिम्बः ।

---

ननु शब्दचित्रं वाच्यचित्रमिति द्विविधं चित्रमुक्तं तत्तु न युक्तम् एकतरस्यैव अन्यैः काव्यत्वाङ्गीकारात् । इत्यतस्तादृशाङ्गीकारी नास्माकं सम्मतः किन्तूभयस्यैव वैचित्र्यरूपत्वेनैव उभयोरेवालङ्कारत्वमस्मत्सम्मतमिति विवक्षुरुभयलङ्कारसमावेशे एकस्य चित्रत्वं खण्डयन्नाह ।

शब्दार्थचित्रमिति गुणप्राधान्यत इति । एकस्य तत्र अनलङ्कारत्वाभावमात्रे तात्-

तथा च उक्तम्,

रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनिताननम्॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे।
सुपां तिङाञ्च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः॥ इति।

शब्दचित्रं यथा

प्रथममरुणच्छायस्तावत्ततः कनकप्रभः,
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥

---

पर्य्यं न तु तत्र गुणप्राधान्यत इति। एकस्य तत्रानलङ्कारत्वाभावमात्रे तात्पर्य्यं न तु तत्र गुणप्राधान्ये प्रतिनियते समत्वे तुल्यप्राधान्येनापि स्थितेः। अतएव उभयसमावेशे एकस्यानलङ्कारत्वाभाव एव व्याख्यातो न तु गुणप्राधान्ये नियमितो शब्दार्थचित्रयोः इति सुगमः पाठः। चित्रार्थशब्दयोः इति पाठे चित्रालङ्काररूपौ यौ शब्दार्थावनुप्रासोपमाद्यौ तयोः स्थितिरित्यर्थः। वक्ष्यमाणकारिकात्रये सार्द्धकारिकाद्वयमेकैकालङ्कारवादिनां मतकथनं तृतीयकारिकापरार्द्धं उभयालङ्कारस्वीकर्त्तृमतं तदेव संवादत्वेन दर्शयितुमाह।

तथाचोक्तमिति। तस्य काव्यस्य रूपकादिर्बहुधालङ्कार इत्यन्वयः। विभाति विशेषेण भाति बाह्यं काव्यत्वाप्रयोजकं सुपां सुबन्तानां तिङां तिङन्तानां व्युत्पत्तिं विशेषेण अनुप्रासादिना उत्पत्तिविन्यासम्। तस्या एवालङ्कृतित्वे हेतुमाह।

तदेतदिति। सौशब्द्यं सुशब्दता सुकाव्यत्वमित्यर्थः। स्वसम्बन्धार्थं तृतीयकारिकापरार्द्धमाह शब्दाभिधेयेति। अभिधेयोऽर्थः।

प्रथममरुणेति। क्षणदामुखे मृगलाञ्छनत्वतः पूर्वार्द्धोक्तक्रमिकरूपप्राप्तेरनन्तरं सरसविसिनीकन्दस्य सरसत्वेनाशुष्कतया धावल्यमुक्तम्। क्रमशो रूपत्रयप्राप्तिं

अर्थचित्रं यथा,

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया पर्य्यवसानम्, तथापि स्फुटस्य रसस्य अनुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयम् उक्तम् ।

अत्र च शब्दार्थालङ्कारभेदाद्बहवो भेदाः, ते च अलङ्कारनिर्णये निर्णेष्यन्ते ।

इति काव्यप्रकाशे षष्ठः उल्लासः ।

---

पूर्वार्द्धेनाह प्रथममिति । प्रथमं तावदित्यन्वयः । कनकप्रभत्वेन ईषत्ताम्रता विरहोत्ताम्यदिति वर्त्तमाननिर्देशात् कपोलकान्तिः प्रथमदशालाभेनेषत्पाण्डुता । अत्रानुप्रासं प्रधानं वस्तुषु वर्णेषु तथात्वात् । विरहोत्ताम्यदित्यादौ सरसविसिनीत्यादौ च उपमालङ्कारौ गौणौ नायिकादिविभावादेः अनुपात्तत्वात् स्फुटरसाप्रतीत्या स्फुटप्रतीयमानार्थराहित्यञ्चेति चित्रता ।

ते दृष्टीति । ते खलाः पक्ष्मलदृशामलकाश्च अत्र लोके दृष्टिमात्रपतिता अपि कस्य क्षोभाय न भवन्तीति शेषः । खलपक्षे क्षोभो भयम् अलकपक्षे कामपीड़ा अलकपक्षे नीचाः खर्वाश्च सविलासं सपरिहासम् अलीके मृषाकथायां लग्ना अलीके ललाटे सविलासं सशोभं लग्नाश्च अलिकमलीकञ्चेति द्विरूपकं कालतां यमस्वरूपतां कृष्णवर्णताञ्च कुटिलतां वक्रस्वभावतां कुञ्चितत्वञ्च । अत्र प्रकृतखलाऽप्रकृतालकयोरेकधर्मान्वयरूपं दीपकमर्थालङ्कारप्रधानं अलीकादिपदश्लेषाऽनुप्रासश्च शब्दालङ्कारौ गौणः । विभावादिरूपतयेति वर्णितार्थस्य रूपचन्द्रादेः उद्दीपनादिविभावादिरूपत्वेन तदङ्गशृङ्गाररसादौ काव्यस्य पर्य्यवसानमित्यर्थः । स्फुटस्य शीघ्रप्रत्ययस्य अव्यङ्ग्यमुक्तमिति शब्दचित्रं वाच्यचित्रमव्यङ्ग्यन्त्ववरं स्मृतमिति सूत्रे इत्यर्थः ।

काव्यप्रकाशादर्शे षष्ठः प्रतिविम्बः ।

---

# सप्तमः उल्लासः ।

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥१॥**

हतिरपकर्षः शब्दाद्याः इत्याद्यग्रहणाद्वर्णरचने ।

विशेषलक्षणमाह

---

दोषगुणालङ्कारा वक्ष्यन्त इत्युक्तत्वात् दोषनिरूपणमुत्थापयति काव्यस्य स्वरूपमिति । दोषाणां सामान्यलक्षणमिति । सर्वदोषसाधारणं लक्षणमित्यर्थः । यद्यपि तद्दोषावित्यादिलक्षणघटका न सर्वे दोषा इति प्रागेव दर्शितम् अतः सर्वदोषनिरूपणमसङ्गतं तथापि दोषत्वेन सकलकाव्यदोषाणां स्मारितत्वात्तेषामपि लक्षणकरणं न असङ्गतमिति बोध्यं स्मृतस्योपेक्षा नार्हत्वरूपसङ्गतिसत्त्वात् ।

मुख्यार्थेति । मुख्यः प्रधानं अर्थः प्रयोजनं तस्य हतिरपकर्षो यस्मादिति बहुव्रीहिः । मुख्यप्रयोजनञ्च सुखदुःखाभावश्चेति न काव्यजन्यरसात्मकसुखमात्रमतो वैषयिकसुखस्य दुःखाभावस्य चापकर्षके वस्त्वन्तरेऽप्यतिव्याप्तिरर्थपदप्रयोजनविशेषपरतया सङ्गमयति रसश्चेति । मुख्यो मुख्यार्थोऽत्र विवक्षितः इति शेषः । ननु अर्थवृत्तिः शब्दवृत्तिश्च दोषः कथं स्वाप्रत्ययासन्नस्य रसस्यापकर्षकारक इत्यतः प्रत्यासत्तिं घटयति तदाश्रयादिति । इदञ्च न हेत्वर्थकपञ्चम्यन्तं रूपं साध्यनिर्देशाभावेन हेतुत्वानुपपत्तेः न च अनुगम्यमानमुख्यत्वमेव साध्यमिति । वाच्यरसस्य वाच्यवृत्तित्वोपपादने वाच्यस्य मुख्यत्वकथनस्यानुपयुक्तत्वात् । वाच्यस्य मुख्यत्वेऽपि रसस्य तद्वृत्तित्वे तस्यार्थवृत्तिदोषप्रत्यासन्नत्वोपपत्तेश्च किन्तु तदाश्रयादिति प्रथमान्तमेव तदाश्रयणमतति प्राप्नोतीति व्युत्पत्त्या क्विबन्तत्वात् अत सातत्यगमने इत्यस्य रूपमिदं तथाच वाच्यो रससम्बन्धीत्यर्थः । शब्देऽपि रसाश्रयणत्वमुक्तमुपपादयति उभयोपेति । यद्यपि शब्दादीनां रसोपयोगित्वकथनमेव तेषां रसाश्रयत्वकथनोप-

दुष्टं पदं श्रुतिकटु
च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं
निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥ २ ॥

---

पादकं नत्वर्थोपयोगित्वकथनं तथापि रसोपयोगितापि शब्दादीनामर्थोपस्थापन-द्वारैवेति। द्वारीभूततदुपयोगकथनमिदम् उपयोगश्च रसे व्यञ्जनयाऽर्थे च शक्त्या आदिपदग्राह्यवर्णरचनयोस्तु वर्णानां वाचकपदघटतया समासरूपरचनायास्तु पाद-घटितवाक्यघटकतयेति बोध्यम्। रसपदञ्चासंलक्ष्यक्रमपरं तेन भावादिहतिरपि दोषः। वाच्यपदञ्च लक्ष्यार्थस्याप्युपलक्षणं तेन लक्षणामूलरसादिहतिपरिग्रहः इत्थं वाच्यादौ साक्षात् परम्परया च रससम्बन्धमुक्त्वा तेन तेन सम्बन्धेन तत्र रसस्थितिमाह तेन तेष्वपीति। स रसः तेन दोषप्रत्यासन्न एव रस इत्युक्तम् अपकर्ष इति स च तस्यानुत्पत्तिस्तस्य प्रकर्षाप्रत्ययस्तस्योत्पत्तिविलम्बश्चेति त्रिविधः झटिति प्रकृष्ट-तदुत्पत्तिप्रतिबन्धत्वेन तच्चितयानुगमो बोध्यः। विशेषेति लक्षणकथनादेव लक्ष-णोक्तिरित्यभिप्रायः तेन कस्यचिद्दोषस्य लक्ष्यमात्रकथनमपि नानुपपन्नम्।

दुष्टमित्यादि। श्रुतिकटुपदं दुष्टमित्येवं रीत्या पदमित्यस्य सर्वदोषान्वयः। क्लिष्टादित्रयं तु समासगतमेव सत्पदं दुष्टम् असमासगतत्वे तु वाक्यमेव तादृशं दुष्ट-मित्यतोऽथशब्देन तेषां तेषां पृथक्करणं न च किमत्र बीजमिति वाच्यम्। क्लिष्टस्य विलम्बितः प्रत्यायकपदद्वयरूपत्वेन अविमृष्टविधेयांशस्य उद्देश्यविधेयार्थकपदद्वय-रूपत्वेन विरुद्धमतिकृतोऽन्वयवशाद्विरुद्धमतिजनकपदद्वयरूपत्वेन च पदद्वयस्य वाक्यत्वनियमेन समासं विना पदत्वाभावात्। अनेकपदानामपि समासे पदत्वमेव न वाक्यत्वमिति वैयाकरणसम्प्रदायात्। एवञ्च कट्वादिपदं दुष्टं श्रुतिकटुत्वादयो दोषा इत्युक्तं श्रुतिकटुलक्षणमाह। परुषवर्णरूपमिति रूपपदबहुलार्थकं तेनैकवर्णघटक-कट्वादोषत्वं श्रुतिदुःखदायित्वस्य बीजस्य एकवर्णेऽननुभवात् सजातीयसंवलन एव तथानुभवात्। अतएव कष्टपदपरिभाषितमपि तदित्याह कष्टमिति। माधुर्यबुभुत्सा सत्त्व एव च श्रुतौ दुःखम् अतो मधुरतयाऽबुभुत्सितेषु वीररौद्रबीभत्सरसेषु न श्रुति-कटुत्वं दोषः किन्तु शृङ्गारादावेव अतः शृङ्गार एव उदाहरति।

सन्दिग्धमप्रतीतम्
ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम्।
अविमृष्टविधेयांशं
विरुद्धमतिकृत्समासगतमेव ॥ ३ ॥

श्रुतिकटु परुषवर्णरूपं दुष्टं यथा,

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥

अत्र कार्तार्थ्यमिति। च्युतसंस्कृति व्याकरणलक्षणहीनं यथा

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त ! पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।
तत्पल्लीपतिपुत्रि ! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥

---

अनङ्गेति। तरङ्गितः तरङ्गवदुत्तरोत्तराविच्छेदः। तन्वङ्ग्या अनङ्गसम्बन्धिमङ्गलगृहरूपस्य अपाङ्गस्य भङ्गीनां तरङ्गितैः उत्तरोत्तराविच्छिन्नभङ्गीभिः आलिङ्गितः स्पृष्टः स न कदा कार्तार्थ्यं कृतार्थत्वं लभते लप्स्यत इत्यर्थः। कदाशब्दयोगे भविष्यदर्थे प्रयोगतश्चेति वर्त्तमाना। च्युतसंस्कृतिदोषं लक्षणपूर्वकमेवाह व्याकरणेति। लक्षणं व्युत्पादनम् असंस्कृतमित्युक्ते प्राकृतपदस्यापि दुष्टत्वं स्यादतो व्याकरणेत्याद्युक्तम्। प्राकृतस्य तु प्राकृतव्युत्पादकव्याकरणेनैव व्युत्पादितत्वान्न तद्धीनता।

एतन्मन्देति। पल्लीपतिपुत्र्यनुरागिणः कस्यचिदुक्तिरियम्। पल्ली स्वल्पग्रामः हे तत्पतिपुत्रि ! तवैतत् कुचयुगम् एवं लक्ष्यते। कीदृशं मन्दविपक्वतिन्दुकफलमिव श्यामोदरं श्याममध्यम् आपाण्डरप्रान्तञ्च। हन्त हर्षे। पुलिन्दसुन्दरस्य करस्पर्शे योग्यञ्च। तथाच विचित्रवर्णं सुखस्पर्शञ्चेत्युक्तम्। नीलमात्रवर्णं कार्कश्यञ्च स्थौल्यमात्रेण तत्प्रतिद्वन्द्विकुम्भयुगं वहतः करिकुलस्य तद्दर्शनात्। कातर्यमाह तत्पल्लीति। कुम्भाभयाभ्यर्थनया दीनं कातरं कुञ्जरकुलं कर्त्तृ त्वामर्थात् कुम्भाभयमनुनाथते याचते

अत्रानुनाथते इति, सर्पिषो नाथते इत्यादावाशिष्येव नाथतेरात्मनेपदं विहितम्, 'आशिषि नाथः' इति। [१।३।२१ सू०वा०) अत्र तु याचनमर्थः, तस्मादनुनाथति स्तनयुगमिति पठनीयम्। अप्रयुक्तं तथाम्नातमपि कविभिर्नादृतं यथा,

यथायं दारुणाचारः सर्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा॥

---

कुचापेक्षया न्यूनगुणयोः स्वकुम्भयोः पराजयभीरुत्वेन भीतत्वात्। तत्तस्मात् कुचयुगं पत्रावृतं परिधेयपत्रावृतं माकृथाः। पत्रावृतत्वे करिकुलेन न दृश्यते। ततश्च भयाभावान्नाभयं याचिष्यते। तथाच परैः प्रार्थ्यमानाभयकत्वरूप उत्कर्षस्तेन स्यादतस्तेन करिकुलेन यथाभयं याच्यसे तथा कुर्विति भावः। यद्वा पत्रावृतं पत्रावल्यावृतं मा कृथाः तथात्वे हि शोभानन्तरस्यापि वृद्धाभयाधिक्येनातिकातरं स्यादतस्तच कृपां कुर्विति भावः। आत्मनेपदं नियमितमिति धातोरात्मनेपदित्वेऽप्याशिष्येव तन्नियमितमित्यर्थः। न चाशिष्यात्मनेपदमेव अन्यत्र तु उभयपदमिति नियम इति वाच्यम्। आत्मनेपदिधातोरुभयपदप्रापकाभावात्।

अत्र चेति। ननु याचनाशिषोः को भेदः द्वयोरप्राप्तप्राप्तीच्छारूपत्वात् न च स्वगतत्वेन तदिच्छा याचनं धनं याचत इत्यादौ दृष्टत्वात्। परगतत्वेन तदीच्छात्वे आशीर्नमस्कर्त्तारमाशास्ते इत्यादौ दृष्टत्वादिति वाच्यम्। चेष्टा भवेयुर्मयीत्यादौ स्वगतत्वेन तदीच्छायामाशिषो धर्मोपदेशा दरिद्रभरणाय नृपो याचित इत्यादौ परगतत्वेन तदिच्छायां याचनस्य च दृष्टत्वात्। उच्यते, स्वाभीष्टोत्पत्त्यर्थं परं प्रवर्त्तयितुं निवर्त्तयितुं वा इच्छा याचनं स्वाभीष्टोत्पत्तिमात्रेच्छात्वाशीरिति भेदः। क्वचिद्यदि तन्नियमस्यापि व्यभिचारो दृश्यते तदा तत्र तादृशप्रयोगो लाक्षणिक एवेत्यवधेयम्। असाधुत्वज्ञानेन शाब्दबोधविघटनाद्रसानुत्पत्तिरेवात्र दूषकताबीजं पाठं परिष्करोति तस्मादिति। अप्रयुक्तत्वाद्व अप्रयुक्तमिति। तादृशरूपतया अर्थप्रत्यायकत्वेन कोषे आम्नातं कथितमपीत्यर्थः। कविभिरेव तद्रूपेण नादृतं न प्रयुक्तं संस्कृतवाक्यान्तरे तु प्रयुज्यत इति कविभिरित्यस्याभिप्रायः। तेन कोषे तथा आम्नातस्य न केवलं कविभिरिति बहुवचनात्तद्दोषवत् काव्यकारिणा केनापि प्रयुक्तत्वेऽपि बहुभिरप्रयुक्तमेव दोषः।

यथायमिति। विभाव्यते दृश्यते दैवत उपा० देवता अमूर्यारूपभावध्वनिकाम्य-

अत्र दैवतशब्दो दैवतानि पुंसि वा (अ० को० १व०) इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते। असमर्थं (यत्तदर्थं पठ्यते न च तत्रास्य शक्तिः) यथा,

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम्॥

अत्र हन्तीति गमनार्थम्। निहतार्थं (यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम्) यथा,

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा॥

---

मिदं कथनादेतत्त्वज्ञानाच्च तदास्वादप्रकर्षविघातो दूषकताबीजम् असमर्थमिति। यदर्थं यदर्थकतया पठ्यते गणेन च तत्र अस्य शक्तिर्गृह्यत इति शेषः। गणपाठाच्छक्त्यपलापासम्भवात् अग्रहः सहकारिविशेषाभावादिति बोध्यम्। तेन सहकारिविशेषाभावप्रयुक्तागृहीतशक्तिकत्वमसमर्थत्वं सहकारिसत्त्वे तु गृह्यत एव शक्तिरतो न गणपाठ कैवल्यं तीर्थान्तरेषु इति सत्कृतिः सत्कारः सुरस्रोतस्वतीं गङ्गां हन्ति गच्छति हन हिंसागत्योः।

अत्रेति। गमनार्थं सत् तदर्थेऽसमर्थमित्यर्थः। जङ्घापद्धतिरित्यत्रेव तत्तदुपपदप्रत्ययविशेषसहकारिणैव गमने शक्तिग्रहात् तथाच शाब्दबोधानुत्पत्त्या तादृशपुरुषभावानुत्पत्तिरत्र दूषकताबीजम्। निहतार्थमिति उभयार्थमुभयवाचकम् अप्रसिद्धे इति। तथाच पदार्थोपस्थितिदशायामविवक्षितस्य प्रसिद्धार्थस्योपस्थित्या विवक्षिताप्रसिद्धार्थोपस्थितिविलम्बनेन रसविलम्बनमस्य दूषकताबीजम्। न च कथमविवक्षितस्यार्थस्योपस्थितेः शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इत्युक्त्यविवक्षितार्थस्येव प्रकरणादिवशादुपस्थितेः सिद्धान्तितत्वात् इति वाच्यं तुल्यप्रसिद्धिकानेकार्थस्येव तथा नियमस्य तदर्थत्वात्।

यावकेति। मुग्धा सुन्दरी नायिका साध्वसतरला विलोक्य दयितेन परिचुम्बिता प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशतेऽनियमाद्विलोक्येत्यस्य कर्मत्वेऽपि साध्वसतरलेतीत्यत्र न द्वितीया तस्याः साध्वसहेतुं दर्शयति विशेषणमाह

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते। अनुचितार्थं यथा,

तपस्विभिर्या सुचिरेण लभ्यते,
प्रयत्नतः सत्रिभिरिष्यते च या।
प्रयान्ति तामाशु गतिं यशस्विनो
रणाश्वमेधे पशुतामुपागताः॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम्।

निरर्थकं (पादपूरणमात्रप्रयोजनं चादिपदं) यथा,

---

यावकेति। यावकरसः अलक्तकद्रवः तेनार्द्रेण नायिकायाः पदेन यः प्रहारस्तेन शोणिताः शोणवर्णीकृताः कचा यस्य तादृशेनेत्यर्थः। एतादृशत्वदर्शनान्मुग्धायाः साध्वसः अत्रेति उज्ज्वलीकृतः अर्थ इति। वस्तुत एवोज्ज्वलीकृतः शोणवर्णीकृतत्वरूपेण तु प्रयुक्त इति बोध्यं व्यवधीयते विलम्ब्यते।

अनुचितार्थमिति। एकार्थकेनानेकार्थकेन पदेन व्यङ्ग्योऽर्थोऽत्र प्रतिपद्यमानार्थोऽपकर्षत्वादनुचितो बोध्यः। तत्रानेकार्थपदेन तद्व्यञ्जनं वाक्यदोषे दर्शयिष्यते। एकार्थेन तदाह।

तपस्विभिरिति। ये रणाध्वरे रणरूपेऽध्वरे पशुतां बलिरूपपशुतामुपागताः पशवो भूता मृता इति यावत्। ये यशस्विनस्तां गतिमाशु प्रयान्ति या गतिस्तपस्विभिः सुचिरेण लभ्यते सत्रिभि र्याज्ञिकैः प्रयत्नतः प्राप्तुमिष्यते।

अत्रेति। पशुरूपत्वात्तद्वाचकं पशुपदं तद्धर्मं कातरत्वं प्रतिपादनीयवीरनिष्ठं व्यनक्तीति। तत्प्रकर्षविघातकार्थत्वरूपमनुचितार्थत्वं तत्प्रकर्षविघातादेव तद्विषयभावप्रकर्षविघातो दूषकताबीजम्। निरर्थकमिति। पादपूरणमत्र च्छन्दोभङ्गवारणपरं तेन पदैकदेशगतनिरर्थकोदाहरणे पूरणप्रयोजनाभावेऽप्यनुपपत्तिर्न भविष्यति मात्रपदादर्थप्रत्यायनरूपप्रयोजनव्यावृत्तिः। चादिपदमित्यत्रादिपदग्राह्यस्य हिशब्दस्यैव निरर्थकत्वमुदाहरति उत्फुल्लेति। समभिवाञ्छितं युष्मत्प्रसादेन प्रसिध्यतु इत्यन्वयः। गौरि भगवतीत्येकवचनसम्बोधनेऽपि वरप्रार्थनकाले भक्त्यतिशयप्रादुर्भावात् युष्मदिति बहुवचनसमासः। अत्र वस्तु निरर्थकपदवद्वाक्यप्रयोक्तृत्व-

उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!।
अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन॥

अत्र हिशब्दः। अवाचकं यथा,

अबन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना, न जातहार्देन न विद्विषादरः॥

अत्र जन्तुपदम् अदातर्य्यर्थे विवक्षितं, तत्र च नाभिधायकं, यथा वा,

---

ज्ञानेन तदीयवाक्याद्देवीविषयभावे प्रकर्षविघाती दूषकतावीजम्। अवाचकमिति। प्रबन्धप्रतिबद्धशक्तिभ्रमप्रयुक्तत्वमवाचकत्वं नतु शक्तिमात्रभ्रमप्रयुक्तत्वं धरणार्थे विदधदित्यस्यावाचकस्य वक्ष्यमाणत्वेन तत्र धातोः शक्तिसत्त्वेन शक्तिभ्रमाभावात्। सा तु शक्तिः व्युपसर्गेण प्रतिबद्धा तत्सत्त्वे धारणबोधजनकत्वाभावादप्रतिबद्धा शक्तिस्तु तत्र नास्त्येवेति। तत्र तद्भ्रमः असमर्थे तु हन्तीत्यस्य गमनेऽप्रतिबद्धैव शक्तिरस्ति सहकार्य्याभावादेवाबोधकत्वादिति तत्र नातिव्याप्तिः।

अबन्ध्येति। युधिष्ठिरं युद्धायोद्दे जयन्त्या द्रौपद्या उक्तिरियम्। शत्रुमित्ररूपा देहिनः अबन्ध्यकोपस्य दारिद्र्यापदां विहन्तुश्च जनस्य स्वयमेव वश्या भवन्ति। तत्र च अबन्ध्यकोपत्वे शत्रूणां दारिद्र्यापद्विहन्तृत्वे मित्राणां वश्यतेति योग्यतावशाद्बोध्यम्। एतद्द्वयाभावादेतद्द्वयस्य वश्यता न भवतीत्याह अमर्षशून्येनेति। पूर्वोक्तव्यतिरेकलाभायाप्यमर्षोऽबन्ध्यो बोध्यः तथा दारिद्र्यापदामविहन्तृत्वलाभाय जन्तुनेत्यत्रापि अदात्रेत्यर्थः। न चापदां विहन्त्रेत्यर्थ एव तदा कारणीय इति वाच्यम्। तदा वक्ष्यमाणनेयार्थलक्षणापत्तेर्वक्तुस्तथा तात्पर्य्याभावनिर्णयात्। अदातरि तु जन्तुः प्राणिन्यदातरि इति गड्डलिकाप्रवाहन्यायप्रवृत्त्या प्रामाणिककोषदर्शनाद्वक्त्रा जन्तुपदशक्तिभ्रमात्तदर्थे प्रयुक्तत्वेन अदातृत्वेनैवापदां विहन्तृत्वलाभः। विद्विषादर इत्यत्र च आदरदरपदे श्लिष्टे। तथाच अबन्ध्यामर्षशून्येन विद्विषा भवादृशेन जनस्य शत्रुजयस्य न दरो न भयम्। दरो भये दरो गर्त्ते ईषदर्थे दरोऽव्ययमिति कोषात्। तथा जन्तुना आदरः दारिद्र्यापदां विहन्त्रा जातहार्देन मित्रेण भवादृशेन जनस्य मित्रस्य नादरो वश्यताप्रयोजकादरो नास्तीत्यर्थः।

अत्रचेति। नाभिधायकं किन्तु दर्शिताप्रामाणिककोषदर्शनात्तद्भ्रमेणैव

हा धिक् ! सा किल तामसी शशिमुखी दृष्टा मया यत्र सा,
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः, कुशले सदैव विधुरो धाता, न चेत् तत्कथम्
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥

अत्र दिनमिति प्रकाशमयमित्यर्थे अवाचकं, यच्चोपसर्गसंसर्गादर्थान्तरगतं, यथा,

जङ्घाकाण्डोरुनालो नखकिरणलसत्केशरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।

---

प्रयुक्तमिति भावः । तादृशभ्रमवीजसत्त्वाच्च न लाक्षणिकमित्यपि बोध्यम् । ननु एतादृशदोषस्य कथमप्रामाण्यं प्रामाणिकभारविकविप्रयुक्तत्वेन प्रामाण्यस्यैवौचित्यादत आह यथावेति । स्वप्नदृष्टोर्वशीकस्य पुरूरवस उक्तिरियम् ।

हा खेदे धिक्‌दैवनिन्दायां यत्र मया सा शशिमुखी उर्वशी दृष्टा सा किल तामसी तमस्विनी शशिदर्शनाधिकरणकालस्य तामसीत्वनौचित्यात् । तया तद्विच्छेदरुजा तद्वि बहुव्याधिनाऽन्धकारितमिदमनुभूयमानकालस्वरूपं दग्धं पापिष्ठं दिनमन्धकारित्वविरोधिप्रकाशमयं कल्पितमतो धिगित्यर्थः । ननु विधिमाराध्यैव स्वाभीष्टसाधनं कुर्वित्यत आह किं कुर्म इति । विधुरो नाभीष्टसाधकः न चेदभीष्टसाधकश्चेत् तत्कथं तादृशयामवतीमयः शशिमुखीदर्शनाधिकरणरात्रिव्याप्तजीवकालो जीवनाखिलकालोऽधुना न भवेदित्यर्थः । तादात्म्येनात्र व्याप्तिर्बोध्या प्रकाशमयमित्यर्थ इति । प्रकाशमयत्वेनैव तामसीत्वविरोधलाभात् न तु दिनत्वेन मेघच्छन्नत्वे दिनस्यापि तमोमयत्वादिति भावः । न चात्र प्रकाशमये लक्षणैवास्तु तदतिशयश्च प्रयोजनमस्त्विति वाच्यम् । दिनस्योत्सर्गसिद्धप्रकाशकत्वदर्शनात् तद्रूपेणैव दिनपदस्य शक्तिरिति भ्रमसम्भवाद्वक्तुः शक्तिभ्रमस्यैव कल्पनात् । अत्रापरितुष्यन्न सम्भवाल्लाक्षणिकं स्थलमाह यच्चेति । अर्थान्तरगतमिति स्वीयान्तरप्रतिपादकमित्यर्थः । उपसर्गेणार्थान्तरं प्रतिबध्यार्थान्तरस्य द्योतनात् ।

जङ्घेति । भर्त्तुः महेशस्य नृत्यानुकारि ऊर्द्ध्वचरणमहेशनृत्यसदृशनृत्यकरणे भवान्या दण्डपादो दण्डाकार ऊर्द्ध्वं चोत्क्षिप्तः पादो जयति । कीदृशः भवान्या एव तनीयंत् स्वच्छं लावण्यं तदिव या वापी तत्सम्भूतस्य अम्भोजस्य शोभां विदधत् बिभ्रदित्यर्थः ।

भर्त्तुर्नृत्यानुकारे जयति निजतुलाखच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥

अत्र दधदित्यर्थे विदधदिति। विधेति व्रीड़ाजुगुप्सामङ्ग-लव्यञ्जकत्वात्, यथा,

---

वाप्या लावण्यतुल्यत्वकथनात् तत्सम्भूताम्भोजतुल्यदण्डपादसम्बन्धिलावण्यस्यापि अम्भोजाकरत्वलाभः। न तु लावण्यमेव वापीति रूपकं तत्सम्भूताम्भोजाप्रसिद्धेः। नाप्यभूतोपमा सम्भावनया उपमानप्रसिद्धिमत्त्व एव तथात्वात् यथा सर्वपद्मप्रभासारः समाहृत इव क्वचित्। तदाननं विभातीति तामभूतोपमां विदुरिति दण्डिनि। अत्र हि विधिनिर्मितस्य प्रत्येकसर्वपद्मप्रभासारस्य विधिनैव क्वचिदेकत्र समाहारः सम्भाव्यत एवेति भवति तस्योपमानता यथाच। विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपप्रभवा नतेव इत्यादौ अत्रापि हि वटविटपे लतादर्शनात् विटपत्वेन प्रवाल विटपेऽपि लता सम्भाव्यत एव। यदि तु सम्भावनयापि नोपमानप्रसिद्धिः तदा उपमानाप्रसिद्धि दोष एव। अतएव जाज्वल्यमाना इव वारिधारा दिनार्द्धभाजः परि-वेशिनोऽर्कात् इत्यत्रार्कान्निष्पतन्ती जाज्वलमाना वारिधारा अप्रसिद्धा इत्युपमाना-प्रसिद्धिर्दोषो ग्रन्थकृतैवाग्रे दर्शयिष्यते। दण्डपादस्याम्भोजतुल्यत्वसाधकानि विशेषणा-न्याह जङ्घेति। जङ्घा काण्डमुरुनालमिव बृहन्नालमिव यत्रेति पुरुषव्याघ्रादिसमासः। न तु जङ्घाकाण्डमेव उरुनालं यत्रेति रूपकम् पद्मतुल्येऽपश्चि दण्डपादे नालबाधात् एव विशेषणान्तरेऽपि न रूपकम्। नखकिरणा लसत्केशराणीव तैः करालो व्याप्तः प्रत्यग्रं तत्कालदत्तं यदलक्तकं तदाभाप्रसरः प्रसृता तदाभा किशलयानीव यत्र मञ्जु मञ्जीरं भृङ्गा इव यत्रेति सर्वत्रोपमासमासः। अभिनवः तादृशविशेषणवैशिष्ट्येनाभिनव इत्यर्थः।

अत्रेति। न च विधानार्थकत्वमेवात्र न कृत इति वाच्यम्। स्वस्मिन्नित्युक्त-त्वेन तथात्वेन तथार्थे तात्पर्य्याभावनिर्णयात् नापि धरणे लक्षणा व्युपसर्गस्य विधान-रूपधात्वर्थद्योतकस्य सत्त्वे धरणार्थस्य शक्त्या लक्षणया वा उपस्थितिप्रतिबन्धात् अवाचकेति भ्रान्तवक्तृत्वज्ञानात्तदाकाङ्क्षादिष्वप्रकर्षबोध विघाती दूषकतावीजं न तु वाक्यार्थबोधाद्रसाद्यनुदयः वक्तृभ्रमज्ञानदशायां तद्विषयतया तदर्थोपस्थितौ वाक्यार्थज्ञानोदयात् अतएवावाचकपदार्थस्यापि अवाचकपदान्तरार्थेनान्वयव्युत्पत्तेः

साधनं सुमहद् यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ [१]

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्त्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ॥ [२]

मृदुपवनविभिन्नो मत्प्रियाया विनाशात्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।

---

अस्य वाक्यदोषतापि वक्ष्यते । त्रिधेतीति । व्यञ्जकत्वादित्यत्र प्रकाशकत्वादित्यर्थः । प्रकाशश्च ज्ञापनमुत्पादानञ्च तत्र व्रीड़ाजुगुप्सयोः उत्पादनम् अमङ्गलस्य तु ज्ञापनमिति बोध्यम् ।

साधनमिति । साधनं सेना धीशालिन इत्यनेन नीतिमत्तापि दर्शिता अतः शत्रु चासकत्वोपपत्तिः अरालितां कोपकुटिलां कः सहेत कः कोपनिर्भयः स्यादित्यर्थः । अत्र साधनशब्दः स्वद्वितीयार्थं लिङ्गं व्यञ्जयन् श्रोतुः व्रीड़ां जनयति व्रीड़ाजनकपदप्रयोक्तृत्वज्ञानञ्च राजविषयभावप्रकर्षविघाती दूषकताबीजम् । अथवाश्लीलद्वयेऽपीदृशं बीजमवधेयम् । जुगुप्साश्लीलमुदाहरति ।

लीलेति । अन्यवनितया निःशङ्कं दष्टाधरः कश्चिदर्थान्नायिकयैव लीलापद्मेनाहतः सन् न तथाभूतोऽपि केशरदूषितेक्षण इव नेत्रे व्यामील्य स्थितः । ततश्च नायिका मुग्धा दूषितेक्षणत्वमोहवती तस्य अर्थान्नेत्रयोः कुड्मलिताननेन वायुं ददती स्थिता । सा च तेन नायकेन अनिशं चिरं चुम्बिता कोपवती कथं चुम्बितेत्यत आह भ्रान्तेति । कोपापगमभ्रान्त्या सापराधामिमामिदानीं चुम्बामीति धूर्त्ततया वेत्यर्थः । वायुशब्दस्यापानवायौ प्रसिद्धत्वादत्र कुड्मलिताननेन विशिष्टा अपानवायुं ददतीति व्यञ्जनात्तत्र जुगुप्सा श्रोतुर्जायते । अमङ्गलाश्लीलमुदाहरति मृदुपवनेति । उर्वशीविरहिणः पुरूरवसो मयूरकलापं दृष्ट्वा उक्तिरियम् ।

मृदुपवनविभिन्न एष बर्हो मयूरपुच्छो मत्प्रियाया उर्वश्या विनाशाददर्शनान्निःसपत्नो निष्प्रतिद्वन्द्वी जातः । कीदृशः घनवत् मेघवत् रुचिरः कलापः पक्षसमूहो

रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे किं हरेदेष बर्हः॥ [२]

एषु साधनवायुविनाशशब्दा व्रीड़ादिव्यञ्जकाः।

सन्दिग्धं यथा,

आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु॥

अत्र वन्द्यां किं हठहृतमहिलायां, किं वा नमस्यायामिति सन्देहः। (अप्रतीतं यत्केवले शास्त्रे प्रसिद्धं) यथा,

सम्यक्ज्ञानमहाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतन्न भवेत्कर्म बन्धनम्॥

---

थत्र घनोऽत्र विद्युद्विशिष्टो बोध्यः। कलापस्य चन्द्रवत्त्वात् निविड़रुचिरेति वार्थः। त्वत्प्रियासत्त्वे किं स्यादिति अत्राह तत्सत्त्वे तस्याः केशपाशे सति एष बर्हः कां हरेत् कामाकर्षेत्। बर्हसादृश्यघटकं विशेषणमाह रतीति। अनेन विस्तीर्णत्वं कुसुमेत्यनेन चन्द्रकविशिष्टप्रतिद्वन्द्विता। अत्र विनाशशब्दः स्वद्वितीयार्थं मरणं व्यञ्जयन् प्रतिपाद्यस्यामङ्गलं व्यनक्ति। स्त्रीकचयोऽश्लीलत्रयं दर्शयति एष्विति। सन्दिग्धमिति श्लेषत्वेन पदद्वयैकरूप्यादन्वयप्रतियोगिसन्देहजनकसन्देहविषयपदत्वं तत्त्वम्।

आलिङ्गित इति। तत्रभवान् पूज्यस्त्वं सम्पराये युद्धे जयश्रिया आलिङ्गितः सन् आशीःपरम्परां कर्णे कृत्वा कृपां कुर्वित्यर्थः। अत्र कुतः कृपां कीदृशीं वा आशीःपरम्परामित्युभयत्रैवाकाङ्क्षा तत्र वन्द्यामिति पदं वन्द्यां हठहृतमहिलायामित्यर्थः वा, वन्दनीयामाशीःपरम्परामित्यर्थकं वेति सन्देहस्य जनको वन्दीवन्द्यापदद्वयसन्देह इत्यर्थः। अप्रतीतमिति शास्त्रे शास्त्रविषये प्रसिद्धं विवक्षितार्थकतया केवलपदाच्छास्त्रान्तरलोकयोः व्यावृत्तिः।

सम्यग्ज्ञानेति। सम्यग्ज्ञानं तत्त्वज्ञानं तदेवान्तस्तमोनाशकत्वान्महाज्योतिः तेन दलितो नाशित आशयो मिथ्यावासना यस्य तथात्वजुषः पुरुषस्य विधीयमानमप्येतद्विहितनिषिद्धरूपं कर्म न बन्धनं न मुक्तिप्रतिबन्धकं भवेदित्यर्थः।

अत्राशयशब्दो वासनापर्य्यायो योगशास्त्रादाविव प्रयुक्तः। ग्राम्यं (यत्केवले लोके स्थितं) यथा,

राकाविभावरीकान्तसङ्क्रान्तद्युति ते मुखम्।
तपनीयशिलाशोभा कटिश्च हरते मनः॥

अत्र कटिरिति। नेयार्थं "निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैव त्वशक्तितः" इति यन्निषिद्धं लाक्षणिकं यथा;

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम्।
करोति ते मुखं तन्वि! चपेटापातनातिथिम्॥

---

अत्रेति। तथाच सर्वेषां वाक्यार्थाबोधात् तेषां तादृशपुरुषे भावानुत्पत्तिरेव दूषकतावीजम्। ग्राम्यमिति लोके अविदग्धलोके स्थितं प्रसिद्धं काव्यकविसाधारणम्। विदग्धलोकेषु तादृशपदं न प्रयुज्यते अवैदग्धीव्यञ्जकत्वादिति भावः। एवञ्चाप्रयुक्ताद्भेदः अकाव्ये विदग्धेनापि तस्य प्रयुज्यमानत्वादुक्तरवैदग्ध्याव्यञ्जकत्वाच्च।

राकेति। राका पूर्णिमा तत्सम्बन्धिनी विभावरी कान्ताच्चन्द्रात् संक्रान्ता प्रविष्टा द्युतिर्यत्र तादृशं ते तव मुखपद्मं शिलाकारसुवर्णशोभा तव कटिर्नितम्बश्च मनो हरते तपनीयं हेम।

अत्रेति। एवञ्च ग्राम्यवक्तृत्वज्ञानादत्र रसप्रकर्षबोधविघाती दूषकतावीजम्। नेयार्थमिति यन्निषिद्धमिति। निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तित इति प्राचीनैरुक्तम्। अस्यार्थः काश्चिल्लक्षणा निरूढाः प्रसिद्धाः। सायं बोधकतारूपात्सामर्थ्यादभिधातुल्याः। काश्चिच्च साम्प्रतं क्रियन्ते सम्बन्धप्रयोजनोपस्थितिवशादिति शेषः। काश्चित्तु सम्बन्धप्रयोजनरूढ्यभावेऽपि वक्त्रा स्वाशक्तितो नैव क्रियन्ते इत्यर्थः। एवञ्च उक्तलक्षणाहेतुभूतमुख्यार्थबाधस्य रूढिप्रयोजनैकतरस्य मुख्यार्थसम्बन्धस्य चोपस्थितिषु एकस्याप्यभावे या लक्षणा तद्विशिष्टं पदं नेयार्थमित्यर्थः।

शरत्कालेति। हे तन्वि! ते तव मुखं कर्तृ शरत्काले समुल्लासिनं पूर्णिमासम्बन्धिनं शर्वरीप्रियं चन्द्रं कर्मभूतं चपेटापातनस्य करतालीपातनस्य प्रहारविशेषरूपस्यातिथिं विषयं करोतीत्यर्थः। स च बाधितः मुखस्य करतलाभावात् ततश्चपेटपदे

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ॥ अथ समासगतमेव दुष्टमिति सम्बन्धः, अन्यत् केवलं, समासगतञ्च ॥

क्लिष्टं (यत्र अर्थप्रतिपत्ति र्व्यवहिता) यथा,

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल ! तव चेष्टितम् ॥

---

निर्जितत्वलक्षणायां निर्जितत्वापातनस्य निर्जितत्वापतनस्यातिथिं करोतीत्यर्थः । इत्याहावेति । अत्र निर्जितत्वलक्षणा: रूढ़िःप्रयोजनशून्येति नेयार्थेति चक्रवर्त्ती । तन्न । निर्जितत्वातिशयस्यैव प्रयोजनस्य सत्त्वात् । वस्तुतस्तु मुखजन्यं निर्जितत्वं शोभाकरणकं तादृशस्य निर्जितत्वस्य मुख्यार्थस्य लक्ष्यार्थे सम्बन्धाजन्यत्वं तचाच बाधितं मुख्यार्थकरतलकरणकत्वाभावात् मुख्यार्थयोगोपस्थितिलक्षणा हेत्वभावादशक्तितः प्रयोज्येयं लक्षणा नेयार्थेति । तदयुक्तं चपेटपदं नेयार्थम् । अत्राप्यशक्तवक्तृकत्वज्ञानाद्रसप्रकर्षबोधविघाती दूषकतावीजम् । अथ समासेति । क्लिष्टादित्रयं समासगतमेव सत् पदं दुष्टं नासमासगतं सत् किन्तु तदा वाक्यमेव ।

क्लिष्टत्वादिदोषत्रयवदित्यर्थः । तद्बीजन्तु प्रागेव दर्शितम् अन्यदोषविशिष्टन्तु असमासगतमपि पदं दुष्टमित्याह अन्यदिति । यतोऽर्थप्रतिपत्तिरिति व्यवधानं द्विधा भवति अनुक्तस्यान्वयप्रतियोगिन उक्तपदार्थान्विततदन्वितविशेष्यमहिम्ना विलम्बेनोपस्थितिरेका । तत्र च समाससम्भवात् पददोषता अन्वयप्रतियोगिनोरनासत्तिकृता अन्या तत्र च समासासम्भवाद्वाक्यदोषत्वमुदाहरिष्यति तत्राद्यस्य पददोषत्वमुदाहरति ।

अत्रीति । हे भूपाल ! तव चेष्टितं वैशद्येन कुमुदैः सदृशमत्यर्थं शोभत इत्यर्थः । अत्र कुमुदं न स्वप्रतिपाद्यं किन्तु अत्रीत्याद्यन्विताखयेनैवोपतिष्ठत इति विलम्ब इत्याह । अत्रेति । न चात्र तथाभूतां दृष्ट्वेत्यादौ वल्कलधरैरित्येतन्नभ्यस्यास्माभिरित्यस्यैव वक्ष्यमाणन्यूनपदत्वदोषाभेद इति वाच्यम् । अविलम्बे न्यूनपदता अन्वितान्वयवशाद्विलम्बे क्लिष्टतेति भेदात् क्लिष्टत्वं न्यूनपदत्वञ्च द्वयमपि अन्वयप्रतियोगिनोऽनुक्तस्यान्वतोऽनुपस्थितावेवं बोध्यम् । अन्यत्र उपस्थितौ तु न दोषः । यथा अयमुदयति मुद्राभञ्जनः पद्मिनीनामित्यत्र अत्र हि उदयमहिम्नाऽयमिति निर्देशेन च सूर्य्यलाभः । यथा वा अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौरित्यत्र अत्रापि

अत्र अत्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः।

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत्, यथा,

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणाम्
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत्प्रयासः॥

---

द्युक्तविशिष्टज्योतिष्मत्त्वादेव चन्द्रलाभः। ज्योतिरन्तरस्य उक्तपदार्थानन्वयित्वात्। अविमृष्टविधेयांशमाह।

अविमृष्ट इति। प्राधान्यं विधेयताप्रत्ययौपयिकः समभिव्याहारस्तल्लङ्घनेन निर्दिष्ट इत्यर्थः। तदिति। तादृशं समासगतं पदमित्यर्थः। स च समभिव्याहारः समाससमावगतत्वेन विधेयनिर्देशरूप एवेति चक्रवर्त्तिप्रभृतयः। तन्न समासगतमेवेत्युक्तौ च तत्प्राप्तौ प्राधान्येनेत्यस्य व्यावर्त्तनीयाभावात्। तेषां मते समासगतत्वे प्राधान्यस्यैवाभावात्। तथा च निर्मृष्टरागोऽधर इत्यत्र रागे विधेयस्य निर्मृष्टत्वस्य वपुर्विरूपाक्षमित्यत्राक्षिविधेयस्य वैरूप्यस्य चाविमृष्टतापत्तेः। ततश्च वपुर्विरूपाक्षमित्यत्र तादृशं पदमुपेक्ष्य अलक्ष्यजन्मतेत्यत्रैवैतद्दोषस्य प्रदर्शयिष्यमाणत्वमुपपन्नं न स्यात्। ईदृशस्थले विधेयताप्रतीतेरनुभविकत्वा अपलापापत्तेश्च न हि निर्मृष्टत्ववैरूप्ययोः विधेयत्वं नानुभूयते तस्माद्यत्र बहुव्रीहौ विधेयस्य प्राङ्निर्देशः तत्र विधेयत्वं प्रतीयते एव तादृशबहुव्रीहौ तु प्राधान्येनैव निर्देशो बोध्यः। एवं कर्मधारयविशेषोऽपि व्यावर्त्तनीयस्तच्चाग्रे दर्शयिष्यते।

मूर्ध्नामिति। रामसैन्यवेष्टितनगरीकस्य रावणस्य विषादोक्तिरियम्। उक्तविशेषणानां मम मूर्ध्नां दोष्णाञ्च किमेतत्फलं यदिह लङ्कायां स्वपुरात्मकनगरीरक्षणेऽपि प्रयासः। हेलया त्रैलोक्यरक्षणस्यापि तत्फलत्वेन प्राग्दृष्टत्वादिति विषादः। मूर्ध्नामुत्कर्षकविशेषणमाह उद्वृत्तेति। नव नव गलच्छेदे एकैकै गला उद्वृत्ताः पुनः कृत्ताश्चेत्येवं रीत्या सर्व एव उद्वृत्ताः पुनः कृत्ताश्च येऽविरला गलास्तेभ्यो गलन्त्यो या रक्तानां संसक्ता निविड़ा धारास्ताभिर्धौतौ यौ ईशाङ्घ्री तत्प्रसादेन उपनतौ जयौ यत्र तादृशे जगति जातो मिथ्यामहिमा येषां तथा दोष्णामुत्कर्षकविशेषणमाह

अत्र मिथ्यामहिमत्वं नानुवाद्यम्, अपि तु विधेयम्। यथा वा,

स्रस्तां नितम्बादवरोधयन्ती पुनः पुनः केशरपुष्पकाञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य॥

अत्र द्वितीयत्वमात्रमुत्प्रेक्षितं, मौर्वीं द्वितीयामिति युक्तः पाठः। यथा वा,

---

कैलासेति। कैलासस्य उल्लासने उत्थापने य इच्छासमूहस्तत्पिशुनस्तत्सूचको य उत्सर्पी दर्पस्तेनोद्धुराणामुद्भटानाम्।

अत्र मिथ्यामहिम्नः पूर्वं जातत्वस्य बहुव्रीहावुपात्तत्वाज्जातत्वं विधेयं मिथ्या महिमा चानुवाद्यः प्रतीयते तच्चेह न विवक्षितं महिम्नो जातत्वस्य सिद्धत्वेन जाते महिम्नि मिथ्यात्वस्य विधेयत्वे न च मिथ्यामहिम्नि जातत्वविध्यसम्भवादित्याह मिथ्यामहिमत्वमिति। नानुवाद्यं नानुवाद्यतावच्छेदकं मिथ्यामहिम्न एवानुवाद्यत्वमित्यर्थः। तत्त्वेवानुवाद्यताप्रतीतेः किन्तु विधेयमित्यत्र मिथ्यामहिमत्वं न विशेष्यं किन्तु जातमहिम्नि मिथ्यात्वमेव विधेयं बोध्यम्। मिथ्यामहिमत्वस्य विधेयत्वस्याभावात् महिम्नि मिथ्यात्वस्यैवेदानीं जायमानत्वेनाप्राप्ततया विधेयत्वात्। एवञ्च मिथ्याजातमहिम्नामिति निर्देशे प्रतीयत एव विधेयता। बहुव्रीहौ पूर्वपदार्थत्वान्मिथ्यात्वस्य वपुर्विरूपाक्षमितिवत्। चक्रवर्त्तिप्रभृतयस्तु समासमात्र एव विधेयप्रवेशे विधेयाविमर्शादेव जातत्वस्य विधेयताप्रतीत्या मिथ्यामहिमत्वमित्यादिकमुक्तमिति न व्याचक्षते। किन्तु अत्र मिथ्यामहिमत्वं नानुवाद्यं येन विधेयान्तरं तत्रासमासगतं प्रतीयेत अपि तु तदेकदेशे महिम्नि तदेकदेशी मिथ्यात्वमेव विधेयमिति व्याचक्षते। तच्च बहुव्रीहौ प्राङ्निर्दिष्टपदस्य विधेयताप्रतीतेः आनुभविकत्वेन दूषितमेव।

कर्मधारयसमासेऽप्याह स्रस्तामिति। अत्र श्लोकान्तरोपात्ता पार्वती विशेष्या महेशाश्रमेऽकालवसन्तागमे पार्वतीक्रियावर्णनमिदम्। अवरोधयन्ती यथास्थानं स्थापयन्ती भावविशेषसूचकमिदम्। न्यासीकृतां निक्षेपीकृतां स्थानविदेति जगज्जयीकर्तृं मौर्वीनिक्षेपस्थानं जगज्जयीकर्त्री पार्वत्येवेति जानतेत्यर्थः।

अत्रेति। उत्प्रेक्ष्यं विधेयतयाऽसमासेनोत्प्रेक्ष्यमित्यर्थः। मात्रपदात् समासे

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि ! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥

अत्रालक्षिता जनिरिति वाच्यम् । यथा वा,

---

विशिष्टोत्प्रेक्षताव्यावृत्तिः तथात्वे द्वितीयत्वस्य कर्मधारयसमासान्तर्गतस्य विधेयतानवगमादिति भावः ।

अथ पुष्पकाञ्च्या विशिष्टाया द्वितीयमौर्व्या एवाभेदेन विधेयाया उत्प्रेक्षेयमस्तु कथं द्वितीयत्वमात्रमत्रोत्प्रेक्षायां विधेयमिति चेन्न । पुष्पधनुषः कामस्य पुष्पदाम्नि मौर्वीत्वस्य प्राप्तत्वेन तत्र स्वयं व्यापारणीयमौर्व्यपेक्षया द्वितीयत्वमात्रस्यैव विधेयत्वात् यथा वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापरामित्यत्र इन्दुमत्या हस्तगामित्वस्य प्राप्तत्वेनापरात्वमात्रविधिरिति । अथैव पुष्पकाञ्चीरूपायां मौर्व्यां न्यासीकृतत्वोत्प्रेक्षैवास्तु इति चेन्न तदा मौर्व्यनुवादेनैव तदुपपत्तौ द्वितीयत्वानुवादे वैफल्यात् द्वितीयत्वस्यापि तत्र विधित्वे तु स एवाविमर्शः स्यात् ।

अथ द्वितीयमौर्वीतुल्येत्युपमा स्यादिति चेत्तदा न्यासीकृतत्वस्याक्षीयायां कलत्रासनन्वयः स्यात् अन्यत्र न्यासीकृतां द्वितीयमौर्वीमित्यन्वये तु द्वितीयत्वेन मौर्व्यां विशेषणालाभात्तद्वैयर्थ्यमिति । बहुव्रीहिसमासेऽपि पुनरुत्तरपदार्थप्रधानतत्पुरुषयोग्यवाक्यस्थप्रकृत्यर्थस्य तद्धितभावप्रत्ययार्थविशेषणत्वे गुणीभावो भवत्येवेत्याह ।

वपुरित्यादि । तपस्यन्त्यां पार्वत्यां जटिलवटुवेशस्य महेशस्य उक्तिरियम् । वरेषु तावद्रूपकुलधनानि मृग्यन्ते हे बालमृगाक्षि ! वरेषु यत्तादृशं समस्तं मृग्यते तत्समस्तं नास्तु किं व्यस्तमप्यस्ति अपि तु नैवेत्यर्थः । एकैकतवितथाभावमाह वपुरित्यादि । अनेन वैरूप्यं बालमृगाक्षीत्यनेन रूपवत्यास्तव विरूपः पतिः सर्वथैवानुचित इत्युक्तं शिशुपशुदृष्टेस्तव भद्राभद्रदर्शनं नास्तीत्यपि सूचितं त्रिलोचन इति वैरूप्यदर्शकम् ।

अलक्ष्येति । जन्मस्थाने परिचय एव कुलचिन्ता अलक्ष्यमपरिचेयं जन्म यस्य तस्य भावोऽलक्ष्यजन्मताऽलक्ष्यं जन्मेत्यर्थः । अत जन्मनोऽलक्ष्यत्वं विधेयं तच्चालक्ष्यजन्मपर्यन्तं बहुव्रीहिणा पूर्वनिर्दिष्टत्वेन विधियतयैव प्रत्येतुं योग्यमपि पुनरुत्तरपदार्थप्रधानतत्पुरुषयोग्यवाक्यस्थप्रकृत्यर्थतावच्छेदकरूपं सत् उत्तरपदार्थीभूतस्य

आनन्दसिन्धुरतिचापलशालिचित्त-
सन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता, तदुदन्तचिन्ता
तान्तिं तनोति तव सम्प्रति, धिग्धिगस्मान् ॥

अत्र न मुक्तेति निषेधो विधेयः, यथा,

नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः,
सुरधनुरिदं दूराकृष्टं, न तस्य शरासनम् ।
अयमपि पटुर्धारासारः, न बाणपरम्परा,
कनकनिकषस्निग्धा विद्युत्, प्रिया न ममोर्वशी ॥

---

भावप्रत्ययार्थस्य विशेषणतया गुणीभूतत्वादविमृष्टं न तु बहुव्रीहिपतितत्वात् यदि तु बहुव्रीहौ प्राङ्निर्दिष्टस्यापि गुणीभावः स्यात्तदा वपु विरूपाक्षमित्यत्रैव तत्सौलभ्यं तदुपेक्षा न क्रियेत न क्रियेत च जनैरलक्ष्यतेत्येवं पाठरचनासम्भवेऽपि भावप्रत्ययार्थविशेषणीभावपरिहारप्रयासः । बहुव्रीहौ प्राङ्निर्दिष्टस्यागुणीभावेऽपि को वह्निमान् दृष्ट इति प्रश्नस्य पर्वतो दृष्टवह्निरित्युत्तरे दत्ते निराबाधा प्रतीतिरेव प्रमाणं निपुणैरनुसन्धेयम् । नञर्थस्य विधेयत्वे तस्याप्युत्तरपदार्थप्रधाने तत्पुरुषे गुणीभाव एव स्यादित्याह ।

यथा चेति । अप्राप्तसीतावार्त्ताकं रामं प्रति लक्ष्मणस्य वाक्यमिदम् । या सीता भवता क्षणमप्यमुक्ता न त्यक्ता तदुदन्तचिन्ता तस्या वार्त्ताचिन्ता तव तान्तिं क्लान्तिं सम्प्रति तनोति अतस्तत्प्रतीकाराक्षमान् अस्मान् धिग्धिगित्यर्थः ।

कीदृशी आनन्दस्य तवानन्दस्य सिन्धुः महानाश्रयः जनकत्वमेवावाश्रयता बोध्या अतिचापलशालिनस्तव चित्तस्य सन्दानने निगडने एकसदनम् अद्वितीयं कारागृहमित्यर्थः ।

अत्रेति । विधेयो विधेयता प्रतीतियोग्यसमभिव्याहारेण निर्देश्यः । तादृशनिर्देशः कुत्र दृष्ट इत्यत्राह यथेति । उर्वशीविरहिणा पुरूरवसा मेघे सधनुष्के वर्षति तड़िद्वति च दृष्टे क्रियमाणोर्वशीकराक्षसभ्रमानन्तरं विशेषदर्शने सति तस्योक्तिरियम् । स्पष्टोऽर्थः । अत्र नञोऽसमस्तत्वादगुणीभावः । ननु अमुक्ता-

त्यत्र नत्वसुक्ततानुवादेनान्यदत्र किञ्चिद्विहितं, यथा
गोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
गृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥
यत्र अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादि । विरुद्ध-
द्यथा,
धाकरकराकारविशारदविचेष्टितः ।
कार्य्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥
त्र कार्य्यं विना मित्रमिति विवक्षितम्, अकार्य्येषु मित्र-
प्रतीतिः । यथा वा,

---

ान्यदेव विधेयं तथाच नात्र नञर्थस्य विधेयत्वात् गुणीभाव इत्यत्राह
असुक्ततेति । असुक्ततयाऽसुक्तानुवादेनेत्यर्थः । नञर्थप्रतियोगिनोऽनुवादे
तरं क्व दृष्टमित्यत्राह यथेति । असक्तोऽनासक्तः अत्रस्तत्वादीति अत्रस्तत्वा-
त्रस्ताद्यनुवादेनेत्यर्थः । आत्मगोपनादिति विहितमित्यनुषङ्गः । विरुद्धेति
त्वं प्रतिपाद्यस्यापकर्षबोधकार्थकत्वं पदार्थस्यातथात्वेऽपि पदद्वयसमभि-
वशात्तथा व्यञ्जकत्वं तत्तादृशपदद्वयस्य च समासगतत्वेनैकपदत्वप्राप्त्या पद-
असमस्तत्वे तु वाक्यदोषत्वेनोदाहरिष्यते अनुचितार्थे तु पदान्तरसमभि-
विनापि पदेनैव तादृशार्थव्यञ्जनेति भेदः ।
ाकरेति । आकारपदमत्र सदृशार्थकं विशारदं निर्मलम् । अत्रेति पदा-
दत्याभावेऽपि कार्य्यपदनञ्पदयोः समभिव्याहारादत्र विरुद्धमतिः। प्रपञ्च-
यावेति । प्रवासागतस्य पत्युः सहसा प्रियाकण्ठधारणवर्णनमिदम् ।
नेति । अविरुद्धार्थयोर्गलग्रहपदयोः समभिव्याहारवशादत्र रोगविन्यासव्यञ्ज-
तिपाद्यस्यापकर्षः । नात्रस्तमिति श्रीरामसमाक्षिपतः परशुरामस्योक्तिरियम् ।
रुजता भञ्जता तेन रामेण देवाङ्गवानीपते नं त्रस्तं तद्यदि नाम तत्सम्भाव्यत
। यदिनाम शब्दः सम्भावनायाम् । कुत एतत् सम्भाव्यत इत्यत्राह भूतकरुणेति।
प्राणिनस्तेषु कारुण्यात्तस्य तदपराधक्षमासम्भवात् इति भावः । तत्पुनस्तु
कथं विस्मृतः । अविस्मरणे हेतुः मदान्धेति । तथाच धनुर्भङ्गोऽपि मदान्धकृते

चिरकालपरिप्राप्तिलोचनानन्ददायिनः।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम्॥

अत्र कण्ठग्रहमिति वाच्यम्। यथा वा,

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः
तेन व्यारुजता धनुर्भगवतो देवात् भवानीपतेः।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः, स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति। यथा वा,

---

एवेति। तत्कर्त्ता रामस्तद्वध्य एवेति। कथं विस्मरणं जिजीविषोः तथा प्रियः शिष्योऽयमथवा कथं विस्मृतिः स्कन्द इवेति प्रियत्वे च मदान्धघातित्वे च। दृष्टान्तः।

अत्रेति। पत्यन्तराप्रसिद्धावपि महेश एव जारत्वं प्रत्याययतीत्यर्थः। अतएव प्रतिपादनीयस्य महेशस्यैवापकर्षव्यञ्जकता भवानी तु न प्रतिपादनीयेति। तदपकर्षबोधकतया न अत्र लक्षणसङ्गतिः। पत्यन्तरप्रतीतिस्तु भवस्य पत्नी भवानीति योगार्थेन पार्वत्यां भवपत्नीत्वग्रहदशायां तुल्यवित्तिवेद्यभावेऽपि तत्पतित्वं ततश्च पतिशब्दोपादाने चैत्रस्य भार्य्यायाः पतिरित्युक्ताविव पतिशब्दाज्जारत्वप्रतीतेः अत्र प्रत्येकपदार्थोऽविरुद्धः पदद्वयात्तु उक्तविरुद्धप्रतीतिः।

गौरपीति। यस्य अम्बिकारमणस्य वाहनतां प्राप्तवती गौरपि सविधे निकटे सोऽपि मृगेन्द्रत्वेन प्रसिद्धोऽपि गिरिसुतासिंहो निरहङ्कारः सोऽम्बिकारमणो वः पायादित्यन्वयः।

अत्रेति। विरुद्धां विरुद्धविषयां मातृरमणकर्त्तृत्वाच्च विरुद्धम्। नानार्थस्याम्बिकाशब्दस्य मातृरूपद्वितीयार्थव्यञ्जकतया रमणपदार्थान्वयवशात् तल्लाभात् न च तादृशार्थे तात्पर्य्याभावात् कथं तद्व्यञ्जनेति वाच्यम्। रमणशब्दसान्निध्यरूपसमभिव्याहारविशेषस्य वैदग्ध्यसामर्थ्यस्यानुभवबलेन कल्पनीयत्वात् कथमन्यथा रक्तवस्त्वं सुरभिमांसं भुङ्क्ष्वेति। शिष्टैरुक्तोऽप्यर्थे जुगुप्सा। चक्रवर्त्ती तु शक्तित्वाल्लौक-

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति । श्रुतिकटु समासगतं यथा,

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥

एवमन्यदपि ज्ञेयम् ।

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**

---

मातृत्वादम्बिकात्वं तद्विशिष्य सेति नरसिंहपुराणात् । पार्वतीप्रतीतिरपि मातृत्वेनैव रूपेण इति रमणपदार्थस्य तत्रान्वयान्मातृरमणकारित्वरूपविरुद्धप्रतीतिरिति व्याचष्टे तन्न । पुराणस्य शक्तिग्राहकत्वाभावात् तादृशविरुद्धार्थस्य शक्तिगम्यत्वे विरुद्धार्थव्यञ्जकत्वाभावाच्च । क्लिष्टादित्रयस्य पददोषत्वे समासगतत्वनियमः अन्येषान्त्वसमासे समासे च पददोषत्वादसमासे उदाहृत्य समासे उदाहरति श्रुतिकट्विति सा चेति । सुधासान्द्रं सुधाव्याप्तं तरङ्गितं तरङ्गवत् चञ्चलं विलोचनं यस्या इति विग्रहः । बर्हि निर्ह्रादनं मयूरशब्दजननं तदर्हः कालो वर्षाः । न च कात्तार्थ्यमित्यपि कृतार्थस्य भाव इत्यर्थकतद्धितसमासस्थमित्यविशेष इति वाच्यम् । तद्धिता युक्तार्थतामात्वं न समास इत्यभिप्रायात् । न च तथापि कृतार्थपदसमासवशात् तथात्वमेवेति वाच्यम् । कृतार्थपदस्थैकवर्णकठोरदोषत्वात् अतएव परुषवर्णरूपमिति । बाहुल्यार्थकं रूपपदं श्रुतिकटुलक्षणे दत्तम् । एवमन्यदपीति । शीभन्मुखी दैवतोऽयं हततीर्थचमातल इत्यादिरीत्या बोध्यम् ।

अपास्येति । ननु वक्ष्यमाणोदाहरणेषु एकस्य श्रुतिकट्वादेर्दोषस्य एकवाक्यस्थानेकपदालम्बित्व एव वाक्यदोषत्वमभिप्रेतं न तु तत्र पदान्तरार्थान्वयवशादेव दोषतया वाक्यदोषत्वमभिप्रेतं येन पदार्थान्वयनिरपेक्षणैव च्युतसंस्कृत्यादीनामवाक्यदोषोक्तिरुपपद्यते वाक्यगताप्रयुक्तत्वदोषोदाहरणे । स रातु वो दुश्च्यवन इत्यादौ पदान्तरार्थान्वयनिरपेक्षाणामेव तत्तत्पदानामप्रयुक्तत्वसम्भवात् । तथाच गच्छमानः पश्यते च पन्थानञ्च हि पुरुषः । हततीर्थान्तरो हन्ति गङ्गां सम्प्रति सादरमित्यादावेकवाक्य-

वाक्येऽपि दोषाः सन्त्येते, पदस्यांशेऽपि केचन ॥४॥

केचन, न पुनः सर्वे। क्रमेणोदाहरणम्,

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत्सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ [श्रुति०]

---

गतानेकपदालम्बिनां च्युतसंस्कृत्यादीनां कथमवाक्यदोषतेति चेन्न। च्युतसंस्कृति-पदस्यासाधुत्वेन असमर्थनिरर्थकयोरनुपस्थापकत्वेन शाब्दबोधसामग्रीरहितत्वा-दन्वयबोधाजनकत्वेन तद्घटितपदसमूहस्यावाक्यत्वात् अन्यथा घटकर्मत्वमानयन-मित्यादेरपि वाक्यत्वापत्तेः। साधुत्वज्ञानस्यासाधुत्वज्ञानाभावस्य वा पदार्थोपस्थितेश्च शाब्दबोधजनकत्वात्। न चैवमवाचकस्यापि पदार्थानुपस्थापकत्वात्तद्घटितपदसमूह-स्याप्यवाक्यत्वेन तस्यापि वाक्यदोषत्वबहिर्भाव उचित इति वाच्यम्। तदर्थे वक्तु-र्भ्रमदशायां तदर्थे वक्तुस्तात्पर्य्यग्रहेण ततः पदार्थोपस्थित्या शाब्दबोधोत्पत्त्या तद्घटित-पदसमूहस्य वाक्यत्वादेव। न चैवं तत्र वक्तृतात्पर्य्यात्मिकाया लक्षणाया एव ग्रह इति कथमवाचकत्वमन्यथा नेयार्थदोषोच्छेदादनुपपत्तेरिति वाच्यम्। वक्तुर्वाचकता भ्रमाधीनप्रयोगवशादवाचकत्वव्यवहारात्। सोऽध्यैष्टेति। स दशरथः अध्यैष्ट अधीत-वान् अयष्ट पूजितवान् अताप्सीत् तर्पितवान् तृपतर्पणे सममंस्त सम्मानितवान् व्यजेष्ट विजितवान् षड्वर्गं अरिषड्वर्गं कामक्रोधलोभमोहमदमात्सर्य्यरूपं षड़िन्द्रिय-रूपञ्च। अरंस्त रतवान् रमुक्रीड़ायाम्। समूलघातं समूलहननेन हतवानित्यर्थः। णमन्तधात्वर्थस्योत्तरधात्वर्थे हेतुताया अग्रे रैपोषं पुष्णातीत्यत्र ग्रन्थकृतैव वक्ष्यमाण-त्वात्। व्यजेष्ट षड्वर्गमित्यं स एव प्रकृतोदाहरणं न तु सोऽध्यैष्टेत्यादि क्रिया-पदस्य कटुवर्णानामपि वाक्यगामिता एकैकस्य परस्परानन्वितार्थकत्वेनावाक्यत्वात्। न चैवं तत्तत्पदगतैकैकवर्णकटोरदोषत्वेन समुचितकटुवर्णानां पदवाक्यान्यतरगामित्वा-भावेन च पूर्वार्द्धेऽनुभवसिद्धं कटुत्वमदोष एव स्यादिति वाच्यम्। पदैकदेशे कटुत्वा-देव तेषां तत्र च वाक्यत्वाभावेऽपि परम्परापेक्षया दोषत्वात् उदाहरिष्यते च तथैव। न च वैयाकरणे वक्तरि श्रुतिकटुत्वं न दोष इति वक्ष्यमाणत्वात् वैयाकरणभट्टिकार-वक्तृकेऽत्र श्लोके कथं तत्तदुदाहृतमिति वाच्यम्। वैयाकरणताध्यापके वक्तरीत्यर्थस्य तत्राभिप्रेतत्वात्। च्युतसंस्कृतमपास्य क्रमप्राप्तमप्रयुक्तं वाक्यगतमाह।

स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेड़मूकताद्यैश्च द्यतु दोषैरसम्मतान् ॥ [ अप्रयु॰ ]

अत्र दुश्च्यवन इन्द्रः, अनेड़मूको मूकवधिरः ।

सायकसहायबाहो ! मकरध्वजनियमितक्ष्माधिपते ! ।
अब्जरुचिभास्वरस्ते भातितरामवनिप ! श्लोकः ॥ [निहं॰]

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्य्यायाः शरा-द्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितः
यशो गायन्त्येते दिशिदिशि च नग्नास्तव विभो ! ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह ॥

---

स रातु व इति । स दुश्च्यवन इन्द्रो वो युष्माकं भावुकानां मङ्गलानां परम्परां श्रेणीं रातु ददातु असम्मतान् शत्रूंश्च अनेडमूकताद्यैर्दोषै र्द्यतु खण्डयतु मारयत्वित्यर्थः । अत्र दुश्च्यवनानेड़मूकपदयोरर्थौ विवृणोति ।

अत्रेति । अप्रयुक्तता तु रातुभावुकद्यतुपदानां सर्वेषामेव न तु दर्शितार्थकस्य पदद्वयस्यैवेति भ्रमः कार्य्यः । पूर्वपरार्द्धयोरत्रैकवाक्यत्वाभावेन एकवाक्यगतानेकवाक्यस्याप्रयुक्तत्वासम्भवात् एकैकस्यैकवाक्यगतत्वात् उत्तमानुत्तमपदयोरिव एड़मूकानेड़मूकपदयोः पर्य्यायः । असमर्थमपास्य क्रमप्राप्तस्य निहतार्थस्य वाक्यगामित्वमाह ।

सायकेति । हे अवनिप ! तव श्लोको यशो भातितरां कीदृशस्य तव सायकः खड्गस्तत्सहायस्तस्य मकरध्वजः समुद्रस्तेन नियमितायाः पृथिव्या अधिपतेः श्लोकः कीदृशः अब्जश्चन्द्र इव रुचिरो भास्वरश्च अब्जो जैवातृकः सोम इत्यमरः ।

अत्रेति । पर्य्यायवाचकाः प्रकृते विवक्षिता इति शेषः । शराद्यर्थतयेति । शरकामाचान्तिपद्मपद्यार्थतयेत्यर्थः । वाक्यगतमनुचितार्थमाह ।

कुविन्द इति । त्वं तावत् कुं पृथिवीं विन्दसि लभसे तथा गुणग्रामं स्वीयगुणसमूहं पटयसि पटुं करोषि पटुशब्दात्तत्करोत्यर्थे कारितम् । दिशि दिशि एते नग्नाः स्तुतिपाठकास्तव यशो गायन्ति एतावता राज्ञो महत्त्वं दर्शितम् । तथाच यद्यपि एवं

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः ।

प्राब्भ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥

अत्र प्राब्भ्रभ्राड्विष्णुधामविषमाश्वनिद्रापर्णशब्दाः प्रकृष्ट-जलदगगनसप्ताश्वसङ्कोचदलानामवाचकाः ।

---

महान् त्वं तथापि त्वत्कीर्त्तिः स्त्रीलिङ्गं शब्दार्थत्वात् स्त्रीत्वं नाध्यासिता इह जगति विगताच्छादनं यथा स्यात् तथा भ्रमति परेषां साकाङ्क्षदर्शनानुकूलं तस्याः सौन्दर्य्य-माह शरदिति । अवदातः सितो गौर इत्यमरः । स्फुटाच्छादनराहित्याद्व्यक्तं विकटं सुन्दरं तथाच महतस्तव पत्नी एवं सुन्दर्य्यपि नग्ना दिशि दिशि भ्रमतीति । निन्दया व्याजस्तुतिः अवारिता दिगन्तगामिनी ते कीर्त्तिरिति स्तुतिपर्य्यवसानात् ।

अत्रेति । कुविन्दशब्दस्य तन्तुवायोऽर्थान्तरं पटशब्दान्नामकारितान्तत्वे पट-कर्तृत्वमर्थान्तरं गुणशब्दस्य तन्तुरर्थान्तरं नग्नशब्दस्य दिगम्बरोऽर्थान्तरं तथाच त्वं कुविन्दस्तन्तुवायस्तन्तुसमूहं पटं करोषि त्वत्तो लब्धवस्त्रा दिगम्बरास्तव यशो गायन्ति तव कीर्त्तिरूपा स्त्री तु तथापि पटानाच्छादिता भ्रमतीति प्रतिपाद्यस्य राज्ञो-ऽपकर्षबोधकोऽर्थस्तद्व्यञ्जनादनुचितः । न चात्र उपश्लोकनार्हस्य राज्ञः कुविन्दत्वेन निन्दाप्रतिपत्त्या विरुद्धमतिकृत्त्वमेवेति वाच्यम् । पदार्थानौचित्याभावे सत्येव पद-द्वयसमभिव्याहारवशात् तथा व्यञ्जने तद्द्वयत्वात् अत्र तु तन्तुवायादिपदार्था एवानु-चिता इति भेदात् । परन्तु कुविन्दः पटयसीत्यनयोरेव पदार्थयोरनौचित्यादेतदंश एवानुचितार्थत्वं गुणग्राहिपदार्थानां त्वनौचित्याभावेनान्यपदसमभिव्याहारवशा-देवानुचितार्थं व्यञ्जकत्वात्तदंशे विरुद्धमतिकृत्त्वमिति सङ्कीर्णमिदमुदाहरणमिति बोध्यम् । निरर्थकमपास्य क्रमप्राप्तमवाचकं वाक्यगतमाह ।

प्राब्भ्रेति अयं विषमाश्वः सप्ताश्वः सूर्य्यः सहस्रपर्णानां पद्मानां निद्रां सङ्कोचं पलायनपरायणां करोति कीदृशः प्राब्भ्रे जलदे भ्राजमानः किं कृत्वा विष्णुधाम आकाशमाप्य प्राप्य ।

अत्रेति । अपो बिभर्त्तीत्यब्भ्रम् अप्पदञ्च न धातूत्पन्नमतोऽप्नाम पदपूर्वस्य प्रशब्दस्याब्भ्रपदार्थगतप्रकर्षद्योतकत्वाभावात्तद्विशिष्टमब्भ्रपदमवाचकम् अभ्र बसेत्या-

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥

अत्रोपसर्पणप्रहरणमोहनशब्दा व्रीडादायित्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात् प्रवर्त्तनम् ॥

---

र्थं युक्ताभ्रधातूत्पन्नाभ्रशब्दप्राग्वर्त्तित्वे तु तद्गतप्रकर्षद्योतकप्रशब्दविशिष्टमभ्रपदं भवत्येव वाचकमित्यवधेयं सुदेशौ विदेश इत्यादौ शोभनविगतवाचकौ उपसर्गप्रतिरूपकौ सुशब्दविशब्दाविव प्रशब्दोऽपि प्रकृष्टवाचक उपसर्गप्रतिरूपकोऽस्ति । प्रखलजलधियं इत्यादिकन्तु खलधातोः सकारलोपेन खलशब्दसाधनात् । तथा विष्णुशब्दोत्तरपदशब्द एवाकाशवाचको न तत्पर्य्यायधामशब्दः परिवृत्त्यसहत्वात् तथाऽयुग्मत्वेन रूपेण सप्तसङ्ख्यावाचकोऽपि विषमशब्दः सप्तत्वेन रूपेण सप्ताश्वस्य वाचकः परिवृत्त्यक्षमत्वात् । निद्रापदन्तु निद्रितवद्दीप्यमानत्वराहित्यरूपप्रयोजनवत्त्वात् सङ्कोचे लाक्षणिके एव वाचकत्वराहित्यवशादेवावाचकतया दर्शितः । अतएव कुमुदवनप्रतिपन्ननिद्रमासीदिति रघौ । विनिद्ररोमाजनि शृण्वती नलमिति नैषधे । उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा इत्यत्रैव प्रयुक्तम् । सहस्रपदोत्तरं पर्णपदमपि परिवृत्त्यक्षमत्वात् पत्रावाचकं न च प्रकृष्टजलदादौ तत्तत्पदानां लक्षणैवास्त्विति वाच्यम् । प्राभ्रादिशब्दैकदेशप्रादिशब्दानामभ्रादिशब्दसमभिव्याहारं विनाऽन्यत्र प्रकर्षाद्यर्थकत्वदर्शनादुक्तसमभिव्याहारेऽपि तथात्वभ्रमस्यैव सम्भवाद्वक्तुस्तत्र शक्तिभ्रमस्यैव निश्चयेनावाचकत्वादेव । अत्र च प्राभ्रादिशब्दानां पदैकदेशावाचकत्वेऽपि अवाचकपदान्तरसाहचर्य्याद्वाक्यदोषता । वाक्यगतं व्रीडाऽश्लीलमाह भूपतेरिति । उपसर्पन्ती आगच्छन्ती भूपतेः कम्पना सेना मोहनमरीणां सम्मोहमादधौ कीदृशी वामे शत्रौ लोचनं यस्यास्तादृशी ।

अत्रेति । उपसर्पणं कामुकसमीपे आगमनं तच्च कम्पवत्या वामलोचनायामानोदृशः तस्या एव प्रहरणं नितम्बप्रहारः मोहनं काममोहम् । व्रीडादायित्वादिति श्रोतु व्रीडोत्पादकत्वादित्यर्थः । अतएव व्रीडादिव्यञ्जक इति प्रागुक्तेऽपि तथैव व्याख्यातम् । वाक्यगतं जुगुप्साश्लीकमाह तेऽन्यैरिति । वान्तं वमिं उत्सर्गं पुरीषम् इतरार्थ इतरकविनिबद्धार्थः प्रवर्त्तनं प्रवृत्तिः ।

अत्र वान्तोत्सर्गप्रवर्त्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन, यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

सुरालयोल्लासपरः प्राप्तपर्य्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यते ॥

अत्र किं सुरादिशब्दा देवसेनाशरविभूत्यर्थाः, किं मदिराद्यर्थाः ? इति सन्देहः ।

---

अत्रेति । जुगुप्सादायिनः श्रोतुर्जुगुप्साजनकाः तत्र वान्तोत्सर्गपदाभ्यां वाच्यार्थेनैव प्रवर्त्तनशब्देन तु पुरीषत्यागरूपेण व्यङ्ग्येन खङितीयार्येनेत्यवधेयम् । वाक्यगतममङ्गलाश्लीलमाह ।

पितृवसतिमिति । पतिगृहे प्राप्तशोकाया उक्तिरियम् । अहं तां पितुर्वसतिं गृहं परिवारजनेन सह व्रजामि । पावकान्वय इत्यत्र प्राप्ते सतीति शेषः । तथाच यत्र पितृवसतौ पावकान्वये पवित्रताकारकवंशे पित्रादौ प्राप्ते मम हृदयमशेषितशोकशल्यकं भवति । निःशेषीकृतशोकरूपशल्यकं भवतीत्यर्थः । न तु पावकानामन्वयो यत्रेति । यत्रेत्यस्य विशेषणं तदा स्त्रीलिङ्गतापत्तेः ।

अत्रेति । पितृवसतिशब्दस्य श्मशानमर्थान्तरं तादृशे यत्र पावकस्य वह्नेरन्वये सम्बन्धे सति शरीरदाहात् हृदयं शोकरहितं भवतीति मृत्युप्रतीतिः मृत्युप्रतीत्याऽमङ्गलम् । वाक्यगतं सन्दिग्धमाह ।

सुरालयेति । एष ऐश्वर्य्यवान् राजा प्रमत्तभिक्षुर्वा विलोक्यते इत्यर्थः । सुरस्य पक्षे सुराया आलये गृहे तथा कम्पना सेना पक्षे कम्पः मार्गणोवाणः पक्षे मार्गणं भिक्षा च तत्प्रवणस्तत्प्रसक्तः भूतिरैश्वर्य्यं पक्षे भस्म च ।

अत्रेति । सुरसुरादिशब्दसन्देहात्तदर्थसन्देह इत्यर्थः । अत्र च प्रकरणाद्यभावादेव सन्देहः एकार्थे प्रकरणसत्त्वे तु उल्लास्यकालकरणेत्यत्रेवोपमाध्वनिरिव स्यात् उभयत्र प्रकरणादिसत्त्वे तु पृथुकार्त्तस्वरपात्रं भूषिताशेषपरिजनं

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढ़भूमिः प्रियप्राप्तौ यत्नः स फलितः प्रभो ! ॥

अत्राधिमात्रोपायादयः शब्दाः योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा, तथा ॥

अत्र गल्लादयः शब्दा ग्राम्याः ।

वस्त्रवैदूर्य्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता, नेत्रयुद्धं वेदय साम्प्रतम् ॥

अत्राम्बररत्नपादैः क्षततमाः अचला भूः कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता ।

---

देव !। विलसत्करेणुगहनं सम्प्रति सममावयोः सदनमिति वक्ष्यमाणवत् श्लेषालङ्कार एव स्यादिति बोध्यम् । वाक्यगतमप्रतीतमाह ।

तस्याधीति । हे सखि ! तस्य जनस्य प्रियस्य तत्त्वज्ञानस्य प्राप्तौ स यत्नः फलितः । कीदृशः दृढ़भूमिर्दृढ़संस्कारदायी यत्नजनकज्ञानजन्यः संस्कार एव संस्कारयत्नजन्यत्वेनोक्तः यत्नादपि संस्कारोत्पत्तिरिति मतभेदाद्द वा । तस्य कीदृशस्य तीव्रसंवेगिता संस्कारविशेषस्तज्जुषस्तद्वतः अधिमात्रसंज्ञकः समाधिस्तदुपायस्य । वाक्यगतं ग्राम्यमाह ।

ताम्बूलेति । गल्लं कपोलः भल्लं भद्रम् । अत्रेति । गल्लभल्लशब्दावपभ्रंशग्राम्यौ । खादनपानशब्दौ तु परस्परसाहित्यवशादेव संस्कृतग्राम्यावित्यवधेयम् । वाक्यगतं नेयार्थमाह वस्त्रवैदूर्य्येति । सूर्य्योदयेऽपि निद्रितं जागरयत उक्तिरियम् । अस्य व्याख्या वृत्तावेव । अत्रेति । अम्बरमाकाशं वस्त्रपदार्थः । रत्नं वैदूर्य्यपदार्थः अम्बररत्नं सूर्य्यः । पादा रश्मयश्चरणपदार्थाः । तमस्तिमिरं सत्वरजःपरपदार्थः । अचला भूर्निष्कम्पापदार्थः । नेयार्थतेति । अवाचकता तु नाशङ्क्या वस्त्रादिपदानामाकाशादिशक्तत्वभ्रमबीजस्य कस्याप्यभावेन तादृशभ्रमोन्नयनासम्भवात् परन्तु स्वार्थवस्त्रादिवाचकाम्बरादिशब्दवाच्यत्वसम्बन्धेनाकाशादौ रूढ़िप्रयोजन-

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम्॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम्।

न्यक्कारो ह्ययमेव मे, यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो! रावणः।
धिक् धिक् शक्रजितं, प्रबोधितवता किं कुम्भकर्णेन वा,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥

अत्रायमेव न्यक्कार इति वाच्यम्, उच्छूनत्वमात्रं चानुवाद्यं

---

शून्या लक्षणैवेत्यर्थः। सत्त्वरजसोः पश्चाद्गलितत्वेन तमोगुणस्यापि सत्त्वरजःपरशब्दार्थत्वेन तद्वाचकतमःशब्दवाच्यत्वस्य सम्बन्धस्य तिमिरे सत्त्वात्। वाक्यगतं क्लिष्टमाह।

धम्मिल्लस्येति। अस्यापि वृत्तावेव व्याख्या। धम्मिल्लः संयताः कचा इति कोषः। निकाममत्यन्तं रज्यतीत्यन्वयः। अपूर्वा बन्धव्युत्पत्तिर्बन्धविन्यासो यस्य तस्य धम्मिल्लस्येत्यर्थः। अत्रानासत्तिकृता क्लिष्टता।

वाक्यगतमविमृष्टविधेयांशमाह न्यक्कार इति। रावणस्य विषादोक्तिरियम्। यदरयः अयमेव न्यक्कारः इन्द्रेणापि सेव्यमानस्य मेऽरिसत्ताया एवाभावात् बहुभिर्मिलित्वा कदाचिदरिताकरणमपि सम्भाव्यते। एकस्य तापसस्य तथाचरणन्तु अत्यन्तन्यक्कार इत्याह तत्रापीति। तेष्वपि मध्ये इत्यर्थः। असौ चक्षुर्गोचरः तापसस्तपःक्षीणदेहः अत्रैव मत्समीप एव कुलं नत्वेकम्। शक्रजितमिन्द्रस्यापि जेतारं प्रबोधितं प्रबोधनं तद्वता प्रबोधितेनेत्यर्थः। न तु क्तवतुस्तस्य कर्मण्यभावात्। ग्रामटिका स्वल्पग्रामः तद्विलुण्ठने स्वर्गोऽपि स्वल्पग्राम इत्यर्थः। एभिर्भुजैस्तद्विलुण्ठनेन वृथोच्छूनैः वृथोद्धतैः किमित्यर्थः।

अत्रेति। आदौ किञ्चिदुद्दिश्य तत्र विधेयप्रत्यायने प्रतीतिः प्रकृष्टा भवति। वह्निमत्त्वे विधेये वह्निमान् पर्वत इति निर्देशापेक्षया पर्वतो वह्निमान् इति निर्देश एव प्रकृष्टः प्रकृष्टप्रतीत्युत्पत्तेः तन्मूलमेवोक्तम्। अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदिति। प्रकृते त्वनुवाद्यमरिसत्त्वमिदंशब्दार्थस्तस्मात् पूर्वमेव विधेयस्य। न्यक्कारस्य

न वृथात्वविशेषितम् । अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य । यथा वा,

---

निर्देशादविमृष्टत्वात् पाठं परावर्त्तयति अयमेवेति । प्रसङ्गादस्य पद्यस्यान्त्यपाद-दोषं दर्शयति उच्छूनत्वमात्रश्चेति । किं पदेनैव वैयर्थ्यप्राप्तौ वृथात्वविशेषणं पुन-रुक्तमिति । पुनरुक्तदोषोऽनेन प्रदर्शित इति केचित्तन्न । किं शब्देन भुज-वैयर्थ्यस्य वृथाशब्देन उच्छूनत्ववैयर्थ्यस्योक्तौ पुनरुक्त्यभावात् । उच्छूनत्वमुद्दिश्य विधीयमानं वृथात्वं कर्मधारयसमासवशात् गुणीकृतमतः समासगतमविमृष्टविधे-यांशत्वमेवानेन दर्शितमत एव उच्छूनत्वमात्रश्चेति । अविमृष्टता समुच्चये चकार उक्त इति चक्रवर्त्तिप्रभृतयस्तन्न । तदा वृथात्वं न समासे गुणीकार्य्यमित्येवलिख्येत न तु वृथात्वस्य विधेयतास्फोरकमीदृशं लिख्येत । किञ्च कर्मधारये विधेयस्यानु-वाद्ये साक्षादन्वयित्व एवाविमर्शः यथा मौर्व्यामुद्देश्यायां साक्षादन्वयिनी द्वितीय-त्वस्य परम्परान्वयित्वे त्वनुभवबलान्नाविमृष्टता । यथातिशयसुन्दरी कान्तेत्यत्र अत्र हि अतिशयित्वं विधेयमनुवाद्यायां सुन्दर्यां न साक्षादन्वितं किन्तु तदन्विते सौन्दर्य्य एव । मुखरोऽयमुत्तमपण्डित इत्यत्र पाण्डित्यान्वितस्य उत्तमत्वस्य यथा वा अमन्द-वलितग्रीवमित्यत्र अत्रापि हि विधेयममन्दत्वमनुवाद्य वलितान्वितवलन एवान्वितं नह्यत्र विधेयता केनापि नानुभूयते तद्वदिहापि उच्छूनान्वितोच्छूनत्वान्वितस्य वृथा-त्वस्य विधेयस्य कथमविमृष्टता । वयन्तु स्वर्गविलुण्ठनेन उच्छूनत्वमेव जन्यते न तु वृथोच्छूनत्वमतो विलुण्ठनवृथोच्छूनत्वयोः अनन्वयादभवन्मतयोगे दोष एवायं दर्शितः । वृथात्वविशेषितत्वे विलुण्ठनान्वयासम्भवादिति ब्रूमः । न च तदा उच्छूनत्वमात्रं कस्य विधेयस्यानुवाद्यमिति वाच्यम् । उच्छूनत्वविशिष्टभुजानुवादिविशेषणस्याप्यनु-वाद्यत्वेन विधेयस्य किं पदार्थवृथात्वस्यानुवाद्यत्वात् । चकारस्तु दोषसमुच्चयमात्रे नन्वयोरेव विपरीतप्रतीत्याऽयं दोष इति वाक्यार्थदोष एवायमस्त्वित्यत आह ।

अत्रेति । ननु समासे विभक्तिलोपात् सम्भूयोच्चारितपदानुपूर्वीपरावृत्त्यसम्भवा-दस्तु समासगतमविमृष्टत्वं वाक्ये त्वयमेव न्यक्कार इति परावृत्त्यान्वयसम्भवादानुपूर्वी-परावृत्तौ यत्किञ्चित्विलम्बो न दोषावहः । कथमन्यथा शून्यं वासगृहमित्यत्र विधेयस्य शून्यत्वस्य निःशेषच्युतचन्दनेत्यत्र विधेयस्य निर्मृष्टरागत्वस्य चापाचार्य्यस्त्रिपुरविजयी-त्यादौ विधेयस्य चापाचार्य्यत्वस्य कातर्य्यं केवला नीतिरित्यादौ विधेयस्य कातर्य्यत्वस्य पूर्वनिर्देशः यदि च सर्वत्रैव दोष इत्युच्यते । तत्कथमविमृष्टतादोषं परिहरतैव

अपाङ्गसंसर्गि तरङ्गितं दृशो-
र्भ्रुवोररालान्तविलासि वेल्लनम्।
विसारि रोमाञ्चितकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे! तवागतः॥

अत्र योऽसाविति पदद्वयमनुवाद्यमात्रप्रतीतिकृत्, तथाहि प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते, क्रमेण उदाहरणम्,

कातर्य्यं केवला नीतिः, शौर्य्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥ [प्रका०]
इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।

---

ग्रन्थकृताऽलक्षिता जनिरिति पाठरचना कृता तस्मात् न्यक्कार इत्यत्रानुपूर्वीपरावर्त्तने यत्किञ्चित्विलम्बो न दोषावहः कथमन्यथा स्वरसादेव दोषो दर्शितः। वस्तुतस्तु काव्ये एवंविधो वाक्यगताविमृष्टत्वदोषो न परिहार्य्यः। वाक्यगताविमृष्टत्वमन्यदेवोदाहार्य्यमित्यभिप्रायेणाह यथावेति।

अपाङ्गे संसर्गि सम्बद्धं तव दृशोः तरङ्गितं तरङ्गवच्चाञ्चल्यम् अराले कुटिले अन्ते विलासि भ्रुवो र्वेल्लितञ्च तनोः विसारि रोमाञ्चरूपं सर्वव्यापकत्वात् कञ्चुकञ्च यस्तनोति हे सुभगे! असावागत इत्यन्वयः। अनुवाद्यमात्रेति यच्छब्दसन्निधिपतितस्याद:शब्दस्य युधि योऽसौ विजयार्जुनैकमल्ल इत्यादौ तथैव व्युत्पत्तेरिति भावात्। अनुवाद्यतामात्रप्रतीतौ च विधेये तच्छब्दार्थे यत्पदमिदं साकाङ्क्षं तयोः परस्परेणैव परस्पराकाङ्क्षानिवृत्तेरिति हृदये न तयोः क्वचित् परस्परान्वयसाकाङ्क्षत्वं क्वचित्तु नेति विचारेण प्रकृते यच्छब्दस्य यच्छब्दसाकाङ्क्षत्वमेवेति बोधयितुमाह।

तथाहीति। तत्र तच्छब्दस्य यच्छब्दनिराकाङ्क्षत्वमादौ दर्शयति प्रक्रान्तेति।

कातर्य्यमिति। केवला नीतिः कातर्य्यमित्यन्वयः। चपल एव चापल इति स्वार्थेऽण् उभाभ्यां नीतिशौर्य्याभ्याम्।

अत्र प्रक्रान्तो रघुः संहृतस्यार्थः। इयं गतमिति अत्र सा प्रसिद्धा कलेत्यर्थः।

कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ [ प्रसि० ]

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन, न वीक्षितासि ॥ [अनु०]

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते, यथा

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः,

---

उत्कम्पिनीति। वासवदत्तया निगडितां सागरिकामैन्द्रजालिकदर्शितपुरदाहदग्धत्वभ्रमेण शोचयतो वत्सराजस्य पतेः उक्तिरियम्। हे सागरिके! क्रूरेण दहनेन दारुणतया सहसैव त्वं दग्धा पुनराह धूमेति वीक्षणे त्वीदृशी सुन्दरी त्वं न दग्धास्या इति भावः। वह्निदर्शनाद्भयेन तत्कालीनावस्थां सम्भाव्याह।

उत्कम्पिनीति। उत्कम्पवती भयेन परिस्खलितोऽंशुकस्यान्तो यस्याः तादृशी ते मया पूर्वानुभूते लोचने वह्निदर्शनाद्विधुरे कातरे प्रतिदिशं क्षिपन्ती। अत्र ते इत्यनुभूतार्थकम्।

इत्थं तच्छब्दस्य यच्छब्दनिराकाङ्क्षत्वं दर्शयित्वा यच्छब्दस्यापि तच्छब्दनिराकाङ्क्षत्वं दर्शयति यच्छब्दस्त्विति वाक्यगतत्वमेव स्यादिति ज्यायान् पाठः। क्वचिद्वाक्यानुगतेति पाठस्तत्र च उकारवान् नकार एव न तु रेफमूर्द्धा णकार इत्यवधेयम्।

साधु चन्द्रमसीति। चन्द्रमसि सति पुष्करैः पद्मैः साधु कृतं कुत इत्याह मिलितमिति। अभिरामताधिके तस्मिन् सति यन्मिलितं सङ्कुचितं जयिनि चन्द्रजयनशीले कामिनीमुखे सति उद्यता तेन चन्द्रेण पुनः साहसमनुष्ठितम्। अत्र यदिति तत्पदनिराकाङ्क्षम्। प्रकृते तनोति योऽसावित्यवादःशब्दसन्निहितो यच्छब्दः साकाङ्क्ष एवेति साधयितुमाह।

यथा, अत्रैव श्लोके आद्यपादयोर्व्यत्यासे, द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम्। अनुपादानेऽपि सामर्थ्यात् क्वचिद् द्वयमपि गम्यते, यथा,

ये नाम केचिदिह नः प्रथयन्त्यवज्ञाम्,
जानन्ति ते किमपि, तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥

अत्र य उत्पत्स्यते तं प्रतीति। एवञ्च तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम्। न चासाविति तच्छब्दार्थमाह,

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः॥

अत्र हि न तच्छब्दार्थप्रतीतिः, प्रतीतौ वा,

---

प्रागुपात्तस्थिति। पूर्ववाक्योपात्त इत्यर्थः। व्यत्यास इति सिलितं यदभिरामताधिके साधु चन्द्रमसि पुष्करैः कृतमित्येवं विपर्यय इत्यर्थः। अत्र हि तत्साधु कृतमित्युक्तावेवाकाङ्क्षानिवृत्तिः। उभयोपादानानुपादानयोरेकमेवोदाहरणमाह।

ये नामेति। नोऽस्माकमिह मालतीमाधवे नाटके नाम सम्भावनायां ये केचिदवज्ञां प्रथयन्ति ते किमपि बुद्ध्यविषयं जानन्ति अवज्ञाहेतोरसत्त्वेन बुद्ध्यविषयत्वादिति भावः। अतस्तान् प्रत्येष नाटकविषयो न यत्नः। तर्हि कं प्रत्येष यत्न इत्यत्राह उत्पत्स्यते इति। अस्तीत्यनन्तरं वाकारोऽध्याहार्य्यः तथाच मम समानधर्मा एतन्नाटकरसास्वादकः कोऽपि उत्पत्स्यते अस्ति वा तं प्रत्येष यत्न इत्यर्थः। नन्वियता कालेनानुत्पन्नो न उत्पत्स्यत एव उत्पन्नो वा स्रुतः स्यादित्यत आह कालो ह्ययमिति।

अत्र पूर्वार्द्धे द्वयोरुपादानं परार्द्धे तु द्वयोरनुपादानं विज्ञेयमिति।

अत्रेति। इत्थं प्राग्वाक्योपात्तस्य यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वं व्यवस्थाप्य प्रकृतेऽपि साकाङ्क्षत्वमिति दर्शयति एवञ्चेति। अत्रेति। तनोति योऽसावित्यर्थः। नन्वदःशब्देनैव तच्छब्दाकाङ्क्षानिवृत्तिः स्यात इत्यत आपाततोऽदःशब्दस्य तच्छब्दसमानार्थतां निरस्यति न चेति। असौ मरुदिति। दृश्यमानो वसन्तकाल

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्य्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥

अत्र स इत्यस्यानर्थक्यं स्यात् । अथ

योऽविकल्पमिदमर्थमण्डलं पश्यतीश ! निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्ते इति । उच्यते, तर्हि अत्रैव वाक्यान्तरे उपादानमर्हति न तत्रैव, यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति, यथा,

---

आगतः । तदीयपुष्पादिदृश्यमानत्वतद्दृश्यमानत्वाध्यासः । कीदृशो हनुमानिव द्वयोर्विशेषणमाह मरुता वायुना चुम्बितः स्पृष्टश्चारुः केशरः पुन्नागो यत्र पक्षे केशरः सटा । तथा प्रसन्नो यस्तारापतिमण्डलश्चन्द्रबिम्बः स एवाग्रणीः प्रधानं यत्र तादृशः पक्षे तारापतिः सुग्रीवस्तस्य मण्डलं सेना तदग्रणीस्तत्प्रधानम् । तथा वियुक्तया रामया आतुरदृष्ट्या वीक्षितः पक्षे वियुक्तेन रामेण । अत्रेति । यदादःशब्दस्तच्छब्दसमानार्थः स्यात्तदाऽत्रापि प्रतीतिः स्यादित्यर्थः । ननु अत्र स इत्यर्थेऽसावित्यस्त्वित्यत्राह प्रतीतो वेति ।

करवालेति । योऽसौ कर्णः विजयार्जुनस्य विजयापरनाम्नोऽर्जुनस्य युधि एकमल्लः प्रतिद्वन्द्वी स यदि भूपतिना दुर्य्योधनेन तत्र सैनापत्यकार्य्ये विनियुज्येत ततः कृतं कृतं स्यात्सिद्धं स्यादित्यर्थः । कार्त्तवीर्य्यार्जुनव्यावृत्तये विजयेति । अत्रेति । आनर्थक्यं पौनरुक्त्यं तथाचादःशब्दो न तच्छब्दसमानार्थ इत्युक्तम् । नन्वत्र तच्छब्दसमानार्थकत्वाभावेऽपि तत्रेति योऽसावित्यत्र तच्छब्दार्थकः स्यान्नानार्थकत्वादिदंशब्दवदित्याशङ्कते । अथ योऽविकल्पमिति भयप्रदर्शकमीश्वरं प्रति तदद्वैतदर्शिन उक्तिरियम् । हे ईश ! इदं निखिलमर्थमण्डलं पदार्थसमूहम् योऽविकल्पं निःसंशयं भवद्वपुर्भवदभिन्नं पश्यति अस्य नित्यमेव सुखिनो भवत्स्वरूपेणात्मपक्षेणैव परिपूरिते जगति कुतो जनाद्भयमित्यर्थः ।

अत्र अस्येति तस्येत्यर्थे । तथा च तत्समानार्थस्यादःशब्दस्यापि तथात्वमित्याह ।

इदंशब्दवदिति । तर्हीति वाक्यान्तरेऽपि यच्छब्दतो व्यवधानेनेति बोध्यम् । अन्यथा तत्रेति योऽसावित्यत्रापि यस्तत्रेत्यसावागत इति वस्त्वन्तरे एवोपस्थित्वादिष्टा-

यत्तदूर्जितमत्युग्रं चात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥

इत्यत्र तच्छब्दः । ननु कथं

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते !
धुर्य्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य यन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥

अत्र यद्यदित्युक्त्वा तन्मे इत्युक्तम् । उच्यते, यद्यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु आक्षिप्तं, तथाभूतमेव तच्छब्देन परामृश्यते । यथा वा,

---

पत्तिसम्भवात् तदेव व्यक्तीकरोति यच्छब्दस्य हीति निकटस्थितत्वं वाक्यान्तरस्थत्वमकिञ्चित्करमिति भावः ।

यत्तदिति । युधिष्ठिरं निन्दतो भीमस्योक्तिरियम् । अस्य नृपते युधिष्ठिरस्य यत्तत् प्रसिद्धं चात्रमूर्जितम् उद्धतमुग्रं तेजस्तदा सभायामक्षैर्दीव्यताऽनेन नूनं तदपि हारितं न तु केवलं राजधनादिकमित्यपेरर्थः । इत्यत्र यथा यच्छब्दस्य निकटस्थितस्तच्छब्दः प्रसिद्धं परामृशति तथा तन्निकटस्थोऽदःशब्दोऽपीत्यर्थः । एवञ्च तनोति योऽसावित्यत्र विधेयाविमर्श एवेति साधितम् ।

ननु प्रागुपात्तस्य यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वे यच्छब्दसमसङ्ख्यतच्छब्देनैव तदाकाङ्क्षा निवृत्तिर्वाच्या तथा च वीप्सितयच्छब्दस्थले कथमेकतच्छब्देनाकाङ्क्षानिवृत्तिरित्याशङ्कते । ननु कथमिति ।

ननु कथं कल्याणानामित्यत्र यद्यदित्युक्त्वा तन्मे इत्युक्तमित्यर्थेऽन्वयः नटस्य नमस्कृते सूर्य्ये वरप्रार्थनमिदम् । हे विश्वमूर्त्ते ! सूर्य्य ! त्वं कल्याणानां मङ्गलानां महसां तेजसां भाजनमधिकरणमसि । अथ प्रणामानन्तरं मयि धुर्य्यां न्टत्यभावकामां लक्ष्मीं धेहि अर्पय हे देव ! प्रसीद हे जगन्नाथ ! नम्रस्य मम यद्यत् पापं तत् प्रतिजहि नाशय भूयसे बहुलाय मङ्गलाय भद्रमुत्तमं यथा स्यात्तथा भद्रं मङ्गलहेतुभूतमभीष्टं वितरेत्यर्थः । समाधत्ते उच्यत इति सर्वात्मकमित्यनेन सर्वसाधारणैकेन

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतम्
माता, स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्य्यानुजोऽसौ, गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम्॥

अत्रार्य्यस्येति तातस्येति च वाच्यं, नत्वनयोः समासे गुणीभावः कार्य्यः, एवं समासान्तरेषु अपि उदाहार्य्यम्। विरुद्धमतिकृद्यथा,

---

पापत्वरूपेण यद्यदित्यनेनाक्षिप्तमिति दर्शितम्। तथाभूतमिति तेनैव रूपेण परामृश्यत इत्यर्थः। तथाचात्र वीप्सित यत्पदेन सामान्यरूपेणोपस्थानाच्चेनैव रूपेण एक तत्पदेनापि परामर्शसम्भव इत्युक्तम्। यदि तु वीप्सितयत्पदेन तत्तद्रूपेण प्रत्येकव्यक्त्युपस्थापने वक्तुस्तात्पर्य्यं तदा एकतत्पदेन तत्तद्रूपेण बोधयितुमसामर्थ्यात् तत्पदेऽपि वीप्सेत्यभिप्रायः। तथाच यं यं व्यतीयाय पतिंवरा सा इत्यत्र स स भूमिपाल इति यां यां प्रिया प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव इत्यत्र सा सेति च तत्पदवीप्सोपपत्तिः। नन्वेकवाक्यस्थत्वेवादःशब्दस्य प्रसिद्धिपरामर्शकत्वयत्पदसान्निध्यं प्रयोजकं युधि योऽसावित्यत्र तथादर्शनात् तनोति योऽसावित्यत्र तु वाक्यभेदान्न तथेत्यत उदाहरणान्तरमाह।

यथा किं लोभेनेति। रामं वने प्रेरयितुं पित्रा आज्ञातमिति श्रुत्वा लक्ष्मणस्योक्तिरियम्। येन भरतेन मात्रा द्वारीकृतया एतद्रामवनप्रेरणरूपं कर्म एवं तातप्रतिज्ञानेन कृतं स भरतः किं लोभेन विलङ्घित इत्यन्वयः। अथवा मम मध्यमा माता कैकय्येव स्त्रीस्वभावलघुतां गता पुनराह एतन्मम द्वितयं चिन्तितमपि मिथ्यात्वे हेतुमाह।

आर्य्येति। आर्य्यस्य रामचन्द्रस्यानुजोऽसौ भरतः अतो गुरुर्महान् नाकार्य्यकारी तथा च तादृशः कथमकार्य्यकर्त्ता स्यादित्यर्थः। एवं माता मध्यमा तातस्य दशरथस्य कलत्रं तत्कलत्रस्याकार्य्यमसम्भाव्यमेवेत्यर्थः। तदिदमकार्य्यं केन कृतमित्यत्राह इत्यनुचितमिति इदमनुचितमित्यर्थः।

अत्रेति। आर्य्यतातयोः सम्बन्धादेवास्वीकृतमिथ्यात्वं सिद्ध्यति स च सम्बन्धः समासवशात् षष्ठ्या साक्षादप्रत्याय्यत्वेन गुणीभूत इत्यर्थः। न चार्थसम्बन्धिलक्षणया लुप्तषष्ठ्यनुसन्धानात् वा सम्बन्धप्रतीतौ कथं गुणीभाव इति वाच्यम्। इत्थं सम्बन्धोप-

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धा प्रतीतिः ।

---

स्थितावप्यसावनुजः आर्य्यस्येत्येवंरूपायाः सम्बन्धस्य विधेयतायाः अनुभवेन विषयीकरणात् तथा निर्देशे आर्य्यानुजगुरुत्वस्यैव विधेयतावगाहनात् तातकलत्रमित्यत्र तु विधेयान्तरस्यैव । न च वाक्यगतैतद्दोषप्रदर्शनप्रस्तावे कथं समासगताविमृष्टविधेयांशप्रदर्शनमिदं कृतमिति वाच्यम् । एकवाक्यतापन्नसमासपदद्वयगताविमृष्टविधेयांशद्वयस्य वाक्यगतत्वात् । न च असावार्य्यानुजो माता च तातकलत्रमिति वाक्यद्वयमेव तत्कथमनयोरेकवाक्यता येन दोषद्वयव्यक्तिद्वयस्य एकवाक्यगामितया प्रकृतोदाहरणतासमार्थेति वाच्यम् । एकवाक्यनिर्दिष्टस्य द्वितीयमिथ्यात्वस्य हेतुत्वेन तद्वाक्यद्वयनिर्देशादेकवाक्यत्वानपायात् । सिंहगुहावलोकनन्यायेन पुनः समासगताविमर्शप्रदर्शनं कृतमिति चक्रवर्त्तिप्रभृतयः । एवं समासान्तरेऽपीति । समासान्तरे पदद्वयगतत्वे नेत्यर्थः । समासान्तरीयैकपादवाक्यगतत्वासम्भवात् । अमोघवाणं धनुषा विमुञ्चन् शक्यकार्य्यं स चकार राम इत्यत्र कर्मधारये विधेययोरमोघत्वाशक्यत्वयोरविमर्शाद्वाक्यगामिता । वाक्यगतं विरुद्धमतिकृत्त्वमाह ।

श्रितक्षमा इति । ते कौरवा विग्रहस्य युद्धस्य क्षपणेन त्यागेन अद्य गता सुखा गतदुःखाः शेरते कीदृशाः श्रितक्षान्तयः अनुरक्तभूलोकाः शिवेन मङ्गलेनालिङ्गितमूर्त्तयः । अत्र विग्रहादिपदार्थानामनौचित्याभावेऽपि पदार्थान्तरान्वयवशात् प्रतिपाद्यानां कौरवाणामपकर्षप्रतीतिः । तथाहि श्रितभूतलाः रक्तं शोणितं भुवि येषां ते तथा शिवाभिरालिङ्गिता मूर्त्तिर्येषां ते तथा विग्रहस्य शरीरस्य त्यागेन शेरते भुवीति शेषः । आत्मशरीरयोर्विशिष्टयोस्ते इत्यनेनोपादानं विग्रहत्याग आत्मनः भुवि शयनञ्च शरीरस्येति बोध्यम् । तथागता असवः प्राणाः खानीन्द्रियाणि च येषां ते तथा न च अत्र शिवा पदार्थानौचित्यादनुचितार्थत्वमिति वाच्यम् । वाचकस्य शिवपदस्यानुचितार्थत्वाभावात् सन्निसाहचर्य्यादेव शृगालीव्यञ्जनात् न च अमङ्गलाश्लीलत्वमिति वाच्यम् । असङ्गलस्य पितृवसतिपदार्थस्य श्मशानस्येवात्र पदार्थामङ्गलत्वाभावात् ।

पदैकदेशे यथासम्भवं क्रमेण उदाहरणम्,

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥

अत्र त्वादिति । यथा वा,

तद्गच्छ सिद्ध्यै कुरु देवकार्य्यमर्थोऽयमर्थान्तरलभ्य एव ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥

अत्र द्ध्यै ब्ध्यै इति कटु ।

यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
वलाहकच्छेदविभक्तरागाम् अकालसन्ध्यामिव धातुमत्ताम् ॥

---

पदस्यांशेऽपि केचनेत्येतस्योदाहरणं दातुमाह पदैकदेश इति । पदैकदेशे श्रुतिकटुत्वमाह अलमतीति । अङ्गनायाः सङ्गमे नालं व्यर्थं तत्र हेतूनाह अति-चपले इति । चपलत्वं क्षणिकत्वं स्वप्नमायोपमत्वम् । इतितत्त्वं यदि शतकृत्वः आलोचयाम इत्यन्वयः । तदपि तथापि प्रत्ययमात्रांशकटुत्वादत्र पदैकदेशता अनेक-पदैकदेशकटुत्वाच्चात्र श्रुतिकटुता एकवर्णकटोरदोषत्वात् एवं सोऽध्येष्ट इत्यस्य पादत्रयेऽपि बोध्यम् । ननु शृङ्गारे परुषवर्णानां तद्बोधकं समस्तवाक्यपतितत्वात् प्रतिकूलवर्णदोषोदाहरणमेवेदं युक्तमित्यत उदाहरणान्तरमाह ।

यथावेति । महेशस्य समाधिभङ्गार्थं कामं प्रेरयत इन्द्रस्योक्तिरियम् । सिद्ध्यै महेशसमाधिभङ्गरूपायै समाधिभङ्ग एव किमर्थमित्यत्राह अर्थोऽयमिति अयं तारक-हन्तृसेनान्युत्पादनरूपोऽर्थः अर्थान्तरस्य शब्देन निर्देशः । अनुचितस्य महेशकर्त्तृक-पार्वतीशृङ्गारस्य लभ्य एवेत्यर्थः । अतः समाधिभङ्गेनैव तत्सिद्ध्यतीति भावः । केचित्तु अन्तरपदमप्यनन्तरार्थकं तथाच धर्मार्थकाममोक्षगणनेऽर्थानन्तरगणितस्य कामस्य लभ्य एवेत्यर्थः इत्याहुः । सोऽर्थः अङ्गलब्ध्यै स्वसत्तालब्ध्यै त्वां प्रत्ययं कारणमपेक्षते त्वयैवायमर्थः साधयितुं शक्य इत्यर्थः । बीजाङ्कुरो बीजप्रभवोऽङ्कुरः स्वोदयात् प्रागम्भो यथापेक्षते इत्यर्थः । जलानपेक्षभौमाङ्कुरव्यावृत्तये बीजेति ।

अत्रेति । सिद्धिपदाङ्गलब्धिपदयोः प्रत्ययभूतां चतुर्थीं विहाय प्रकृत्येकदेशो-

अत्र मत्ताशब्दः क्षीवार्थे निहतार्थः।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम्।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा॥

अत्र दृशामिति बहुवचनं निरर्थकं, कुरङ्गेक्षणाया एकस्या एव उपादानात्, न चालसवलितेत्यादिवत् व्यापारभेदाद्बहुत्वं, व्यापाराणामनुपात्तत्वात्, न च व्यापारेऽत्र दृक्शब्दो वर्त्तते। अत्रैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम्, प्रधानक्रियाफलस्य कर्तृसम्बन्धे कर्त्रभिप्रायक्रियाफलाभावात्।

---

थकारश्चकारौ श्रुतिकटू इत्यर्थः। प्रत्ययमुत्तमं त्वामिति कुमारसम्भवे पाठरचनया एष दोषः परिहृतः। पादैकदेशे निहतार्थमाह यश्चाप्सर इति यः पर्वतः शिखरैः धातुमत्तां धातुं विभर्त्ति कीदृशीं अप्सरसां विभ्रमाय विलासाय यानि मण्डनानि भूषणानि तेषां निष्पादिका अकालसन्ध्या चित्रमेघाच्छन्नतयाऽसन्ध्यापि सन्ध्या तामिव कीदृशीं वलाहकस्य मेघस्य च्छेदेन खण्डेन विभक्ती नानाकारीकृतौ रागौ वर्णभेदौ यत्र तादृशीम्। अत्रेति धातुमत्ताशब्दस्य मतुबादिप्रत्ययद्वयरूप एकदेशो मत्ता। पदैकदेशे निरर्थकमाह।

आदाविति। रुदतीं काञ्चिद्दर्शयत उक्तिरियम्। कुरङ्गेक्षणाऽश्रुपयसा दृशां निषेकं सम्प्रत्येव कुरुते अन्यदा तु नैव रुदती दृष्टेत्यर्थः। कीदृशीनां दृशां आदावञ्जन-पुञ्जलिप्तवपुषां ततश्च श्वासानिलैः उल्लासितेन प्रोत्सर्पता विरहानलेन सन्तापितानां सर्वाङ्गतापे दृशामपि तप्तत्वात्। अत्रोत्प्रेक्ष्यते देवस्येति चेतोभुवो देवस्य भल्लीसंज्ञक-बाणविशेषाणां धारा तैक्ष्ण्यहेतु पानकर्म पानीयदकर्मैव कामं यथेष्टम् कुरुते तदीय-दृशां कामबाणकार्यकारित्वादियमुत्प्रेक्षा पानकर्मण्यपि प्रथमसङ्गारचूर्णकृताञ्जनेन लेपः भस्त्राश्वासरूपानिलैः उल्लासितेन प्रोत्सर्पता विरहतुल्यानलेन सन्तापश्च। अत्रेति बहुवचनत्वेनानर्थकमित्यर्थः। षष्ठीत्वेन तु सम्बन्धबोधकत्वमस्त्येवेति बोध्यम्। नचेति दृग्गोलकबहुत्वाभावेऽपि वक्त्रोपात्ततद्व्यापाररूपविशेषणबाहुल्या-द्विशिष्टबाहुल्यमित्यर्थः। व्यापारेऽत्रेति अत्र दृक्शब्दे व्यापारलक्षणापि नेत्यर्थः।

चापाचार्य्यस्त्रिपुरविजयी, कार्त्तिकेयो विजेयः,
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्, किमु कृतवता रेणुकाकण्ठबाधाम्
बद्धस्पर्द्धस्तव परशुना लज्जते चन्द्रहासः ॥
अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

---

व्यापाराणामञ्जनलिपासम्भवादिति भावः। व्यर्थमित्यात्मनेपदत्वेनेत्यर्थः। वर्त्तमानत्वेन तु वर्त्तमानकालस्य बोधकत्वमस्त्येवेति बोध्यं वैयर्थ्यं घटयति प्रधानेति प्रधानस्य क्रियाफलस्येत्यर्थः। क्रियायास्त्वेकत्वेन प्राधान्यासम्भवात् तच्च फलमत्रानुनिषेककरणस्य उद्देश्यरूपं प्रधानं नास्त्येव दृक्तिमितत्वन्तु अनुद्देश्यं कर्तृनिष्ठञ्च पानकर्मकरणस्य तु धारातैक्ष्ण्यमुद्देश्यत्वात् प्रधानं कर्तृनिष्ठम्। कर्त्रभिप्राय इति कर्त्रभिप्राये क्रियाफले इति पाणिनिसूत्रं कर्त्तारमभिप्रैति प्राप्नोतीति व्युत्पत्त्या कर्तृनिष्ठे क्रियाफले इति तदर्थः। अत्र तु कुरङ्गीचक्षणायां कर्त्र्यां तदभावादित्यर्थः। पादपूरणमात्रप्रयोजनमिति यन्निरर्थकं लक्षणं कृतं तत्र पादपूरणपदस्य छन्दोभङ्गवारणप्रयोजनकतया व्याख्यातत्वादेव बहुवचनात्मनेपदयोः पादपूरणार्थत्वाभावेऽपि निरर्थकता। न च दृशामित्यत्र दृशोरिति करणेऽपि छन्दसो भङ्गाभावेन कथं तदपि प्रयोजनमिति वाच्यम्। सन्तापितानामित्यत्र तद्विशेषणे तद्भङ्गवारणार्थत्वात् सन्तापितयोः इति करणे तद्भङ्गात् यद्वा तत्रैव पादपूरणातिरिक्तप्रयोजनराहित्यमर्थः। तथाचात्र निष्प्रयोजनत्वेऽपि तदस्त्येव। पदैकदेशगतमवाचकमाह।

चापाचार्य्य इति। दिग्विजयी जामदग्न्यं प्रति रावणस्योक्तिरियम्। त्रिपुरविजयी विलक्षणधनुःशिक्षया त्रिपुरजेता महेशस्तव चापाचार्य्यः ममापि जेता कार्त्तवीर्य्यस्त्वया विजेयो विजितः शस्त्रव्यस्त उदधिस्तव सदनं निवासस्थानं कश्यपाय पृथिवीं दत्त्वा शस्त्रभीषितात् समुद्राद् गृहीतस्थानत्वात् भूरियं हन्तकारोऽतिथौ कश्यपमुनौ दत्त्वा हन्तकारस्यातिथिदानमन्त्रत्वेन तत्सम्बन्धादेव देया भूरेव तत्पदेन लक्षिता तवोत्कर्षहेतुभूतमेतच्चतुष्टयमस्त्येव किन्त्वित्यर्थे किमुशब्दः किन्तु रेणुकाया स्तव मातुः कण्ठबाधां कण्ठच्छेदं कृतवता तव परशुना सह बद्धस्पर्द्धो मम चन्द्रहासः खड्गो लज्जतेऽकार्य्यकारिणा स्पर्द्धानौचित्यात्।

अत्रेति। अवाचक इति न च लक्षणा अस्तु इति वाच्यम्। अनिर्दिष्टकालकाः

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव॥ [व्रीड़ा०]

अत्र पेलवशब्दः।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन।
सौजन्यमान्यजनिरूर्जितमूर्जितानाम्
सोऽयं दृशोः पतति कस्यचिदेव पुंसः॥ [जुगु०]

अत्र पूयशब्दः।

---

प्रत्ययास्त्रिष्वपि कालेषु भवन्तीति व्याकरणोक्तस्यात्र शक्तिभ्रमबीजस्य सत्त्वेन वाचकत्वादेव न च तादृशव्याकरणानुशासनसत्त्वेन कथमतीतकाले शक्तिर्नास्ति इति वाच्यम्। वैकालिकक्रियार्थधातुभ्य एव तादृशाः प्रत्यया भवन्तीत्येव तदर्थात् न तु त्रय एव कालास्तेषामर्थः अत एवातीतार्थकत्वाभावेऽपि तदर्थे तस्य साधुत्वेन न च्युतसंस्कृतित्वम्। न चात्र प्रत्ययैकदेशरूपस्यावाचकत्वादिवानुनाथत इत्यत्राप्यात्मने-पदस्य प्रत्ययस्य च्युतसंस्कृतित्वात् पदैकदेशदोषतैवोचिता न तु पददोषतेति वाच्यम्। विशेषार्थकधातुविशेषवैशिष्ट्येनैव तथात्वेन प्रकृतिप्रत्ययात्मकपददोषत्वस्यैव तत्र न्याय्यत्वात्। पदैकदेशे व्रीड़ाश्लीलत्वमाह।

अतिपेलवमिति। पेलवं केवलं लघुतरं शीघ्रतरं स शठस्तु परमार्थतो हृदयं कालकूटघटितमिव वहतीत्यन्वयः।

अत्रेति। आद्यवर्णद्वयस्यापभ्रंशपदरूपत्वेन शुक्रबोधकत्वाद्व्रीड़ाजनकत्वम्। पदैकदेशे जुगुप्साश्लीलत्वमाह।

यः पूयत इत्यादि। सोऽयं जनः कस्यचिदेव अर्थात् पुण्यवतो दृशोः पतति न तु सर्वस्य। यो हि जनः सुरसरित्प्रभृतितीर्थसमूहस्नानेन पूयते पूतो भवति शास्त्राणां धर्मशास्त्राणां परिशीलनस्य व्यवसायस्य कीलनेनाभ्यासेन सौजन्यस्य पूज्यतात्मकमान्यस्य च जनिर्जन्म यत्र तादृशः तथा ऊर्जितानामूर्जस्वलानामप्यूर्जितं बलस्वरूपः।

अत्रेति पूयं क्लेदः। पदैकदेशेऽमङ्गलाश्लीलत्वमाह।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग ! तादृशः ।
कथमद्य स तत्त्वदीच्चतां तदभिप्रेतपदं समागतः ॥ [ अमङ्ग० ]

अत्र प्रेतशब्दः ।

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥

अत्र किं पूर्वं साधुरुत साधुषु चरतीति सन्देहः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोवाणैस्तेजो यस्य विभाव्यते ॥ [नैया०]

अत्र वचःशब्देन गीःशब्दो लक्ष्यते । अत्र खलु न केवलं

---

विनयेति । अङ्ग ! सम्बोधने । यस्तादृशः प्रसिद्धः विनयस्य वात्सल्यरूपप्रणयस्य च सततमेककेतनमेकाश्रयोऽभवत्कथं सम्भ्रमे स जनोऽद्य तत्त्वदीच्चतां तात्त्विकव्रतित्वं समागतः कीदृशं तस्यैवाभिप्रेतं वाञ्छितं पदं व्यवसायम् । पदैकदेशसन्दिग्धत्व-माह ।

कस्मिन्निति अस्य जनस्य सामर्थ्यं कस्मिन् कर्मणि नोत्तपते नोद्बुध्यते तस्मादयं साधुचर इह जनेऽञ्जलिर्बध्यताम् ।

अत्रेति । भूतपूर्वेवृत्तेरश्चरडिति चरट्प्रत्ययश्चरधातु र्वेति सन्देह इत्यर्थः । पदैकदेशे नेयार्थत्वमाह ।

किमुच्यत इति । नृपाणां मौलिस्थाया मालाया महामणिभूतस्यास्य किं चरितमुच्यते न किमपि वाग्गोचरमित्यर्थः । यस्य तेजो वचोवाणै गीर्वाणैरपि सुदुर्लभमित्यर्थः ।

अत्रेति । न च गीःशब्दार्थवाणैरित्यर्थात् रेफद्वयवद्भ्रमरशब्दार्थत्वेन भ्रमरस्य द्विरेफशब्दार्थवत् परन्तु तत्र रूढिरत्र तु न रूढिः न वा प्रयोजनमिति नेयार्थता इयमेव लक्षितलक्षणोच्यते । केचित्तु गीःशब्द एव लक्षणा तस्य च स्वार्थे लक्षणा इत्यमेव लक्षितलक्षणारीतिमाहुस्तन्न । लक्षितगीःशब्दस्यान्वयबोधापत्तेस्तदीय-स्वार्थे लक्षणानुपपत्तेश्च । न च कथमतादृशलक्षणा गीःशब्दार्थस्य वाक्यस्य वचः-शब्देन शक्त्यैव उपस्थापनसम्भवादिति वाच्यम् । गीःपदपरिवृत्त्या पदान्तरेण

पूर्वपदं, यावदुत्तरपदमपि पर्य्यायपरिवर्त्तनं न क्षमते। जलध्यादावुत्तरपदमेव, वड़वानलादौ पूर्वपदमेव।

---

तदर्थोपस्थापने वाणपदसमभिव्याहारस्य प्रतिबन्धकत्वात् अतस्तस्य गीःपदार्थत्वेनैवोपस्थापकता तथात्वे तु लक्षणैव। अथ विष्णुधामेत्यत्र विष्णुपदशब्दैकदेशपदशब्दपरिवृत्त्या धामपदं विष्णुशब्दसमभिव्याहारात् स्थानत्वेन रूपेण स्थानावाचकम्। अतोऽत्र तत्रापि पदशब्दार्थत्वेन लक्षितलक्षणया बोधकमस्तु कथं तत्र वाचकतेति चेन्न। पदशब्दार्थत्वेन तत्र बोधकत्वे तस्य सम्बन्धिशब्दत्वाभावेन सम्बन्धाकाङ्क्षाशून्यत्वेन तदर्थे आकाशे आकाशत्वेनोपस्थिते इव विष्णोरनन्वयात् स्थानत्वेनोपस्थिते तु यस्य विक्रमस्य विष्णोराक्रमणीयस्थाने तत्र साकाङ्क्षत्वेन भवत्वेव विष्णोरन्वय इति न तत्र पदशब्दार्थत्वेन लक्षणा। प्रकृते गीःशब्दार्थत्वेनोपस्थापितस्य वाक्यस्य वाणकार्य्यकारित्वाद्भवत्येव वाणपदार्थे साकाङ्क्षतयाऽभेदान्वयबोधः। एवञ्च सर्वत्रैव पूर्वपदस्य परिवृत्त्यक्षमत्वे लक्षितलक्षणा नेयार्था परपदस्य परिवृत्त्यक्षमत्वे तु प्रायशोऽवाचकतेति बोध्यम्। न च वचःशब्दस्य वाक्ये शक्तिमत्त्वेन शक्तिभ्रमाभावेऽपि अप्रतिबद्धशक्तिभ्रमस्यैव वाचकलक्षणे प्रवेशितत्वादत्रावाचकतैव स्यान्न लक्षणा अप्रतिबद्धत्वाप्रवेशे विदधदित्यस्यावाचकतानुपपत्तेरिति वाच्यम्। गीर्वाणशब्द एव शक्तिग्राहककोषग्राहितशक्तिकत्वेन वाणपदपूर्ववर्त्तिनि वचःशब्दशक्तेरेवानुपस्थित्या भ्रमोन्नयनाभावात् विदधदित्यत्र तु धाधातुग्रहीता शक्तिरुपतिष्ठत एव व्युपसर्गेण तु तदन्वयबोधस्यैव प्रतिबन्धः। न च समासपदैकदेशत्वाविशेषेऽपि वचोवाणैरित्यत्र पदैकदेशदोषता विष्णुधामेत्यत्र वाक्यदोषता कुत इति वाच्यम्। तत्रैव तद्दोषवत् पदान्तरसाहचर्य्यात्। उत्तरपदमपीति। तेन गीःशर इत्यपि न भवति वचःशर इति तु न सुतराम्। उत्तरपदमेवेति। पर्य्यायपरिवर्त्तनं न क्षमत इत्यत्रान्वयः। तेन जलाशय इत्यादिपदाज्जलाधिकरणत्वेनैव बोधो न समुद्रत्वेनेति बोध्यम्। जलधिपदन्तु उपसर्गविशिष्टं जलनिधिपरमेवेति बोध्यम्। पूर्वपदमेवेति तेनाम्बानल इति न तद्वाचकम्। ननु अप्रयुक्तत्वासमर्थत्वावाचकत्वनेयार्थत्वरूपा दोषाः शक्यतावच्छेदकरूपेण बोधयितुमसमर्थत्वेन एकरूपेणैव सङ्कलयितुं शक्यास्तत्कथमेषां पृथग्भावेन प्रदर्शनमित्यत आह।

यद्यपि असमर्थस्यैव अप्रयुक्तादयः केचन भेदाः तथापि अन्यैरलङ्कारकारैर्विभागेन दर्शिता इति, भेदप्रदर्शनेनोदाहर्त्तव्या इति च विभज्योक्ताः ।

प्रतिकूलवर्णमुपहत-
लुप्तविसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदम्
पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ ५ ॥
अर्द्धान्तरैकवाचकम्
अभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं
सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥ ६ ॥
भग्नप्रक्रममक्रमम्
अमतपरार्थं च वाक्यमेव तथा ।

---

यद्यपीति । वाक्यमात्रदोषानाह ।

प्रतिकूलेति । उपहतविसर्गं लुप्तविसर्गञ्चेति दोषद्वयम् । न्यूनपदमधिकपदं कथितपदञ्चेति दोषत्रयम् । अपदस्थपदमपदस्थसमासञ्चेति दोषद्वयम् । तद्विपरीतत्वमेवेति । तत्र सविरोधिगुणव्यञ्जकवर्णत्वमित्यर्थः । वर्णपदस्यात्र समासस्याप्युपलक्षणं तेन प्रकृतरसविरोधिगुणव्यञ्जकसमासोऽपि प्रतिकूलवर्णो बोध्यः । दूषकताबीजसाम्यात् उदाहरिष्यते चैवमेव विरोधस्य । माधुर्य्यौजोगुणयोरेव अतो माधुर्य्यव्यञ्जका वर्णाः समासो वा वीरबीभत्सरौद्ररसेषु ओजोगुणव्यञ्जकवर्णाः समासो वा शृङ्गारशान्तरसेषु प्रतिकूला बोध्याः । एवञ्च नीरसेषु हास्यभयानकाद्भुतरसेषु च पदैकदेशमात्रनिष्ठत्वे च श्रुतिकटुत्वं दोषः । प्रतिकूलवर्णत्वन्तु समस्तवाक्यव्यापकत्वे शृङ्गार-

रसानुगुणत्वं वर्णानां वक्ष्यति, तद्विपरीतं प्रतिकूलवर्णं यथा शृङ्गारे,

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि! माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर॥

रौद्रे यथा,

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः,
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे,
यद्रामेण कृतं, तदेव कुरुते द्रोणात्मजः क्रोधनः॥

---

करुणशान्तवीररौद्रबीभत्सरसेष्वेव दोषः वीरादिविषये कोमलवर्णत्वेऽपि दोष इति द्वयोर्विशेषः।

अकुण्ठेति। कोकिले कम्बुकण्ठ्याः सौन्दर्य्यहेतुरेखात्रयविशिष्टकण्ठ्यास्तस्याः कण्ठे मां क्षणं कुरु मम कण्ठार्त्तिमुद्धर अपनय तस्याः समीपे तथा कुरु यथा सा मां कण्ठे करोतीति तात्पर्य्यार्थः। मां कीदृशम् आकण्ठमकुण्ठया उत्कण्ठया पूर्णम्। अतः शृङ्गाररसीयपद्यरूपवाक्यस्य व्यापकाः शृङ्गारवृत्तिमाधुर्य्यगुणव्यञ्जकाष्टवर्णाः टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसीति वक्ष्यमाणत्वात्। प्रतिकूलसन्नामात्मकं प्रतिकूलवर्णं रौद्ररसे दर्शयति।

रौद्र इति। देशः सोऽयमित्यादिकं पाण्डवेषु क्रुद्धस्याश्वत्थाम्न उक्तिरियम्। रामेण परशुरामेण यन्निहतशत्रुशोणितजलैर्ह्रदपूरणरूपं कर्म कृतं द्रोणात्मजोऽश्वत्थामाऽपि अद्य क्रोधनः सन् तत् कुरुते पितृवधक्रोधात् पितृसम्बन्धोपन्यासः रामस्य तथाकरणे या सामग्री ममापि सास्तीति दर्शयति देशः सोऽयमिति। कुरुक्षेत्ररूपो देशः तातस्य केशग्रहणरूपः तथाविधः परिभवो ममापीत्यर्थः। रामतातस्य जमदग्नेरपि कार्त्तवीर्य्यार्जुनेन केशग्रहणं कृतं मम तातस्य मृतस्य द्रोणस्यापि धृष्टद्युम्नेन केशान् गृहीत्वा शिरश्छिन्नमित्यर्थः। परशुरामस्य यान्यस्त्राणि ममापि तान्येव रामेण मत्पित्रे तेन च मह्यं दत्तत्वात् कीदृशानि अहितानां शस्त्रस्य घस्मराणि खादकानि गुरूणि महान्ति भास्वराणि चेत्यर्थः।

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम्। यथा

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः।

उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत्।

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः॥

---

अत्रेति। ओजोगुणव्यञ्जकविकटवर्णौचित्यमात्रप्रदर्शनमिदं न तु तदकरणादेव प्रतिकूलवर्णता तद्विपरीतानां माधुर्य्यव्यञ्जकानां स्ववर्गान्त्यमूर्द्धकानां कादीनामभावात्। किन्तु अदीर्घसमासस्य माधुर्य्यव्यञ्जकस्य करणादेवात्र प्रतिकूलवर्णता वर्णपदस्य समासस्याप्युपलक्षकत्वात् तदुच्यति अवृत्ति र्मध्यवृत्ति र्वा माधुर्य्ये घटना तथेति। रौद्रे विकटवर्णदीर्घसमासौ क्व दृष्टावित्यत्राह।

यथेति। प्रागप्राप्तेत्यादिकं रामचन्द्रं प्रति कुपितभार्गवोक्तिः। मम उज्ज्वालः परशुरशिथिलः सन् त्वत्कण्ठपीठेऽतिथिर्भवतु पीठोपवेशनस्यातिथेरौचित्यात्पीठरूपणम्। कीदृशः निशुम्भे आमर्द्दनं प्रागप्राप्तवत्कं यच्छाम्भवं धनुस्तस्य त्वत्कृतया द्वेधाविधा भङ्गेन द्विप्रकारता तया आविर्भवता क्रोधेन प्रेरितौ यौ भीमौ भार्गवस्य मम भुजस्तम्भस्तेनापविद्धश्चालितः क्षणात् तत्क्षणात् येनानेन परशुना देवो हरो जगत्सु खण्डपरशुः ख्याप्यते पूर्वं महेशे स्थितः सन्नयं रिपुखण्डक आसीदतः खण्डयतीति खण्डः तादृशः परशुर्यस्येति व्युत्पत्त्या खण्डपरशुरिति महेशस्य योगरूढं नामेत्यर्थः। अत्र पूर्वपादत्रये ऊर्द्धतारेफयुक्तवर्णाः पूर्वार्द्धे च दीर्घसमासः चतुर्थपादे तु रौद्ररसाभावान्न तथात्वमित्याह।

यत्र त्विति। महेशनामकथनरूपे तत्र क्रोधाभावात्। उपहतविसर्गलुप्तविसर्गरूपं दोषद्वयमेकवाक्येन व्याचष्टे।

उपहत इति। लुप्तविसर्गता घोषवति लोप एव बोध्या स्वरे परे तु विसन्धि-

विसन्धिः सन्धेर्वैरूप्यं, विश्लेषोऽश्लीलत्वं कष्टत्वञ्च । आद्यं यथा

राजन् ! विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ॥
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः ॥

यथा वा,

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्वत मुक्तामणिवच्चकास्त्यनर्घः ॥

---

मध्यप्रवेशो वक्ष्यते उपहतिलोपावपि क्रमाद्दुष्टः पतितावेव दोषौ बोध्यौ बन्धशैथिल्यकारित्वस्य दोषतावीजस्य तदैव सत्त्वात् तादृशमेव द्वयोरेकमुदाहरणमर्द्धद्वयेनाह ।

धीर इति । यस्य राज्ञो भृत्या बलोत्सिक्तत्वादिविशिष्टा अत लोके स एव नृपो धीरत्वादिविशिष्ट इत्यर्थः । बुद्धिप्रभाविताः बुद्धिप्रभाववन्तः अस्त्यर्थे इतच् । अत पूर्वार्द्धे उपहतिः परार्द्धे विसर्गलोपः ।

विसन्धिदोषमाह । विशब्दोऽत्र वैरूप्यार्थकः वैरूप्यार्थकः वैरूप्यञ्च त्रिधा भवतीत्याह विश्लेष इत्यादि विश्लेषः सन्धिराहित्यम् । विश्लेषमाह ।

राजन्निति । हे राजन् ! भवतस्तानि चरितानि विभान्ति यानि अन्तः रसातले भूतलमध्ये वैशद्यादिन्दोर्द्युतिं दधति तथा भवतो धीदोर्बले विजयसम्पदमेत्य भातः । कीदृशे उचितानुवृत्ती आतन्वती उचितं व्यवसायद्वयं विस्तारयती क्वचित्तु एषु भात इति पाठस्तदा च विजयसम्पदमातन्वती इत्यन्वयः । उचितानुवृत्ती इति तु धीदोर्बलविशेषणं बहुव्रीहिवशाद्भाषितपुंस्कत्वम् । तानि इन्दोरित्यत्र स्वरे ऐच्छिकसन्धिवशाद्विश्लेषः परार्द्धे तु विकृतद्विवचनस्य प्रकृतिवद्भाववशाद्विश्लेषः ।

तत उदित इति । ततः श्लोकान्तरोक्तगुणादपि अयमुदितो जातः सन् मुक्तारूपमणिवच्चकास्ति उच्चैरुदयाचलादुदित इन्दुरिव तस्य इन्दोश्च श्लिष्टं विशेषणमाह उदारेति । उदारहारवदुदारहारे च हारिणी द्युतिर्यस्य निजवंशे निजकुले निजोत्पादकवेणौ च उदात्ता उत्कटा कान्ता कमनीया च कान्तिर्यस्य वेणौ मुक्ती-

संहितां न करोमीति स्वेच्छया सकृदपि दोषः, प्रगृह्या-दिहेतुकत्वे त्वसकृत्।

वेगादुड्डीय गगने चलण्डामरचेष्टितः।
अयमुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु॥

अत्र सन्ध्यावश्लीलता।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्॥ [स० श्रु० क०]

हतं लक्षणानुसरणेऽप्यश्रव्यम् अप्राप्तगुरुभावान्तलघु, रसा-ननुगुणञ्च वृत्तं यत्र, तत् हतवृत्तं, क्रमेणोदाहरणम्,

---

त्पादात् अनर्घ्योऽतिपूज्योऽमूल्यश्च मूल्ये पूजाविधावर्घ इति कोषः। ततः स्वार्थिकं तद्धितं नञ् बहुव्रीहिः। अत्र विसर्गलोपे सन्धिनिषेधाद्विश्लेषः विश्लेषे च बन्ध-शैथिल्यकारित्वं दोषतावीजं तत्रैव दर्शितोदाहरणानुसारिणं विशेषमाह।

संहितामिति। संहिता सन्धिः नचैवं च्युतसंस्कृतित्वमिति वाच्यम्। स्वर-सन्धेरिच्छाविकल्पस्य व्याकरणानुशिष्टत्वात् एवञ्च पूर्वार्द्धे सकृत्त्वेऽपि दोषः प्रगृह्यं प्रकृतिवद्भावः आदिपादात् विसर्गलोपसन्धिनिषेधः। अश्लीलसन्धावुदाहर्तव्ये जुगुप्साव्रीड़ाश्लीलसन्धी एकत्रैवोदाहरति।

वेगादिति। अयं पत्री वेगादुड्डीय गगने चलन् उत्तपते उत्तापं गृह्णाति डामर-मुद्भटं चेष्टितं यस्य तादृशः ततस्तस्मादत्रैव रुचिं दिदृक्षां कुर्वित्यर्थः। अत्रापभ्रंश-विधया दीर्घाकारपुरीषबोधकस्य च लण्डामरेत्यत्र लण्डाशब्दस्य रुचिङ्कुर्वित्यत्र च योन्यन्तर्वर्त्त्यवयवविशेषबोधकस्य चिङ्कुशब्दस्य सन्धावुत्पत्त्याऽश्लीलसन्धिता। एव-ममङ्गलाश्लीलसन्धितापि भजतेऽसौ भ्रुवमित्यादावूह्यं कष्टसन्धिमाह।

उर्व्यसाविति। असावुर्वी महती तर्वाली तरुश्रेणी चार्ववस्थितिः शोभनावस्थाना अत्र मरुभूमेरन्ते तिष्ठत्यतोऽत्र ऋजु अनम्रभावं यथा स्यात्तथा गन्तुं न युज्यते तत्तस्मात् साम्प्रतं शिरो मनागल्पं नमय। अत्र सन्धौ श्रुतिकटुवर्णोत्पादः। हतवृत्तमुदाहर्तुं हतपदार्थं विविधं ब्रुवन् हतपदार्थं समर्थयति।

हतमिति। अप्राप्तगुरुभावोऽन्तलघु यत्रेति विग्रहः वृत्तं छन्दः अन्तलघोर्गुरु-भावाप्राप्तिश्च बन्धगाढ़ीकरणरूपगुरुकार्य्याक्षमत्वं बोध्यम्।

अमृतममृतं कः सन्देहो मधुन्यपि नान्यथा,
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु, यदिहान्यत् स्वादु स्यात्प्रियारदनच्छदात्॥

अत्र यदिहान्यत् स्वादु स्यात् इत्यश्रव्यम्। यथा वा,

जो परिहरिउं तीरइ मणम्मि ण सुन्दरत्तणगुणेण।
अह णवर जस्स दोसो पडिवक्खेहिम्मि पड़िवन्नो॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ।

विकसितसहकारभारहारि-परिमलपुञ्जितगुञ्जितद्विरेफः।

---

अमृतममृतमिति। द्वितीयामृतपदमत्र मधुरार्थकं नान्यथेत्यपि तु तथैव प्रसन्नरसं विमलद्रवं रसान्तरवित् रसेतरभेदविज्जनो मध्यस्थः सन् सकृदपि वदत्वित्यन्वयः। प्रियाया वदनच्छदादोष्ठादन्यद्वस्तु यदि स्वादु स्यात्तद्वदत्वित्यर्थः। अमृतादेर्मधुरत्वेऽपि तत्तुल्यस्वादुत्वं नास्तीति भावः।

अत्रेति। हा शब्दे पदमध्ये यतिरश्रव्या पदान्ते सा शोभां व्रजति पदमध्ये त्यजति चेति छन्दसि यतिनियमात्। नचैवं लक्षणानुसरणमेव नास्तीति वाच्यम्। पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तामिति तल्लक्षणस्यावान्यशब्दकारसन्धौ सत्त्वात् अश्रव्यता त्वनुभवगम्या दुष्यजैवेतिभावात्। लक्षणानुसरणेऽपीत्यपिकाराच्छन्दोलक्षणभङ्गे तु सुतरामेव दोषो बोध्यः। आर्य्यायां गणविशेषद्वयसान्निध्यकृतमश्रव्यत्वमाह। जो परिहरिउमिति।

यः परिहर्त्तुं तीर्य्यते मनागपि न सुन्दरत्वगुणेन।
अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः॥ इति संस्कृतम्।

तीर्य्यते पार्य्यते सुन्दरत्वगुणेन हेतुना मनागल्पमपि यः परिहर्त्तुं न पार्य्यते इत्यन्वयः। अथ समुच्चये यस्य दोषोऽपि केवलं प्रतिपक्षैरेव प्रतिपन्नो नास्माभिः। प्राकृते णवरणवरौ केवले। अत्रेति हरिउमिति द्वितीयगणोऽन्तगुरुः सकारपरिभाषितः। तीरई इति तृतीयगणो भकारपरिभाषित आदिगुरुः अनयोः सान्निध्येऽश्रव्यम्। अप्राप्तगुरुभावान्तलघुवृत्तमुदाहरति।

नवकिसलयचारुचामरश्री र्हरति मुनेरपि मानसं वसन्तः ॥

अत्र हारिशब्दः, हारिप्रमुदितसौरभेति पाठो युक्तः।

यथा वा,

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा,
सम्भाराः खलु तेऽन्य एव, विधिना यैरेष सृष्टो युवा।
श्रीमत्कान्तिजुषां द्विषां करतलात्, स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढ़मनसामस्त्राणि वस्त्राणि च ॥

अत्र वस्त्राण्यपीति पाठे लघुरपि गुरुतां भजते। [२]

---

विकसितेति। वसन्तो मुनेरपि मानसं हरति यतो विकसितस्य सहकार-पुष्पभारस्य हारिणा मनोहरेण परिमलेन विमर्द्दोत्थगन्धेन पुञ्जितगुञ्जिताः पुष्टशब्दा-द्विरेफा यत्र तादृशः नवकिसलयरूपस्य चारुचामरस्य श्रीर्यच तादृशः। पाठ-परिष्कारेण दीर्घं प्रकाशयति अत्रेति। अत्र पुष्पिताग्राच्छन्दसि प्रथमपादान्तलघो-र्गुरुत्वेऽपि संयुक्तवर्णपूर्वत्वाभावे बन्धगाढत्वरूपगुरुकार्यकारित्वं नास्ति।

अत्र परिष्कृतपाठे हारिप्रमुदितसौरभगुञ्जितद्विरेफ इति श्लोकपादस्तत्र च सहकारभारे हारिणो मनोहराः प्रमुदिताः सौरभे गुञ्जिताश्च द्विरेफा यत्रेति बहुव्रीहिः। शार्दूलविक्रीड़ितच्छन्दस्यप्याह।

अन्यास्ता इति। रत्नरोहणभूः पर्वतविशेषः प्रसिद्ध एव गुणरत्नरोहणभुवस्तु ता अन्या एव सा मृदप्यन्यैव धन्या एवं ते खलु सम्भारा अन्य एव यैः सम्भारैरेष युवा विधिना सृष्टः। अत्र च यदीयगुणरत्नयन्मृत्सहितैरिति पूरयित्वा व्याख्येयमन्यथा ता इत्यत्र सा इत्यत्र च यत्पदार्थाकाङ्क्षाऽनिवृत्तिप्रसङ्गात् यैरित्यनेनैव सकलतत्परामर्शे तु रोहणभुवा तस्य सृष्टत्वबाधादनन्वयापत्तेः। यस्मिन् दृष्टे द्विषां करतलादस्त्राणि स्त्रीणां नितम्बस्थलाद्वस्त्राणि च पतन्ति। कीदृशां मूढ़मनसां मनसि भयेन द्विषां कामो न च स्त्रीणां मोहः तथा श्रीमतां कान्तिजुषाञ्च द्विषां श्रीरैश्वर्य्यं स्त्रीणाञ्च श्रौज्ज्वल्यं द्विषां कान्तिः श्रीमत्ताधीना स्त्रीणान्तु सौरूप्यमेव न तु द्विषां श्रीमत्त्वेव स्त्रीणां कान्तिमत्त्वेवेति विभागः समासनिबद्धयोर्विभज्यान्वयस्या-व्युत्पन्नत्वात्।

अत्रेति। शार्दूलविक्रीड़ितच्छन्दसि पादान्तलघोर्गुरुत्वेऽपि संयोगात्परत्वे

हा नृप ! हा बुध ! हा कविबन्धो ! विप्रसहस्रसमाश्रय ! देव ! ।
मुग्धविदग्धसभान्तररत्न ! क्वासि गतः क्व वयञ्च तवैति [२]

हास्यरसव्यञ्जकमेतद्वृत्तम् । न्यूनपदं यथा,

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां,
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतम्,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥

अत्रास्माभिरिति, 'खिन्ने' इत्यस्मात् पूर्वमित्थमिति च ।

अधिकं यथा,

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।

---

सत्येव बन्धगाढ़तारूपगुरुकार्य्यकारित्वमतस्तथैव पाठे तथात्वं दर्शयति वक्ष्याम्यपीति । रसाननुगुणवृत्तमुदाहरति ।

हा नृपेति । अत्र सर्वत्र हाशब्दः खेदे । मुग्धाया विदग्धसभाया अन्तरे मध्ये हे रत्नभूत ! त्वं क्व गतोऽसि तवैते वयं क्वेत्यर्थः, दोधकमिदं छन्दः करुणविरोधिहास्यरसव्यञ्जकमित्याहार्त्तेति । न्यूनपदत्वदोषमाह ।

न्यूनेति । न्यूनस्य पदस्यार्थेन सहान्वये तात्पर्य्ये सति तदुपादानेन तदन्वयनिर्वाहे च सत्यनुपपत्त्युत्पादकवाक्यत्वं तत्त्वं वक्ष्यमाणसाकाङ्क्षदोषेऽन्यान्वयित्वभ्रमादेव प्रयुक्तत्वेन न्यूनपदार्थान्वये तात्पर्य्यविरहः वक्ष्यमाणेऽनभिमतवाच्ये न्यूनस्य पदस्योपादानेऽपि न तदन्वयनिर्वाहोऽतद्द्वयादस्य पृथक्त्वम् ।

तथाभूतामिति । व्याख्यातपूर्वमिदम् ।

अत्रेति । वल्कलधरान्तराणां वनवासदर्शनस्य खेदानौचित्येऽनुपयोगित्वेनास्माभिरित्यत्रैव तात्पर्य्यं न्यूनस्यास्माभिरित्यस्योपादाने च तत्र तदर्थान्वयनिर्वाहः खिन्नः इतीतिदर्शितदुःखहेतूनां गुरुप्रयोज्यतया इत्थमित्यनेनाप्रदर्शने तद्दर्शनात् खेदानौचित्यबोधनानुपपत्तेः तत्रापि वक्तुस्तात्पर्य्यात्तदध्याहारादेव तदन्वयनिर्वाहाच्च । अधिकपदत्वदोषमाह ।

अधिकेति । पौनरुक्त्यभावेऽप्युक्तपदार्थानतिरिक्तार्थपर्य्यवसायकपदवद्वाक्यत्वं

अविरुद्धसमर्थितोक्तियुक्तः प्रतिमल्लास्तमयोदयः स कोऽपि ॥

अत्राकृतिशब्दः । यथा वा,

इदमनुचितमक्रमश्च पुंसां, यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥

अत्र कृतमिति कृतं प्रत्युत प्रक्रमभङ्गमावहति । तथाच, यदपि च न कुरङ्गलोचनानामितिपाठे निराकाङ्क्षैव प्रतीतिः ।

---

तत्त्वं वक्ष्यमाणपुनरुक्तत्वदोषे तु कथितार्थस्य पुनःकथनं न तु कथितार्थस्यैव भङ्ग्या पर्य्यवसायकत्वं वक्ष्यमाणापुष्टार्थत्वदोषे तु विशेषणस्य प्रकृतार्थप्रकर्षकारित्वाभावमात्रं न तूक्तपदार्थस्यैव पर्य्यवसानम् । स्फटिकेति । स कोऽप्यनिर्वचनीयः प्रकामं यथेष्टं प्रतिसंक्रान्तं प्रविष्टं निशातस्य निर्मलस्य शास्त्रस्य तत्त्वं यत्र तादृशः प्रतिसंक्रमे हेतुगर्भं विशेषणमाह । स्फटिकस्य आकृतिः शरीरं यतस्तद्वन्निर्मल इत्यर्थः । अविरुद्धं यथा स्यात्तथा समर्थिता उक्तिः युक्तिः येन तादृशः तथा प्रतिमल्लानां स्वप्रतिकूलवीराणामस्तमयो मरणं यस्मात्तादृशः तथा अदयः रिपौ निर्दयः न त्वस्तमयस्योदयो यत्र त्वेकमेव पदं तदा उदयपदस्याधिक्यापत्तेः । अत्राकृतिपदेनापि स्फटिकस्यैव पर्य्यवसानं नाधिक्यार्थस्यार्थः ।

चक्रवर्त्ती तु आकृतिरवयवसंयोगरूपसंस्थानविशेषस्तत्र मलासत्त्वात् नैर्मल्यस्याभावात्तत्पदाधिक्यमित्याह तन्न । तदाऽन्वयासम्भवरूपस्य भवन्मतयोगदोषस्यैवापत्तेः । प्रभातवाताहतिकम्पिताकृतिरित्यादावाकृतिशब्दस्य शरीरबोधकत्वाच्च संस्थाने कम्पबाधात् । इदमनुचितमिति मान्मथविकारस्यानौचित्येऽपि स यदि धर्माविरोधी स्यात्तदा यौवन इव जरास्वप्युचित इत्यत आह ।

अक्रमश्चेति । शैशवे विद्या यौवने विषयासङ्गः वार्द्धके धर्मचर्य्या इति यः क्रमस्तद्विरुद्ध इत्यर्थः । इत्थं पुरुषधर्मं निन्दित्वा स्त्रीधर्मं निन्दति यदपि चेति । नितम्बिनीनां स्तनपतनोत्तराधिकं यज्जीवितं रतं वा न कृतमर्थाद्विधात्रा तदप्यनुचितमित्यर्थः कृतं व्यर्थमधिकमिति यावत् । मान्मथो विकार इत्यन्तेन पुरुषधर्मनिन्दानन्तरं स्त्रीधर्मनिन्दैवाकाङ्क्षिता न तु स्त्रीधर्मस्य विधिकृतत्वनिन्देत्यतः

कथितपदं यथा,

अधिकरतलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली।
सुतनु ! कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम्॥

अत्र लीलेति। पतत्प्रकर्षं यथा,

कः कः कुत्र न घुर्घुरायितघुरी घोरो घुरेच्छूकरः
कः कः कं कमलाकरं विकमलं कर्त्तुं करी नोद्यतः।

---

स्त्रीधर्मस्य विधिक्लतत्वनिन्दयापि भङ्गा स्त्रीधर्मनिन्दापर्य्यवसानादाधिक्यम्। प्रत्यतेति पुंधर्मनिन्दोपक्रमे यदपिचेत्यनेन स्त्रीधर्मनिन्दासमुच्चयस्यैवाकाङ्क्षितत्वान्न तु तस्य विधिक्लतत्वनिन्दासमुच्चयस्येत्याकाङ्क्षितक्रमभङ्गः निराकाङ्क्षा निरुद्वेगा। कथितपददोषमाह।

कथितपदमिति। कथितपदेनैव वक्तुः तात्पर्य्यग्राहकाभावे सतीति बोध्यम्। तेन विहितानुवादलाटानुप्रासादे र्व्यावृत्तिः।

अधिकरतलेति। करतले गण्डं क्लत्वा चिन्तयन्तीं प्रति कस्यचिदुक्तिरियम्। हे सुतनु ! तव गण्डपाली गण्डदेशः कस्य जनस्य स्मरनरपतिलीलायौवराज्याभिषेकं व्यञ्जयति अञ्जसा तत्त्वेनैव तत्कथय। आदेशवर्त्तिसर्वलोकत्वात् स्मरो नरपतिस्तस्य कामिन्युद्वेगजननं लीलाकौतुकक्रिया तां योऽन्यः करोति स तत्प्रतिनिधीभूतस्तदीये यौवराज्येऽभिषिक्तः कस्य तादृशाभिषेकं व्यञ्जयति केन त्वमाक्रष्टेत्यर्थः। गण्डपाली कीदृशी अधिकरतलतल्पं करतलरूपे तल्पे कल्पिता स्वापरूपा लीला यया तादृशी तया परिमिलनं करतलस्यैव घर्षणं तेन निमीलन् पाण्डिमा पाण्डुत्वं यस्याः तादृशी विरहपाण्डौ गण्डे करतलघर्षणात् रक्तिमोदयेन पाण्डिमनिमीलनात्। अत्रेति उभयत्र विलासरूपार्थस्यैकलीलापदेनैवोक्तौ तात्पर्य्यग्राहकाभावात् सान्निध्याभावादनुप्रासस्याप्यभावात्। पतत्प्रकर्षमिति बहुश आरूढस्य प्रकर्षस्य प्रपाद वृक्षाग्रादिव पतनं तत्त्वम् अल्पारोहणे तु वृक्षमूलादिव पतनं न दोषः।

कः क इति। यत्र सिंह्यां स्नेहेन यो विलासः क्रीड़ा तेन बद्धवसतिः पर्य्यटन-

के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ॥

समाप्तपुनरात्तं यथा,

क्रेङ्कारः स्मरकार्मुकस्य, सुरतक्रीड़ापिकीनां रवः,
झङ्कारो रतिमञ्जरीमधुलिहां, लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥

---

रहितः पञ्चाननः सिंही वर्त्तते अतस्तद्वध्याः पशवो भयाभावेन कं कं स्वस्वव्यापारं न कुर्वते इति पादत्रयार्थः । घुर्घुरायिता घुर्घुरशब्दकारिणी घुरी नासिका तया घोणी घुरेत् पर्य्यटेत् । अत्रानुप्रासप्रकर्षपादत्रयारूढ़स्य चतुर्थपादे पातः । अत्र च शूकरादीनां चपलतारूपव्यभिचारिभावप्रकर्षस्य विघातोऽनुप्रासप्रकर्षपाताददो दुष्ट्यार्थ इति ।

समाप्तेति । क्रियाकर्मभावेन समाप्तेऽपि वाक्ये कस्यापि विशेषस्यानाधायक-विशेषणान्वयार्थं विशेष्यावृत्तिस्तत्त्वम् ।

क्रेङ्कार इति । मानिनीसम्भोगार्थं कस्यचित् कश्चित् प्रत्याशीरुक्तिरियम् । तन्व्याः कञ्चुलिकायाः स्तनपिधानपुटकस्यापसारणे यस्तस्या निषेधार्थं भुजक्षेपस्तत्र स्खलतां कङ्कणानां क्वाणः शब्दो वो युष्माकं प्रेम तनोतु युष्माभिः कञ्चुलिकाप-सारिण तन्व्या भुजक्षेपः क्रियतामित्यर्थः । क्वाणे रूपकाण्याह क्रेङ्कार इति । कार्मुका-स्फालनेऽव्यक्तशब्दस्यानुकरणं क्रेङ्कार इति सम्भावितोऽयमुद्दीपकः शब्दः सुरतो-द्दीपनार्थं पोषितानां पिकीनां रवः उत्तरोत्तरं प्रकाशमानत्वाद्रतिरेव मञ्जरी तत्प्र-काशकानां मधुलिहां झङ्कारः । उद्दीपकत्वेन तत्प्रकाशकता लीलार्थपोषितानां चकोरीणां ध्वनिः तथा नववयसो लास्याय वंशीस्वनः इत्यत्र तनोतु व इत्यन्तो वाक्यसमाप्तिः । रूप्यमाणतया विशेषणस्य वेणुस्वनस्यान्वयार्थं तद्गतस्य क्वाणस्य विशे-ष्यस्यावृत्तिः न च तद्रूपणे कस्यापि विशेषस्याधानम् उद्दीपकानां बहूनामेव रूपणेन पिष्टपेषणन्यायाद्रूपककृतविशेषे आकाङ्क्षाभावात् । एवञ्चोपमाकृतविशेषस्या-धानार्थम् उप शिञ्जल शिस्फन्देत्यादौ बलाकाया आवृत्तो न दोषः । तथा अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिक इत्यत्र वेपथुजननसामर्थ्यलाभाय प्रमाणा-

द्वितीयार्द्धगतैकवाचकशेषप्रथमार्द्धं यथा।

मसृणचरणपातं गम्यतां, भू: सदर्भा,
विरचय सिचयान्तं मूर्ध्नि, घर्म: कठोर:।
तदिति जनकपुत्री लोचनैरश्रुपूर्णै:
पथि पथिकवधूभि: शिक्षिता वीक्षिता च॥

---

धिकत्वविशेषणे हैमपल्लवविभङ्गसंस्तरान् सोऽन्वभूत् सुरतमर्दनक्षमानित्यत्र सुरतमर्दनक्षमत्वलाभाय तद्विशेषणदाने तत्र विशिष्याहत्तौ न दोष:। अर्द्धान्तरैकवाचकपदार्थं विहत्या न तद्दोषमाह।

द्वितीयेति। प्रथमार्द्धादन्तरं द्वितीयार्द्धं तद्गतमेकं वाचकमेकं पदं शेषं समापकं यस्य प्रथमार्द्धवाक्यस्येत्यर्थ:। एकपदात् पदद्वयस्य द्वितीयार्द्धगतत्वे दोषो नास्तीत्युक्तं कविसम्प्रदायानादृतत्वज्ञानादत्र रसापकर्षो हि दोषताबीजं तच्च तथात्वे नास्तीति भाव:।

मसृणेति। जनकपुत्री पथिकवधूभिरश्रुपूर्णैर्लोचनैर्वीक्षिता इति शिक्षिता च शिक्षणीयान्याह मसृणेति। यतो भू: सदर्भा तत्तस्मादल्पचरणपातं यथा स्यात्तथा गम्यतां तथा यतो घर्म आतप: कठोरस्तत्तस्मात् सिचयस्य वस्त्रस्यान्तं मूर्ध्नि विरचयेति शिक्षितेत्यर्थ:। अत्र तत्पदं प्रथमार्द्धवाक्ययो: यत्तद्घटितयो: समापकम्। अत्र द्वितीयार्द्धगतस्य तत्पदस्य यत्पदाक्षेपेणान्वयाभिप्रायेणेदमुदाहरणं दत्तं यदि तु तदिति। तदेतच्छिक्षितेत्यन्वय: तदात्र नायं दोष:। तदा च उदाहरणान्तरमन्वेष्टव्यं यथा। तस्या: कुचौ मदनभूपनिधानकुम्भौ तद्रक्षणाय तनुलोमलता भुजङ्गी। जागर्त्ति तां नखमणीभिरवीर्य्ययित्वा केनापि तौ परमभाग्यवताद्य लब्धाविति॥ अत्र हि जागर्त्तीति द्वितीयार्द्धगतम् एतां भुवं नखमणीभिरिति पठनीयम्। अत्र चक्रवर्त्ती अर्द्धपदं विच्छेदपरं तेन जगाम सुन्दरी नारी कुञ्जं यस्या दिनं निशेत्यत्र कुञ्जमित्यस्य द्वितीयविच्छेदगतत्वेऽपि दोष इति तन्न कविसम्प्रदायविरोधस्य तत्र सत्त्वे प्रमाणाभावात् तथात्वेऽपि तद्विरोधसत्त्वे त्वं मुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनीत्यत्रापि ग्रन्थकृता दोष: प्रदर्श्येत लक्ष्मीमित्यस्य द्वितीयविच्छेदगतत्वात्।

अभवन् मतः इष्टः योगः सम्बन्धः यत्र, तत् यथा,

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुङ्कृतयः कृतामरपतिक्षोभाः क्षपाचारिणाम्,
किन्तैस्तत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ॥

अत्र "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन यैरि-

---

अभवन्मतयोगदोषं तत्संज्ञाव्युत्पत्तिदर्शनेनाह अभवन्निति। असम्भवन् इष्टयोगश्च वाच्यपदार्थयोः वाच्यव्यङ्ग्ययोश्च बोध्यः। असम्भवश्च उपात्तपदस्य विभक्तिव्यत्ययं विनाऽन्वये निराकाङ्क्षत्वे समासासमासयोरन्वये निराकाङ्क्षत्वे वाच्यव्यङ्ग्ययोर्विवक्षितान्वयस्याप्रतीयमानत्वे च बोध्यः। अत्र विभक्तिव्यत्ययं विना उपात्तपदस्य निराकाङ्क्षत्वे उदाहरति येषामिति लङ्कादाहेऽकृतपौरुषराक्षसनिन्दोक्तिरियम्।

येषां क्षपाचारिणां प्रतापोष्मभिरित्यन्वयः। तैः क्षपाचारिभिः प्रवादोचितं स्वस्वख्यात्युचितं किं तस्य रावणस्य परितोषकारि कर्म विहितमित्यन्वयः।

अत्र येषां हुङ्कृतय इत्यत्रैव क्षपाचारिणामित्यस्यान्वयो न तु तत्पूर्वपठिते यैरित्यत्र भिन्नविभक्तिकयोरभेदान्वये निराकाङ्क्षत्वादित्यन्वयोऽभवन्मतयोगं परोक्तसंवादेन दर्शयितुं परोक्तवाक्यमाह।

गुणानामिति। गुणानां विशेषणानां परार्थत्वाद्विशेष्यतो भिन्नविभक्तिकत्वेन परार्थत्वादर्थभेदादसम्बन्धोऽभेदान्वयाभावः समत्वात् समविभक्तिकत्वात्तु सम्बन्धः स्यादिति यदुक्तं मतं तन्नयेन तन्मतानुसारेणेत्यर्थः। विशेष्याप्रतीतिरिति। विशेष्यपदत्वेनाभिमतस्य क्षपाचारिणामित्यस्य षष्ठ्यन्तत्वादित्यर्थः। ननु विशेष्यविशेषणयोरेवाभेदान्वये समानविभक्तिकतानियमो न तु विशेषणानां परस्परान्वये तथाच यच्छब्दत्रयनिर्देश्यानामर्थानामेव परस्परं समन्वयोऽस्तु न तु क्षपाचारिणामित्यत्रेत्यत आह।

यच्छब्देति। विशेषणानां विशेष्यद्वारैव परस्परसमन्वयो न तु साक्षादिति। तेषां परस्परसमन्वये च सतीत्यर्थः। न च विभक्तिव्यत्यासादन्वयोऽस्त्विति वाच्यम्। चैत-

त्यत्र विशेष्यस्याप्रतीतिरिति। श्वपाचारिभिरिति पाठे युज्यते समन्वय:। यथा वा,

त्वमेवंसौन्दर्य्या, सच रुचिरतायाः परिचितः,
कलानां सीमानं परमिह युवामेव भजथ:।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे! संवदति वाम्,
अत: शेषं यत् स्याज्जितमिह तदानीं गुणितया॥

---

मैत्री गतौ देवदत्तश्चेत्यत्रैव प्रथममन्वितस्यैव पश्चादन्वयार्थं व्यत्ययदर्शनात् न तु पश्चादन्वितस्य प्रथममन्वयार्थं न हि देवदत्तश्चैवमैत्री च गताविति भवति। श्वपाचारिभिरिति पाठे इति न च तथापि येषामित्यत्र विशेष्याप्रतीतितादवस्थ्यमिति वाच्यम्। तैरित्यत्र देवदत्ते विभक्तिव्यत्ययेनान्वय इवात्रापि विभक्तिव्यत्ययेनान्वयः स्यादिति वाच्यम्। प्रथमवाक्यस्थपदार्थे प्रथममन्वयबोधे सति पश्चादुक्तपदार्थे व्यत्ययेनान्वयः सम्भवत्येव। यथा दर्शितस्थले जनितान्वयबोधचरमवाक्यस्थपदस्य तु प्रथमोक्तपदार्थान्वयार्थं व्यत्ययासम्भवात्। न हि चैवमैत्री गतौ देवदत्त इत्युक्ते गत इत्यस्य व्यत्ययेन चैत्रमैत्रयोरन्वयः सम्भवति। अतोऽत्र यैरित्युक्त्वा येषां हुङ्कृतय इति पश्चादुक्तजनितान्वयबोधवाक्यस्थस्य श्वपाचारिणामित्यस्य व्यत्ययासम्भव एव। योग्यताविरहादभवन्मतयोगमाह।

यथा वा त्वमेवमिति। योग्यवरेण परिणीतां सुन्दरीं प्रति तदुभयप्रशंसावाक्यमिदम्। एवं सौन्दर्य्यं यस्यां त्वं तादृशी, स तव पतिश्च रुचिरतायाः सौन्दर्य्यस्य परिचितः सम्बन्धी कलानां विदग्धचातुरीणां सीमानं पर्य्यन्तं पराकाष्ठां परं केवलम् इह जगति युवामेव भजथो नान्यः। परंशब्दैवकारयोः समभिव्याहारेऽन्यतरवैयर्थ्यमिति न्यायादवैयर्थ्यं स्थण्डिल एव केवल इतिवत्। अपि सम्भावनायां, तस्मात् युवयोर्द्वन्द्वं दिष्ट्या भाग्येन संवदति संवादं गच्छति मिथो योग्यतां लभत इति यावत्। अत: परस्परयोग्यप्राप्ते: शेष: पश्चात् यत् स्यात् अर्थात् प्रेमानुबन्धरूपं यत् स्यात् तदानीं गुणितया जितं गुणिताया एव तत्र जय उत्कर्ष इत्यर्थ:।

अत्र यत् स्यादित्यत्र यच्छब्दार्थः प्रेमानुबन्धः पर्य्यवसितः तदानींशब्दार्थस्तु कालः यत्तदर्थयोरेकधर्मिबोधकतानियमात् तयोरभेदान्वयो मतयोगः स इति

अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति। चेत् स्यादिति युक्तः पाठः। यथा वा,

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम्।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलम्,
तेन त्वं, भवता च कीर्त्तिरतुला कीर्त्त्या च लोकत्रयम्॥

अत्र आकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादि—

---

योग्यताविरहादभवन्निति दोषः स्फुट एव तत्र चोक्तयत्ततदानींशब्दार्थयोरन्वयं विना स्वस्वान्वययोग्यपदार्थान्वये सत्ययं दोषो न स्यात् तदेव तु पदं नोक्तमित्याह।

अत्रेति। नास्तीति तत्सत्त्वे तु यद्यदा स्यात् तदानीं तव गुणितया जितमिति। स्वस्वान्वययोग्यपदार्थे तयोरन्वयान्नायं दोषः स्यादिति भावः। न चैवं न्यूनपदत्वमेवेति वाच्यम्। यत् स्यादित्युक्त्यनन्तरं तदानीमिति समभिव्याहारात् तवैव तद्योगस्य सतत्वावधारणात् तद्भूमिरपि त्वया प्राप्तत्वेन समस्तभूमण्डलस्य त्वया प्राप्तत्वात् कीर्त्तिरत्र भूमण्डलप्राप्तिलब्धधनवितरणात् न तु भूमण्डलप्राप्तिख्यातिरेव कीर्त्तिः शौर्य्याधीनकर्मणा ख्यातिः प्रतापरूपत्वादेव। अत्र येन येन यद्‌यत् समासादितं तत् तदाकर्णयेत्युक्ते किं किमाकर्णयामीति वा केन केन किं किमासादितमिति वा आकाङ्क्षायां पराङ्गोत्थानं वाच्यम्। द्वितीयाकाङ्क्षायां पराङ्गोत्थाने प्रकृतं दोषं दास्यन् प्रथमाकाङ्क्षायां तदुत्थानं व्यावर्त्तयति अत्राकर्णनेति। किं किमाकर्णयामीत्याकाङ्क्षायां कोदण्डादीनाम् आकर्णनकर्मणां द्वितीयान्तपदनिर्देश्यत्वापत्तेरित्यर्थः। इत्यादीति प्राप्तमित्यर्थेऽन्वयः अथ येन येन यद्‌यत्समासादितमिति।

वाक्यार्थ एवाकर्णयेत्यस्य कर्म वाच्यं तद्वाक्यार्थप्रविष्टपदार्थकथनमात्रन्तु कोदण्डेनेत्यादिकमित्युच्यते तत्राह वाक्यार्थस्येति यदुक्तवाक्यार्थः कर्म तदा तत्प्रविष्टपदार्थानां प्रथमान्तपदेनैव कथनौचित्यमित्यर्थः। यथा,

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥ इत्यत्र आहुः।

इत्यस्य कर्मणि महान्ति पातकानीति। वाक्यार्थे प्रविष्टानां पातकानां ब्रह्महत्येत्यादिप्रथमान्तपदेन कथनम्। अथ येन येन यद्यदिति तृतीयान्तप्रथमान्त-

वाक्यार्थस्य कर्मत्वे कोदण्डः शरा इति प्राप्तम्। न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि। न च केन केनेत्यादिप्रश्नः।

यथा वा, "चापाचार्य्यस्त्रिपुरविजयी" इत्यादौ भार्गवस्य निन्दायां तात्पर्य्यं, कृतवतेति परशौ सा प्रतीयते। कृतवत इति तु पाठे मतयोगो भवति। यथा वा,

चत्वारो वयमृत्विजः, स भगवान् कर्मोपदेष्टा हरिः,
सङ्ग्रामाध्वरदीक्षितो नरपतिः, पत्नी गृहीतव्रता।

---

यत्पदानामर्था एव कोदण्डेनेत्यादितृतीयान्तप्रथमान्तपदार्था इत्युच्यते तत्राह न च यच्छब्दार्थ इति कोदण्डादीत्यग्रेऽन्वयः कोदण्डत्वादिरूपेण यच्छब्दादप्रतीतेस्तेषां तदर्थत्वाभावादित्यर्थः। अथ यच्छब्दार्था विशेषणानि कोदण्डादयस्तु तेषां विशेष्या इत्युच्यते तत्राह तद्विशेषणं वेति यत्पदार्थविशेषणकं वेत्यर्थः।

बहुव्रीहिणा कोदण्डादेर्विशेष्यता बोध्या तदा च बहुवचनान्तशरपदार्थस्य यद्यदित्येकवचनान्तपदार्थस्य च विशेष्यविशेषणभावानुपपत्तिरिति भावः। एवञ्च केन केन किं किमासादितमिति प्रश्न एव राज्ञ उत्थानं वाच्यं तत्राह न च केनेत्यादीति। आदिना किं किमासादितमित्येतत्पर्य्यन्तं प्रश्नशरीरं बोध्यम्। तथाचैवं सक्रियप्रश्ने कोदण्डेनेत्याद्युत्तरेऽपि आसादितमिति क्रियाया अनुषङ्गेणान्वयो वाच्यः स च न सम्भवति शरा इति बहुवचनान्तपदार्थे आसादितमित्येकवचनान्तपदार्थान्वयासम्भवादिति भावः। न च चैत्रमैत्रौ गतौ देवदत्तश्चेत्यादाविव व्यत्ययेनान्वयः स्यादिति वाच्यम्। तत्र चकारस्येवात्र व्यत्ययग्राहकाकाङ्क्षोत्थापकाभावात् न चान्वयानुपपत्तिरेवात्र तदुत्थापिकेति वाच्यम्। तदा देवदत्तो गच्छति चैत्रमैत्रावित्यत्राप्याकाङ्क्षोत्थानप्रसङ्गात् चैत्रमैत्रौ चेत्युक्तौ तु चकार एव तदुत्थापक इति भावः। वाच्यार्थव्यङ्ग्यार्थयोर्मतयोगस्याप्यसम्भवमुदाहरति।

यथा वा, चापाचार्य्य इति व्याख्यातमिदं पदैकदेशवाचके। परशौ सेति। परशोरेव निन्द्यकर्मकारित्वकथनादिति भावः। तथाच भार्गवे निन्दायोगो मतोऽप्रतीयमानत्वादेव न सम्भवतीति भावः। समासासमासयोरन्वये निराकाङ्क्षतमाऽभवन्मतयोगमाह।

कौरव्याः पशवः, प्रियापरिभवक्लेशोपशान्तिः फलम्,
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते। यथा वा,

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ॥
भर्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः।

---

यथा वा चत्वारो वयमिति। रणस्थले दुन्दुभिशब्दस्य हेतोः भीमेन पृष्टे सहदेवस्योक्तिरियम्। सङ्ग्रामरूपो राजसूयाध्वरो भविष्यति तत्र राजन्यानां राज्ञामुपनिमन्त्रणाय यशःप्रकाशको दुन्दभिः स्फीतमुद्धतं यथा स्यात्तथा रसतीत्यर्थः तत्राध्वरे सामग्रीं दर्शयति।

चत्वार इति। वयं भीमाद्याश्चत्वारो भ्रातरः पत्नी द्रौपदी व्रतमेकस्त्वं कवेणीधरणं प्रियापरिभवो द्रौपद्याः केशाकर्षणवस्त्राकर्षणरूपः।

अत्रेति। गुणीभूतः समासैकदेशत्वात् न च चैत्रस्य दासभार्येत्यादौ समासैकदेशे दासे कथं चैत्रस्यान्वय इति वाच्यम्। समासे विशेषणीभूतस्य दासस्यासमासस्थं स्वविशेषणीभूतं चैत्रं प्रति विशेष्यभावेनान्वयस्य व्युत्पत्तिसिद्धत्वात् असमासस्थविशेष्यान्तरं प्रति तस्य विशेषणभावेनैवान्वयस्याव्युत्पन्नत्वात् न हि चैत्रगृहं पुत्रश्चेत्युक्तौ समासे गृहविशेषणीभूतस्य चैत्रस्य पुत्रेऽपि विशेषणतयाऽन्वयः सम्भवति तद्वदत्रापि समासे दीक्षितविशेषणीभूतस्याध्वरशब्दार्थस्य ऋत्विगादौ विशेषणतयाऽन्वयासम्भव एवेति बोध्यम्। ससम्बन्धिकपदार्थस्य सम्बन्धिविशेष एवान्वयोऽन्यत्र तु सतोऽप्यसावसम्भवन्नेव भवतीति दर्शयति यथा।

जङ्घाकाण्डेति। व्याख्यातमिदं प्राक्। अत्रेत्यादि निजस्वादिशब्दार्थानां प्रधानक्रियान्वयिन्येवान्वयस्य व्युत्पन्नत्वात् जयति क्रियान्वयिदण्डपादनीयमित्यर्थः। तेनानुक्तस्यावश्यवक्तव्यस्याध्याहारासम्भवादध्याहारेणाऽप्यप्रतिपादनीयत्व एवायं दोषः अतोऽध्याहारेण प्रतिपादनीयार्थात्न्यूनपदादस्य भेदः।

अत्र दण्डग्राहकता निजतनुः प्रतीयते, अत्रान्याः सम्बन्धिनी तु विवक्षिता। अवश्यं वक्तव्यमनुक्तं यत्र, यथा,

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैरपहृतस्य तथापि नास्था।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः॥

अत्र अपहृतोऽस्मीत्यपहृतत्वस्य विधिर्वाच्यः। तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः। यथा वा,

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्त्ती।

---

अप्राकृतस्येति। कृतधनुर्भङ्गे रामेऽतिमानुषवृत्तित्वादनिर्वचनीयपुरुषत्वं सम्भावयतो जनकस्योक्तिरियम्। चकारोऽवाप्यर्थे दृष्टैश्चरितातिशयैरपहृतस्य प्राकृतस्यापि मम दशरथपुत्त्र एव एतत् कृतमित्यास्था तथापि नेत्यर्थः। तर्हि आस्थाभावात् किं सम्भावयसीत्यत आह कोऽपीति वीरशिशुकाकृतिः कोऽप्येष पदार्थः अप्रमेयोऽनुपमेयो माहात्म्यसाराणां समुदायस्तन्मयस्तत्स्वरूपः। अत्र पूर्ववाक्यस्य यद्यपि काराद्योग्यत्व एव तथापिकारवत्युक्तिः सम्भवतीत्यतः पूर्ववाक्यं यद्यपिकारान्वययोग्यावश्यं वक्तव्यं तद्वाक्यस्य षष्ठ्यन्तत्वे तु निराकाङ्क्षत्वाभावेन तद्योग्यता नास्ति अतः पूर्ववाक्यनिराकाङ्क्षमवश्यं वाच्यमित्यत आह।

अत्रेति। अपहृतत्वं विधेयं हृतोऽस्मीति क्रियमाण एव निराकाङ्क्षता स्यादित्यर्थः। विधिर्विधेयत्वं तदाचाप्राकृतादावपि प्रथमैव वाच्येति बोध्यम्। दृष्टातीरवापपूर्वत्वाभावेऽपि अर्थवशादपहृतस्येत्युक्तम्। अत्र षष्ठ्यन्तपदसत्त्वे प्रथमान्तकर्त्रन्वययोग्यस्यास्मीत्यस्याध्याहारासम्भवादनभिहितवाच्यत्वं न न्यूनपदत्वम्। नन्वत्र षष्ठ्यन्तवाक्ये तथापीत्यस्य निराकाङ्क्षतयाऽन्वयासम्भवादभवन्मतयोगदोषोऽपि सम्भवत्यतस्तदसङ्कीर्णमुदाहरति यथा वा।

एषोऽहमिति। स्वप्ने निभृतम् उषाऽनिरुद्धयोः समागमाय पार्वत्या वाङ्मात्रनिष्पादितस्य कस्यापि पुरुषस्य तत्कर्मनिष्पाद्यागतस्योक्तिरियम्। अनिरुद्धेन सह

स्वप्नेऽनिरुद्धघटनाधिगताभिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥

अत्र मनोरथानामपि दूरवर्त्तीत्यप्यर्थो वाच्यः। यथा वा,

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः।
कमपराधलवं मम पश्यसि ? त्यजसि मानिनि ! दासजनं यतः।

अत्र अपराधस्य लवमपीति वाच्यम्। अस्थानस्थपदं यथा,

---

घटनया प्राप्तमाभिरूप्यं लक्ष्म्याः सौन्दर्यश्रियः फलं यया असुरराजस्य वाणस्य सुतामूषां स्वप्ने तादृशीं विधाय एषोऽहं प्राप्त आगतः। कीदृशः अद्रितनयाया मुखपद्माज्जन्म यस्य तादृशः दाम्पत्यघटनाया विधिकार्य्यत्वात्तत्तुल्यताप्रतिपादनाय पद्मजन्मेत्युक्तं तथा सुरासुराणां मन एव शीघ्रगामित्वाद्रथस्तद्दूरवर्त्ती गुप्तकार्य्यकारित्वात् सुरासुरैर्मनसापि न ज्ञात इत्यर्थः।

अत्रेति। सर्वेन्द्रियागोचरत्व एव गुप्तकार्य्यकारित्वप्राप्तिः स्यादत इन्द्रियान्तरसमुच्चयायापिकारोऽवश्यवक्तव्य इत्यर्थः। इदमुपलक्षणं सुरासुराणामपीत्यपि वाच्यम्। अन्यथा मनुष्येन्द्रियागोचरत्वालाभात् अत्र समासमध्येऽपिकाराध्याहारासम्भवात् प्रकृत एव दोषो न न्यूनपदता अतोऽसमासेनापिकारं प्रवेश्यावश्यवक्तव्यं दर्शयति।

मनोरथानामपीति। प्रपञ्चयति यथा

त्वयि निबद्धेति। प्रणयो वात्सल्यम् अपराधलवम् अपराधस्य कणम्।

अत्रेति। अपराधीयस्थूलभागसमुच्चयाय तथा वाच्यत्वात् न चापराधलवमपीत्येवमप्यपिकाराध्याहारः सम्भवत्येव इत्यतोऽत्र न्यूनपदत्वमेवेति वाच्यम्। अपराधस्य समासैकदेशत्वेऽपिकारेण तदीयस्थूलभागसमुच्चयाप्रत्यायनात् वस्त्वन्तरसमुच्चयस्यैव तथात्वे प्रतीतेः अतएव षष्ठ्यन्ततया दर्शयति अत्रापराधस्य लवमपीति। अस्थानस्थेति स्वार्थानन्वयिन्या स्ववाक्यीयक्रियया भिन्नवाक्यीयपदेन वा स्वार्थान्वयव्यवधानाभावे सत्ययुक्तस्थानपतितेन पदान्तरोत्तरपातितानियमरहितेन पदेन विशिष्टं यद्वाक्यं तत्त्वम्। क्लिष्टे स्वार्थानन्वयिन्या स्ववाक्यीयक्रियया सङ्कीर्णगर्भितयोस्तु भिन्नवाक्यीयपदेन व्यवधानान्न तदुभयोरतिप्रसङ्गः। अक्रमदोषे तु अस्थानपतितं पदं पदान्तरोत्तरपातितानियमवदिति न तत्राप्यतिप्रसङ्गः।

प्रियेण सङ्ग्रथ्य विपक्षसन्निधौ
उपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलाम्,
वसन्ति हि प्रेम्णि गुणा न वस्तुनि॥

अत्र काचिन्न विजहाविति वाच्यम्। यथा वा,

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम्।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीड़या
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः॥

---

प्रियेणेति। जलक्रीड़ावर्णनमिदं सङ्ग्रथ्य प्रियेण विपक्षस्य सपत्नीजनस्य सन्निधौ पीवरस्तने वक्षसि उपाहितां दत्तां जलाविलामपि काचिन्न विजहावित्यन्वयः। अत्यागे विपक्षेत्यादिकं हेतुः तदेव समर्थयति वसन्ति हीति प्रेमसत्त्वे गुणग्रहात्तद-सत्त्वे च तदग्रहाद्वस्तुवृत्तेरपि गुणस्य प्रेमहत्तितयाऽध्यासादिदमुक्तम्।

अत्रेति। विजहावित्येतदन्वयिनी नञर्थस्य तत्सन्निधौ आकाङ्क्षितस्य काचि-दिति एतत्पूर्वं समभिव्याहृतत्वात् न काचिदिति समजननादनाकाङ्क्षितस्थान-स्थता अक्रमदोषस्य तु पदान्तरोत्तरपातनियतपदघटितत्वादिती भेदः।

ननु लक्षणे स्वार्थानन्वयीत्यादिप्रवेशो निष्फलः इदन्तु वरं क्लिष्टत्वोदाहरणमेवा-स्त्वित्यतो व्यवधानाभावेऽप्यस्थानस्थपदत्वं द्वितीयं दर्शयति।

लग्न इति। शितिकन्धरस्य महेशस्य इन्दुशकलेन चन्द्रखण्डेन निद्रान्तरे निद्रा-कालेऽन्तःकपोलस्थलं कपोलस्थलस्य मध्ये लग्नोऽर्पितो मुद्राङ्कः स्वचिह्नं पार्वत्या प्रोन्मृष्टो वः पातु। मुद्राङ्कः कीदृशः कुटिला आताम्रा च छविर्यस्य पार्वत्या प्रोन्मार्ज-नहेतुमाह। नखलक्ष्मेति। शङ्कितेत्यस्यर्थे इतच्। तथा च नखलक्ष्मशङ्काविशि-ष्टानां सखीनामयाङ्काविना नर्मस्मितेन या पार्वत्या व्रीड़ा तयेत्यर्थः। बहुव्रीहिणा-पार्वतीविशेषणं वा हेतुगर्भमिदं कुटिलाताम्रच्छवित्वेन नखलक्ष्मशङ्का पार्वत्यैव पत्युः कपोले नखलक्ष्म क्षतमिति कृत्वा सखीनां नर्मस्मितं भविष्यतीति व्रीड़ोत्पाद-भयात् प्रोन्मार्जनं लग्न इत्यन्तर्भूतकारितार्थम् इन्दुशकलेन कीदृशेन केशौ यः पार्वती-

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिलाताम्रेति वाच्यम्। अस्थानस्थसमासं यथा,

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः, कवेरुक्तौ तु कृतः।

सङ्कीर्णं यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति। यथा,

---

कृतः कचग्रहस्तेन श्यया जटया लम्बेन ललाटात् लम्बमानेन अतः कपोलप्राप्त्या चिह्नार्पणम्।

अत्रेति। नखलक्ष्मशङ्का तावत् कुटिलाताम्रच्छविलज्ञानादेव भवतीति तदर्थं प्राक्तननिर्देश एवाकाङ्क्षित इति भावः।

अस्थानस्थेति। यत्र पद्ये यद्व्यञ्जकौ यः समासस्तत्र पद्ये तद्व्यञ्जकस्थानपरिहारेण तत्समासकरणं तत्त्वम्। अद्यापीत्यादि सन्ध्यायां चन्द्रवर्णनमिदं उद्यन्नच्छन् शशी फुल्लतः कोषान्निःसरन्ती अलिश्रेण्येव कृपाणः खङ्गस्तं कर्षति कोषोऽस्त्री कुड्मले पात्रे दिव्यखड्गपिधानके इति कोषात्। कुड्मल एव दिव्यखड्गपिधानमिति श्लिष्टरूपकम्। शशी कीदृशः दूरतरे प्रसारितः करो रश्मिरेव करो हस्तः दूरतरे प्रसारितत्वः खड्गकर्षणेऽपि हस्तस्य दूरप्रसारणात् खड्गकर्षणे हेतुमाह।

अद्यापीति। स्तनशैलरूपं दुर्गमाश्रित्य मम शत्रुसीमन्तिनीनां हृदि मानोऽन्यदा तावत् तिष्ठतु अद्यापि अधुना ममोदयकालेऽपि तत्र स्थातुं वाञ्छति तस्मान्मां धिक् इत्यतः क्रोधादिवालोहितः कर्षतीत्यर्थः।

अत्रेति। समासो दीर्घसमासः तस्य क्रोधस्थायिभावकरौद्ररसनिष्ठौजोगुणव्यञ्जकत्वेन क्रोधव्यञ्जकवाक्यमेव तस्य स्थानं न कविवाक्यमित्यर्थः। धिक्पर्यन्तं क्रुद्धस्य चन्द्रस्योक्तिः। अत्र कृतस्य समासस्यैवास्थानपाते कवेरसमीचीनवक्तृकत्वज्ञानजननाद्रसप्रकर्षविघातकत्वेनायं दोषः तादृशः समासासत्त्वे तु नायं दोषः। किन्तु

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम्।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम्॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं मुञ्चेति। एकवाक्यतायान्तु क्लिष्टमिति भेदः।

गर्भितं, यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति। यथा,

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः।
वदामि भवतस्तत्त्वं न विधेया कदाचन॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः। यथा वा,

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे,
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किञ्चिद्गणयति, विदितं तेऽस्तु, तेनास्मि दत्ता
भृत्येभ्यः, श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्त्तिः॥

---

प्रतिकूलवर्णतेव वर्णपदस्य तच्च समासस्याप्युपलक्षणत्वेनादीर्घसमासस्यापि रौद्रे प्रतिकूलवर्णनात् सङ्कीर्णमिति एकवाक्यान्तरान्यवाक्यीयपदप्रवेशे सङ्कीर्णता अन्यवाक्यस्यैव प्रवेशे तु वक्ष्यमाणं गर्भितत्वमिति भेदः।

किमित्यादिकं वृत्तावेव व्याख्यातम्। ननु क्लिष्टमेवेदमित्यत आह एकवाक्यतायामिति।

गर्भितमिति। सङ्कीर्णादस्य भेद उक्त एव। उभयत्रैव विवक्षितार्थस्य विलम्बेन प्रतीति र्दोषतावीजम्। परापकारेति। दुर्जनैः सह सङ्गतिः कदापि भवता न विधेया इदं तत्त्वं भवतः स्थाने वदामीत्यन्वयः। पल्लवयति।

यथा वा लग्नमित्यादि। यस्य राज्ञः कीर्त्तिः स्त्रीलिङ्गशब्दार्थत्वात् स्त्रीत्वेनाध्यासितयोः श्रियो नियोगादिति गदितुमिवाम्बुधिं श्रीपितरं गता समुद्रपर्य्यन्तगामिनी यस्य कीर्त्तिरिति भावः। किं गदितुमित्यत्राह लग्नमिति स्त्रीलिङ्गशब्दार्थत्वात् स्त्रीत्वेनाध्यासितया यया असियष्ट्या इह जगति अरिकण्ठ एव सुदृढं लग्नं कीदृश्या रागी रुधिररक्तिमैव रागोऽनुरागस्तदावृताङ्ग्या या च इह जगति

अत्र विदितं तेऽस्त्विति, एतत्कृतं प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत्।

मञ्जीरादिषु रणितप्रायं, पक्षिषु च कूजितप्रभृति,

स्तनितमणितादि सुरते, मेघादिषु गर्जितप्रमुखम्" ॥ इति प्रसिद्धिमतिक्रान्तं, यथा,

---

मातङ्गानां हस्तिनामिव मातङ्गानां श्विञ्जानामुपरि पतन्ती परपुरुषैः शत्रुपुरुषैरेव साचितायोग्यप्रकृष्टपुरुषैर्दृष्टा तस्यां दर्शितव्यभिचारायामसियष्टिरूपायां नायिकायां सत्योऽयं राजा किञ्चिदकार्य्यमन्यस्मिन् मम प्रदानरूपमकार्य्यं न गणयति तेन तद्गणनरूपेण हेतुना भूत्यैभ्यो दत्तास्मि इति ते विदितमस्त्विति गदितुमिवेत्यर्थः। अथ चासियष्टिहस्तः किञ्चिदपि शचीबलं न गणयति तेन दृप्तत्वात् भृत्या अपि श्रीमन्तः कृता इति व्याजस्तुतिः। न च रागाद्वृताङ्गा अरिकण्ठलग्नकथनेऽरिकण्ठलग्नात् प्रागेव रागाद्वृतत्वधीः कथमुपपद्यतामिति वाच्यम्। प्रथमलग्नीत्तरलग्ने तदुपपत्तेः।

अत्रेति। कृतमिति गर्भितं कृतमित्यर्थः। न च गणयतीत्यन्तमेकं वाक्यं तेनास्मीत्यपरं वाक्यं तन्मध्ये पतितं विदितं तेऽस्त्विति कथं गर्भितमिति वाच्यम्। तेनेत्यनेन तद्गणनपरामर्शात् एकवाक्यतापन्नत्वात् यदि च तेन राज्ञा दत्तास्मि इत्यर्थः तथापि पूर्वोक्तकर्त्तुः परामर्शादेकवाक्यतैवेति भावात्। ननु दृढप्रत्यायने गर्भितं न दोष इति स्वयमेव वक्ष्यते प्रकृतेऽपि पितुः साचीकरणे दृढप्रत्यायनमभिप्रेतमेव तत गर्भे तं दोष इति अतोऽत्र दृढप्रत्यायनाभिप्रायकत्वे प्रत्युत दोषान्तरापादकत्वमेवेत्याह।

प्रत्युतेति। दृढप्रत्यायनार्थं तदुपादाने विरुद्धमतिकृद्दैव स्यादित्यर्थः। वक्ष्यमाणः प्रकाशितविरुद्धमतिकृदिति भावः। उक्तविरुद्धमतिकृद्दोषस्त्वत्र न बोध्यः। पदद्वयसमभिव्याहारवशाद्यङ्गरूपविरुद्धमतिकारित्व एव तदवसानात् अत्र तु वाक्यार्थपर्य्यालोचनया विरुद्धार्थस्य मानसबोधविषयत्वात् पर्य्यालोचनया विलम्ब एव तद्बोधस्य मानसत्वे प्रमाणं प्रसिद्धिहतदोषं दर्शयितुम् आदौ प्रसिद्धिं दर्शयति मञ्जीरेति शब्दसामान्यवाचकस्यापि पदस्य सम्बन्धिविशेषशब्द एव प्रसिद्धिरित्याह।

मञ्जीरेति। मञ्जीरादिषु सम्बन्धिषु यः शब्दस्तस्मिन् रणितप्रायं पदम् प्रसिद्ध-

महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥

अत्र रवो मण्डूकादिषु प्रसिद्धो न तु उक्तविशेषणके सिंह-नादे। भग्नः प्रक्रमः प्रस्तावः यत्र यथा,

नाथे निशाया नियतेर्नियोगात् अस्तं गते हन्त निशाऽपि याता
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति॥

---

मित्यर्थः। प्रायपदं प्रभृत्यर्थकं तेन शिञ्जितादिपरिग्रहः एवमुत्तरत्रापि एवञ्च रव-पदमपि दुर्बलमन्वन्धिशब्द एव प्रसिद्धमित्यभिप्रेत्य वीराणां सिंहनादे प्रसिद्धरतिक्रान्तं रवशब्दं दूषयति।

महाप्रलयेति। रणस्थले सिंहनादं श्रुत्वा भीमस्योक्तिरियम्। महता प्रलय-कालीनमारुतेन क्षुभितानां पुष्करावर्त्तकनामधेयानां महामेघानां प्रचण्डानि घनानि च यानि गर्जितानि तेषां प्रतिरुतानामनुकारी सदृशो रवः पुरः समरोदधेः कुतोऽद्य मुहुर्भवतीत्यर्थः। द्यावापृथिव्योरन्तराले रोदसी स्थगित आच्छादितः तादृशः कन्दरो येन तादृशः पूर्वमभूतोऽभूतपूर्वः मण्डूकादिषु सम्बन्धिषु उक्तविशे-षणे महाप्रलय इत्यादिविशेषणविशिष्टे। भग्नप्रक्रममाह।

भग्न इति। प्रस्तावः प्रकरणोचितो निर्देशः अनेकेषु वक्तव्येषु प्रथममेकस्मिन्नुक्ते तदुत्तरवक्तव्यस्य यादृशी बुभुत्सा जायते तत्र तथानिर्देशे प्रक्रमभङ्ग इत्यर्थः। न तु प्रक्रान्तरूपेणैवानिर्देशे तद्भङ्ग इति भ्रमः कार्य्यः। वक्ष्यमाणे महीभृत इत्यादौ प्रक्रान्त-सामान्यान्तर्गतविशेषरूपेणानिर्देश एव तद्भङ्गात्। नाथे निशाया इति नियते-रदृष्टस्य नियोगात् आदेशात् निशाया नाथे चन्द्रेऽस्तं गते सति हन्त खेदे निशापि यतोऽस्तमित्यनुसङ्गः। तत्रार्थान्तरं न्यस्यति। कुलाङ्गनानामिति। दशा वैधव्य-दशा नातःपरं नाथानुगमनात्परं भद्रतरं समस्ति नास्तीत्यर्थः। अत्र निशाया अस्त-गमनं निशापीत्यपिना समुच्चीयते अतः प्रक्रान्तगमधातुनैव निर्देशे बुभुत्सा तेनोत्पा-दिता धातुभेदेनैतत्कथने आपाततः पूर्वोक्तरूपभेदावभासेन ततस्तद्बुभुत्साऽनिवृत्ते र्या धातुना तन्निर्देशात्तत्प्रक्रमभङ्ग इत्यर्थः।

अत्र गतेति प्रक्रान्ते यातेति प्रकृतेः। गता निशाऽपीति तु युक्तम्। ननु नैकं पदं द्विःप्रयोज्यं प्रायेण, इत्यन्यत्र कथितपदं दुष्टमिति चेहैवोक्तं, तत्कथमेकस्य पदस्य द्विःप्रयोगः? उच्यते, उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य तद्वति विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। तथाहि,

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता॥

अत्र रक्त एवास्तमेतीति यदि क्रियेत, तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति। यथा वा,

यशोऽधिगन्तुं, सुखलिप्सया वा, मनुष्यसङ्ख्यामतिवर्त्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः॥

---

अन्यत्रेति। वामन इत्यर्थः। इहैव प्रकृतग्रन्थ एव। उद्देश्यप्रतिनिर्देश्येति यः प्रथमं निर्दिष्टः स उद्देश्यः स एव प्रतिनिर्देश्यतया यत्र बुभुत्सितस्तद्व्यतिरिक्त इत्यर्थः। तथाचात्रापि गमनमुद्दिष्टं प्रतिनिर्देश्यं तथाचापिना जनितबुभुत्साकं तद्व्यतिरिक्त एव विषयः कथितपदनिषेधस्येति दर्शितम्। तद्वतीति उद्देश्यप्रतिनिर्देश्यत्ववतीत्यर्थः। दोष इति आपाततोऽर्थान्तरतावभासरूप इत्यर्थः। अयं भावः न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते इति नियमाच्छब्देनोपस्थाप्यमानोऽर्थः। शब्दविशिष्ट एव भासते अतः शब्दभेदेनोपादाने तत्तच्छब्दविशिष्टेऽर्थे भासमाने विभिन्नशब्दरूपविशेषणभेदाद्भेदावभास इति। सर्वनाम्नापि पूर्वोपात्तशब्दविशिष्टभासनान्न भेदावभास इत्याह सर्वनाम्नो वेति।

उदेतीति। अत्र महतामेकरूपतेत्युक्त्या प्रथमोक्तरूपेण प्रतिनिर्देश्यत्वे बुभुत्सा। प्रतीतिं स्थगयतीति विलम्बयतीत्यर्थः। प्रक्रान्तप्रत्ययप्रक्रमभङ्गमाह।

यशोऽधिगन्तुमिति। यशोऽधिगन्तुं निरुत्सुकानामुत्कण्ठारहितानां अथच तदर्थमभियोगभाजां सीदमानां जनानाम् अङ्कं लक्ष्मीः समुत्सुकेवोत्कण्ठितेव उपैति

अत्र प्रत्ययस्य। सुखमीहितुं वेति युक्तः पाठः।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥

अत्र सर्वनाम्नः। अनेन विसृष्टा इति तु वाच्यम्।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम्।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा॥

अत्र पर्य्यायस्य। महीभृतोऽपत्यवतोऽपीति युक्तम्।

---

एवं सुखलिप्सयापि निरुत्सुकानामित्यन्वयः तथा मनुष्यमध्यगणनामतिवर्त्तितु-मतिक्रमितुमतिमनुष्यतां प्राप्तुं निरुत्सुकानामित्यन्वयः।

अत्रेति। तुम्प्रत्ययलब्धक्रमस्य सन्प्रत्ययनिर्देशेन भङ्ग इत्यर्थः। इच्छासु स्ववि-कल्पबोधकेन वाकारेण तत्तद्विषयेच्छासु एकवरूपेणैव बुभुत्साजननात्। सर्वनामप्रकृतेः क्रमभङ्गमाह।

ते हिमालयेति। ते पार्वतीपरिणयघटनार्थं हिमालयसन्निहितं प्रस्थापिताः सप्तर्षयः अस्मै शूलिने सिद्धमर्थं निवेद्येत्यन्वयः। अत्र निवेदनसम्प्रदानस्यैव उद्देश्य-प्रतिनिर्देश्यत्वादिदंपदेन प्रथमनिर्दिष्टस्य तस्य तेनैव पदेन निर्देशे बुभुत्सोत्पादात् तच्छब्देन निर्देशे तत्क्रमभङ्गः। सामान्यवस्तुनिर्देशे तदीयविशेषे यत्र बुभुत्सा तत्रापि तद्विशेषानिर्देशे तद्भङ्गमाह।

महीभृत इति। पुत्रवतोऽपि महीभृतो हिमालयस्य दृष्टिस्तस्मिन् पार्वतीरूपे-ऽपत्ये दिदृक्षा विच्छेदं न जगाम तत्र प्रतिवस्तूपमामाह अनन्तेति असङ्ख्यपुष्पस्यापि मधोर्वसन्तस्य द्विरेफमाला चूते आम्रपुष्पे सविशेषसङ्गा विशिष्यासक्ता यत इत्यर्थः।

अत्रेति। सामान्यविशेषप्रकाराभ्यामप्येकार्थकानेकशब्दलभ्यत पर्य्यायपदार्थ-स्याच पुत्रवत् इत्यनेन पुत्रसामान्ये निर्दिष्टे तद्विशेषरूपस्य तत्पर्य्यायस्य पुत्र-विशेषस्यैव निर्देशे बुभुत्सोदयात्तस्मिन्नपत्य इति निर्देशात्तद्भङ्ग इत्यर्थः। अयं भावः अनन्तपुष्पस्य मधोश्चूते इति दृष्टान्ते पुष्पसामान्यसत्त्वेऽपि तद्विशेषे चूते आसक्ति-कथनात् सामान्यसत्त्वेऽपि विशेषे आसक्तिं निर्देष्टुं बुभुत्सा जाताऽतो दार्ष्टान्तेऽपि पुत्रसामान्यं निर्दिश्य पुत्रविशेषे आसक्त्यनिर्देशात्तद्भङ्ग इत्यर्थः। एवञ्च पुत्रसामा-

अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूदिति केचित् समर्थयन्ते ।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥

अत्रोपसर्गस्य पर्य्यायस्य च । तदभिभवः कुरुते निरायतिं लघुतां भजते निरायतिः, लघुतावान्न पदं नृपश्रियः इति युक्तम् ।

---

न्योपक्रमे तद्विशेषपुत्रानिर्देशे क्रमभङ्गः । कन्यावर्णने च पुत्रविशेषो निर्देष्टुमशक्य एवेत्युभयथापि दोषादुपक्रममेवान्यथा रचयति । मह्रीभृतोऽपत्यवतोऽपीति अत्र, चोपादेयसामान्ये सत्यप्युपादेयविशेषे आसक्तिरेवात्र परार्द्धेन दर्शिता न तु पुत्रत्वेन सामान्यविशेषभावः । तथाच पूर्वार्द्धेऽप्युपादेयसामान्यस्य पुत्रसामान्यस्य सत्त्वेऽप्युपादेयविशेषे आसक्तिनिर्देश एव बुभुत्सा तत उदीयत इत्यत उपादेयविशेषे कन्यापत्ये दृगासक्तिनिर्देशात्तद्बुभुत्साविच्छेदो जायत एवेति समर्थयमानानां केषाञ्चिद्व्याख्यानमाह ।

अत्र सत्यपीति । पुत्रे उपादेयसामान्ये कन्यारूपापत्ये उपादेयविशेषे समीचीनत्वाचेदं न दूषितम् । उपसर्गविशेषोपक्रमे तदुपसर्गेणैव निर्देष्टुं नामविशेषोपक्रमे तन्नाम्नैव निर्देष्टुञ्च बुभुत्सायामन्यथानिर्देशे क्रमभङ्गमाह ।

विपद इति । अविक्रमं जनं विपदोऽभिभवन्ति तादृशापदुपेतं जनमायतिरुत्तराभीष्टफलं कर्त्तृ रहयति त्यजति । ततश्च तदायतिशून्यस्य लघुता नियता ततः अगरीयांस्तादृशलघुर्नृपश्रियो भाजनं न नाश्रय इत्यर्थः ।

अत्र यथात्वे किं स्यादित्याकाङ्क्षया पूर्वनिर्दिष्टस्य विपदादेः प्रतिनिर्देश्यता तत्र च तेनैव शब्देन निर्देश्य एव प्रतिनिर्देश्यताप्रतीतिरुक्तैव । उपसर्गभेदेन लघुपर्य्यायत्वक्रमभङ्ग इति बोध्यम् । पर्य्यायस्योपात्तत्वादेव सर्वत्राख्यातोक्तकर्त्तुरुपक्रमे नियतेत्यादौ तद्भङ्गान्नियतेत्यत्र तथाकर्त्तृकमेव पाठं रचयति लघुतामिति एवञ्च लघुताभागित्यत्रापि नृपश्रियो न पदं भवतीत्यध्याहारादाख्यातोक्त एव कर्त्ता अन्तोक्तो न तत्क्रमभङ्गः । प्रकृतदोषपरिहार एव तात्पर्य्यात् तथाभिभव इत्यत्र क्लीभङ्गः कृतः । एकवचनोपक्रमे तद्भङ्गमाह ।

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीः,
अश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः, प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्य्यः शशंसुः ॥

अत्र वचनस्य । काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीका इति, कम्पमाना इत्यत्र कम्पमापुरिति च पठनीयम् ।

---

काचिदिति । युद्धे पदिष्यतां राज्ञां यात्राकाले विश्लेषदुःखात्तदीयनारीक्रियासु अमङ्गलत्वारोपेण वर्णनमिदं भूमिपानां प्रस्थाने यात्रायां पुरोभावि अशिवं नार्य्यः इत्यनेन स्वक्रियाप्रदर्शनस्वरूपेण शशंसुः । तत्र का नारी कथं शशंसेत्यत्राह काचिदिति । दुःखाद्भूतलपातेन रजःकीर्णा काचिन्नारी अर्थाद्रजःकीर्णां दिवमनुविदधौ स्वसदृशीं चकार । कीदृशी मन्दवक्त्रेन्दु लक्ष्मीः मन्देन्दुश्रीकाया रजःकीर्णाया दिवो यात्रायाममङ्गलत्वेन स्वावस्थया तत्करणं काश्चिच्च दुःखादश्रीका दाहं दधिरे दिश इव । कीदृश्य उद्भ्रान्तसत्त्वाः सत्त्वानि प्राणाः प्राणिनश्च नार्य्य उद्भ्रान्तप्राणाः दिश उद्भ्रान्तप्राणिकाः यात्रायां दिग्दाहस्य प्राणुद्भ्रमस्य चामङ्गलत्वात् अन्याश्च दुःखाद्वात्या इव भ्रेमुः यात्रायां वात्याभ्रमस्याप्यमङ्गलत्वात् अपराश्च भूमिवत् कम्पमाना बभूवुरिति शेषः । यात्रायां भूकम्पस्याप्यमङ्गलत्वात् सर्वथा एव स्वावस्थयाऽशिवं शशंसुरित्यर्थः ।

अत्रेति । नार्य्योऽशिवं शशंसुरित्युक्तौ का नारी कथं शशंसेत्याकाङ्क्षायामेकैकनार्य्यवस्थाया बुभुत्सितत्वेन काचिदित्युपक्रमे काश्चिदित्यत्र बहुवचनात्तद्भङ्ग इत्यर्थः । अत एकाः का नार्य्यः कथं शशंसुरित्येवाकाङ्क्षामुत्थाप्य उपक्रम एव बहुवचनान्त पाठं रचयति काश्चिदिति । बहुवचने लक्ष्मीरित्यसम्भवाच्छोभा इति कृतं ततश्च शोभा अश्रीका इति विसर्गलोपे बन्धशैथिल्यं स्यादतो निःश्रीका इति कृतं कम्पमाना इत्यत्र च क्रियानिर्देशाभावात् साकाङ्क्षतां परिहरति कम्पमापुरिति । आख्यातोक्तकारकक्रमभङ्गमाह ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताड़ितम्,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रान्तिं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥

अत्र कारकस्य। विश्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिमित्यदुष्टम्।

अकलिततपस्तेजोवीर्य्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसङ्ग्रहणाय च॥

अत्र क्रमस्य, पादोपसङ्ग्रहणायेति पूर्वं वाच्यम्। एवमन्यत्राप्यनुसर्त्तव्यम्। अविद्यमानः क्रमो यत्र यथा,

---

गाहन्तामिति। शकुन्तलादर्शनात् तद्गतमनसो दुःषन्तस्य मृगयानिवृत्तये सेनापतेरयमादेशः सर्वे पशवोऽद्य स्वच्छन्दं विहरन्त्विति समुदायार्थः। कदम्बकं समूहः रोमन्थो हनुचलनं भुक्तजीर्णतार्थं तस्याचरणमभ्यासः विश्रब्धैः प्राप्ताश्वासैः।

अत्रेति। कारकस्य आख्यातोक्तकर्तृकारकस्य विश्रब्धैः क्रियतामित्यनुक्तकर्मकारकनिर्देशाद्भङ्ग इत्यर्थः। के के किं किं कुर्वन्तीत्याकाङ्क्षायां गाहन्तामिति कर्तृकारकोक्त्या निर्देशात्। निर्दिष्टक्रमभङ्गमाह।

अकलितेति। कृतशाम्भवधनुर्भङ्गस्य रामस्य रोषादागतं परशुरामं श्रुत्वा स्वयं परिभावनमिदम्। अकलितेन अनिर्वचनीयेन तपस्तेजसा वीर्य्येण च प्रथिमा पृथुत्वं यस्य तादृशे मुनौ परशुरामेऽवितथेनामोघेन मदेनाध्माते उद्धते रोषादभिधावति सति मम पाणिः अभिनवधनुर्विद्याधीनदर्पक्षमाय कर्मणेऽर्थाद् युद्धाय पदोपसङ्ग्रहणाय च स्फुरतीत्यर्थः।

अत्रेति। पादग्रहस्य प्रथमोक्ततपस एवोचितत्वाद् युद्धस्य च द्वितीयोक्तवीर्य्योचितत्वात्तथैव क्रमो बुभुत्सित इति भावः। अक्रमदोषमुदाहर्त्तुमक्रमपदार्थमाह।

इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतः,
त्वमस्य लोकस्य च नेत्रकौमुदी॥

अत्र त्वंशब्दानन्तरं चकारो युक्तः। यथा वा,

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ! दोषाकरश्री-
र्वक्त्रे, पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः।
आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते,
प्रोच्येवेत्थं, प्रकोपाच्छशिकरसितया यस्य कीर्त्त्या प्रयातम्॥

अत्र इत्थं प्रोच्येवेति न्याय्यम्। तथा, लग्नं रागावृताङ्ग्येत्यादौ इति श्रोनियोगादिति वाच्यम्॥

---

अविद्यमान इति। स्वपूर्ववर्त्तिपदार्थनिष्ठस्वार्थान्वयबोधकतानियमवतां चादिपदानां तत्पदोत्तरपातितारूपः क्रमस्तदसत्यमित्यर्थः। इयं गतमित्यादि स्पष्टम्।

अत्रेति। स्वबोध्यस्य समुच्चयस्य त्वंशब्दार्थ एव बोधयितुमौचित्याच्चकारस्य तदुत्तरपातितानियमात्। शक्तिरित्यादि स्त्रीलिङ्गं शब्दार्थत्वात् स्त्रीत्वेनाध्यासितया यस्य शशिकरसितया कीर्त्त्या प्रकोपादित्थं प्रोच्येव प्रयातं किं प्रोच्येत्यत्राह।

शक्तिरिति। स्त्रीलिङ्गशब्दनिर्देश्यानां सर्वासां स्त्रीत्वेनाध्यासात् सन्नायिकायाः कीर्त्तेः कोपहेतुं तासाम् असन्नारीत्वप्रदर्शकं प्रत्येकं विशेषणमाह निस्त्रिंशजेति। निस्त्रिंशः खड्गः निर्गतस्त्रिंशस्त्रिंशत्सङ्ख्यापूरको जनो येभ्यस्ते पुरुषाश्च निस्त्रिंशा ऊनत्रिंशत् पुरुषाः तथाच खड्ग ऊनत्रिंशत् पुरुषाः खड्गजन्या शक्तिः सामर्थ्यमेवोनत्रिंशत् पुरुषजन्या व्यभिचारिण्याः पुत्री स्त्री हे नाथ! सा ते तव भुजयुगले तथा वक्त्रे दोषाकरस्य चन्द्रस्य श्रीरिव दोषाणामाकारभूता श्रीः तथा महाकुट्टिनी अतिशयच्छेदनशीला एषा खड्गयष्टिरेव महाकुट्टिनी व्यभिचारदूती पार्श्वे प्रतिवसति तथा सर्वगा सर्वोपरिवर्त्तिनी तवाज्ञैव सर्वगामिनी स्त्री तव पुरतो विलसति मया वृद्धया प्रौढ़यैव जरत्या मया किम् इत्थं प्रोच्येवेत्यर्थः।

अत्रेति। इत्थमिति। पदस्य वृद्धया ते इत्यन्तपरामर्शकत्वात्तदुत्तरपातिताक्रम-

अमतः प्रकृतविरुद्धः परार्थो यत्र, यथा,

राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ।

अर्थदोषानाह,

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥७॥**
**सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमाऽनियमविशेषाविशेषपरि-**
**वृत्ताः ॥८॥**
**साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ९ ॥**

---

स्यात् इवकारोत्तरं पातादसत्त्वम् । लग्नमित्यादि प्राग् व्याख्यातम् । अत्रेति भृत्येभ्य इत्यन्तपरामर्शकस्येतिकारस्य तदुत्तरपातितात्रूपक्रमस्यासत्त्वमेव गदितुमित्यस्योत्तरपातात् ।

अमतपरार्थदोषमुदाहर्त्तुं तत्संज्ञार्थमाह अमत इति । प्रकृतस्य रसस्य विरुद्धो विरोधिरसव्यञ्जकः परार्थः प्रकृतरसानुपयुक्तोऽर्थः । राममन्मथेति सा निशाचरी राक्षसी ताड़केव निशाचरी अभिसारिका राम एवाभिरामो मन्मथस्तस्य दुःसहेन शरेण हृदये ताड़िता सती गन्धवता रुधिरेणैव गन्धयुक्तरक्तचन्दनेनोक्षिता च सती जीवितेशस्य स्वप्राणनाथस्य उपनायकस्य वसतिमालयं जगामेत्यर्थः । अत्रेति प्रकृते रुधिरसेकाभिव्यक्ते वीभत्सेऽपरो वीभत्सानुपयुक्तो रामादावारोपितमन्मथादिरूपः । न च वक्ष्यमाणेन प्रतिकूलविभावादिग्रहरूपरसदोषेण सहास्याभेद इति वाच्यम् । परार्थ इत्यस्यैव भेदकत्वात् तत्र प्रकृतरसोपयुक्तस्यैव विभावादिरूपार्थस्य प्रतिकूलत्वात् अत्र तु प्रकृतरसानुपयुक्तस्य मन्मथादेः ।

अर्थोऽपुष्ट इत्यादि । प्रसिद्धिविरुद्धो विद्याविरुद्धश्चेति दोषद्वयं सनियमपरिवृत्तोऽनियमपरिवृत्तो विशेषपरिवृत्तोऽविशेषपरिवृत्तश्चेति दोषचतुष्टयं

दुष्ट इति सम्बध्यते। क्रमेणोदाहरणम्।

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति॥

अत्र अतिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः न त्वसङ्गताः पुनरुक्ता वा।

सदा मध्ये यासामियममृतनिष्यन्दसरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्।
प्रसादं ता एता घनपरिचिताः केन महताम्
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः॥

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति, ताः गम्भीरकाव्यपरिचि-

---

विध्ययुक्तोऽनुवादायुक्तश्चेति दोषद्वयम्। अपुष्टमुदाहरति अतिविततेति विशेष्यस्य उत्कर्षानाधायकविशेषणवत्त्वं तत्त्वम्। रविर्जयति कीदृशः अतिविस्तीर्णायां गगनसरणावाकाशपथे प्रसरणे चलने परिमुक्तो विश्रान्त्यधीनानन्दो येन तादृशः तथा मरुता उल्लासितसौरभाणां कमलाकराणां हासकरो।

अत्रेति। प्रतिपाद्यमानं रवेरुत्कर्षम्। न चातिविस्तीर्णपथगमनेऽपि विश्रान्त्यभावेन लभ्यमानमेवोत्कर्षमनुपादीयमानास्ते बाधन्ते एवेति वाच्यम्। सदातनत्वेन प्रसिद्धे रविप्रसरणे विश्रान्तित्यागमात्रेणैव तल्लाभादतिविततगमनसरणनुपादानेऽपि तदबाधात् अदीर्घपथेऽपि सदा प्रसरणे विश्रान्तिसम्भवेन तल्लाभेनैवोत्कर्षात्। अतिविततत्वादय इत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा कमलाकरे मरुदुल्लासितसौरभविशेषणस्यैवापुष्टार्थत्वं मरुदादिपदार्थत्रयापेक्षया च बहुवचनमिति केचित्। कष्टमर्थमाहु।

सदेति। आसत्त्यादिसत्त्वेऽपि कष्टबोध्यार्थत्वं तत्त्वं लक्षणावशाच्च कष्टबोध्यता नेयार्थे त्वकष्टबोध्यतेति भेदः। सुकुमारविचित्रमध्यमात्मकरीतिमन्महाकाव्यविषयी बौद्धजनेच्छानां मेघच्छन्नादित्यप्रभाणाञ्च प्रसादनोपायभावनार्थकमिदं पद्यम्। बौद्धजनेच्छा प्रसादनञ्च तदिच्छाविषयकाव्यकरणेनैवेति तदुपायचिन्ता आदित्य-

ताः कथमितरकाव्यवत् प्रसन्ना भवन्तु, यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति सङ्क्षेपार्थः।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं, जन्मन्येकः स एव महोत्सवः॥

---

प्रभा प्रसादनञ्च मेघापसारणेनैवेति तदुपायचिन्ता। अस्य कियतीं व्याख्यां कुरुते।

अत्रेति। मध्य इति विषयतायामित्यर्थः। सरस्वती कवित्वरूपा चमत्कारमिति परिमलपदार्थः स्रोतोऽमृतेति। अमृतस्यन्देनेव सरसेत्यर्थः। उद्दामा शब्दार्था-डम्बरेणोत्कटा घनपरिचितेति व्याचष्टे गम्भीरेति महतां कालिदासादीनां यन्महाकाव्यं सर्गबन्धप्रबन्धः स एव विस्तीर्णत्वादव्योमेव तद्वत्ति दिविस्रोतस्सकगम्भीरकाव्य-विषया इत्यर्थः इतरकाव्यवदिति सप्तम्यन्ताद्वतिः। इतरकाव्यविषया इवेत्यर्थः। आदित्यप्रभापक्षं व्याचष्टे यासामिति प्रभाणामपि रुचिपदार्थत्वात् तन्मध्ये विपथगा चाकाशगङ्गा रविरश्मिवेष्टिततत्त्वात्तस्याः। अत्रापि वहतीत्यत्र परिमलमिति बोध्यम्। तस्य च कमलादिसौरभमित्यर्थः। अत्र पक्षेऽमृतनिष्यन्दी जलप्रवाहः तेन सरसा स्निग्धा सरस्वती भूमावागत्य सरोवरविशिष्टा उद्दामा वेगवती मेघपरिचिता इति महतां महाकाव्यतुल्ये व्योम्नि मेघच्छन्ना इत्यर्थः। व्याहतमाह।

जगतीति। निन्दायामेव तात्पर्यसत्त्वे निन्दितस्यैव पुरस्कारव्यञ्जकार्थत्वं तत्त्वं तथाच निन्दाया एव व्याहतत्वमित्यर्थः। निन्दामुखस्तुतिरूपव्याजोक्तौ तु स्तुतावेव तात्पर्यं न निन्दायाम्। मालत्यां माधवस्यानङ्गलेखोऽयं नवेन्दुकलादयस्ते ते स्वभावतो मधुरा मनोज्ञा भावाः पदार्था जगति जयिन उत्कर्षवन्तः अन्येऽपि ये मनो मदयन्ति तेऽपि सन्त्येव न तु मत्प्रीतिजनका इत्यर्थः। तर्हि कस्तव प्रीतिकारीत्यत्राह मम त्विति। इयं मालतीरूपा विलोचने चन्द्रिका यन्नयनं विषयं याता प्राप्ता अस्मिन् जन्मनि स एवैको मम महोत्सव इत्यर्थः। विषयमिति भावप्रधानो निर्देशः विषयतामित्यर्थः।

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम्। क्षतमनुमतमित्यादि,

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः यथा वा,

अस्त्रज्वालावलीढ़प्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि, गुरौ सर्वधन्वीश्वराणाम्।
कर्णालं सम्भ्रमेण व्रज कृप ! समरं मुञ्च हार्दिक्य ! शङ्काम्,
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः।

---

अत्रेति। यं माधवं प्रति पस्पशाः तुच्छाः स एव माधवः चन्द्रिकात्वमिति। आदिपदलभ्यत्वाच्चन्द्रिकायाः उत्कर्षार्थमिति रूपकाधिकरणे रूप्यमाणनिष्ठोत्कर्षलाभायैव रूपककरणात्। एवं तुल्यन्यायात् पुरस्कृतस्य निन्दाव्यञ्जकार्थत्वमपि तत्त्वं बोध्यं यथा।

देवि ! त्वन्मुखपङ्कजेन शशिनः शोभा तिरस्कारिणा।
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम्॥ इत्यत्र

मुखे पङ्कजरूपणात् पुरस्कृतस्य पङ्कजस्य निर्जितत्वेन निन्दाव्यञ्जनं पुरस्कारव्याघातिका। पुनरुक्तमुदाहरति क्षतमनुक्तमिति।

अर्जुनार्जुनेति। वेणीसंहारे एतत् श्लोकात् पूर्वं सम्बोधनं भवच्छब्देन च सम्बोधितस्योपस्थापनात्तदर्थककिरीटिशब्देनात्र तस्य पुनरुक्तिरित्यर्थः।

अस्त्रज्वालेति। पलायमानानि कुरुसैन्यानि परावर्त्तयितुमश्वत्थाम्न उक्तिरियम्। सर्वधन्वीश्वराणां गुरौ मम पितरि द्रोणेऽस्मिन् सेनानाथे स्थिते सतीत्यन्वयः। मम पितरि कीदृशे अस्त्रज्वालयाऽवलीढं यत् प्रविपक्षबलं तदेव जलधिस्तदन्तरौर्वानलायमाने जलधिशोषकत्वादौर्वानलस्य।

अत्रेति। इदमापाततः वस्तुतस्तु पूर्वश्लोक एवैतदुदाहरणं न भेतव्यं न भेतव्यमितिवदाश्वासने पौनरुक्त्यस्यादोषत्वात्। दुष्क्रमसाह।

भूपालरत्न ! निर्दैन्यप्रदानप्रथितोत्सव ! ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥ (दुष्क्र०)

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः ।

स्वपिति यावदयं निकटे जनः, स्वपिमि तावदहं किमपैति ते ।
तदयि साम्प्रतमाहर कुर्परं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥ (ग्रा०)

एषोऽविदग्धः । मात्सर्य्यमुत्सार्य्येत्यादि,

अत्र प्रकरणाद्यभावे सन्देहः शान्तश्‍टङ्गार्य्यन्यतराभिधाने तु निश्चयः ।

---

भूपालेति । आकाङ्क्षितक्रमविलङ्घनेनोक्तपदार्थत्वं तत्त्वं निर्दैन्येति । निर्गतं दैन्यं यस्मात् तथा प्रदाने प्रथितः ख्यात उत्सवो यस्य हे तादृश ! विश्राणय देहि ।

अत्रेति । बहुमूल्ययाचनोत्तरमेव तत्प्राप्त्यसम्भावनायां अल्पमूल्ययाचनमिति क्रमस्याकाङ्क्षितत्वात् । ग्राम्यमाह ।

स्वपितीति । सुप्तनवोढायां शय्यायां सुषुप्तोः प्रत्युक्तिरियम् । अयं सखीजनस्तव निकटे यावत् स्वपिति तावदहमप्यत्र स्वपिमि । तव किमपैति एतत्सन्निधौ रतिकदर्थनरूपापायाभावात् तत्तस्मादयि ! भीः ! साम्प्रतं कुर्परं कफोणिमाहर संहर कफोणिना शय्यां नाच्छादयेत्यर्थः । स्यात् कफोणिस्तु कुर्पर इत्यमरः । रूपकमिति क्वचित्पाठस्तदा च रूपमेव रूपकं शरीरमित्यर्थः ।

अविदग्ध इति । तथाच अविदग्धकथितार्थत्वादयं ग्राम्यः उक्तिभङ्गीराहित्यात् । सन्दिग्धमर्थमाह ।

मात्सर्य्यमिति । शब्दान्निश्चितेऽपि बोद्धुः संशयजनकोऽर्थः सन्दिग्ध इति सन्दिग्धपददोषे तु पद एव सन्देहः । अत्र वक्तृसंशयः किं पदवाच्य एव वाक्यान्निश्चितस्तत्र निश्चितेन तदंशेन तदीयतात्पर्य्ये संशयजननादस्य एकतरसेवन एव निश्चय इति । तन्निश्चये व्यञ्जनयाऽवगते किं भूधरनितम्बसेवनेऽस्य निश्चय इत्यौचित्यावर्जितसंशयो भवति यदि तु तत्तात्पर्य्यग्राहकं प्रकरणादिकं तिष्ठति तदा तदीयतात्पर्य्यग्रहादेव एकतरसेवने मानसो निश्चयः स्यादित्याह ।

अत्रेति । अन्यतराभिधानेऽन्यतरत्वेन निश्चितत्वाभिधाने तथात्वेन निश्चये

गृहीतं येनासीः परिभवभयान्नोचितमपि,
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्,
विमोक्ष्ये शस्त्र। त्वामहमपि, यतः स्वस्ति भवते॥

अत्र शस्त्रमोचने हेतु र्नोपात्तः।

इदन्ते केनोक्तं कथय कमलातङ्कवदने!
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम्।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम्॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम्। यथा वा,

---

तत्तात्पर्यस्य सुग्रहत्वात् एवञ्च वक्तु निश्चयस्य व्यङ्ग्यत्वात्तदेव गुणीभूतव्यङ्ग्ये शान्त-शृङ्गाराऽन्यतरनिश्चयस्य व्यङ्ग्यत्वमुक्तम्। निर्हेतुमाह।

गृहीतमिति। हेत्वभिधाने आकाङ्क्षोत्थापकसत्त्वेऽनभिहितहेतुकार्थत्वं तत्त्वम्। कर्णेन सह विवादेऽस्त्रं त्यक्तुं शस्त्रं सम्बोध्याश्वत्थाम्न उक्तिरियम्। हे शस्त्र! त्वं येन मम पित्रा नोचितमपि ब्राह्मणजात्यनुचितमपि परिभवभयात् द्रुपदात् परिभव-भीत्या गृहीतमासीः यस्य मम पितुः प्रभावात्तत्र न विषयस्त्वत्प्रयत्नाश्रयो न खलु कश्चिदभूत् तेन मम पित्रा त्वं सुतशोकात् मन्मरणवार्त्तया शोकात्परित्यक्तं न तु भयात्परित्यक्तं तस्मादहमपि त्वां यतो विमोक्ष्येऽतो भवते स्वस्ति तत इति पाठस्तु सुगमार्थ एव।

अत्रेति। द्वितीयशस्त्रमोचनसम्बन्धात्मः शस्त्रत्यागः अत्र च पितुः शस्त्रमोचने हेतुकथनमेव द्वितीयशस्त्रमोचने हेत्वभिधानाकाङ्क्षोत्थापकं प्रसिद्धिविरुद्धमाह।

इदन्ते इति। कविलोके यादृशी प्रसिद्धिस्तद्विरुद्धत्वं तत्त्वं कमलस्यातङ्को यस्मात् हे तादृशवदने! यदेतस्मिन् हेम्नः कटकमिति धियं खलु धत्से इदं ते तव स्थाने केनोक्तं तत्कथय तत्किमिदमित्यवाह। इदं स्मृतिभुवा कामेन दुःसाधनजन-स्याक्रमणाय परमास्त्रं चक्रं तव करकमलमूले प्रीत्या विनिहितम्।

अत्रेति। लोके कविलोके अन्यलोके प्रसिद्ध्यभावस्य दोषत्वाभावात्। पल्लव-यति यथा वा।

उपपरिसरं गोदावर्य्याः परित्यजताध्वगाः !
सरणिमपरो मार्गस्तावद्भवद्भिरिहेच्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः ।

सुसितवसनालङ्कारायां कदाचन कौमुदी
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्त्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः ॥

---

उपपरिसरमिति। हे अध्वगाः! गोदावर्य्याः परिसरस्य तीरस्य समीपे सरणिं परित्यजत इह देशे भवद्भिरन्यो मार्ग ईक्ष्यतां हि यस्मादिह सरणौ रक्ताशोकः कयापि हताशया पापिष्ठया दिव्यस्त्रिया चरणनलिनन्यासेन उदञ्चदुद्गच्छन्नवाङ्कुररूपं कञ्चुकं यस्य तादृशो विहितः दिव्यस्त्रीपादघातेनाशोकस्य कविभिः पुष्पितत्ववर्णनात् तथाविध तद्दर्शनेन स्त्रीविरहिणां युष्माकं कामोद्दीप्त्या सङ्कटं स्यादिति भावः।

अत्रेति। पुष्पोद्गम एव प्रसिद्धो न त्वङ्कुरोद्गम इत्यर्थः। न च कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यतीति। कालिदासेन गर्भस्य वर्णनात् कलिकां विना पुष्पासम्भवाच्चाङ्कुरस्योद्गमः कविषु प्रसिद्ध एवेति वाच्यम् उद्दीपककथनादत्र नवाङ्कुरपदस्य पल्लवनवाङ्कुरपरत्वादेव पथि पथि शुकचञ्चूचारुबालाङ्कुराणामित्यत्र शुकचञ्चूसादृश्यात् पल्लवाङ्कुरस्यैव उद्दीपकत्वलाभात् कलिकारूपाङ्कुराणां नवत्वे नातिसूक्ष्मत्वावगमात्तद्दशायामुद्दीपकत्वाभावात् तथाच कामिनीपादघातेन पल्लवाङ्करोद्गमे कविप्रसिद्धिर्नास्त्येवेत्यर्थः। कविप्रसिद्धिविरुद्धमपि वर्णनीयमित्याह।

सुसितेति। कौमुदी चन्द्रिका तद्रूपे महसि तेजसि सति सुसितवसनालङ्कारायां सुदृशि सुनयनायामभिसारिकायां कदाचन स्वैरं यान्त्यां सत्यां विधुरस्तं गतोऽभूत् तथाच शुक्लवस्त्रालङ्कारायास्तमसा अभिसारबाधे उपस्थिते तदनु भवतः कीर्त्तिः

अत्रामूर्त्तोऽपि कीर्त्तिः ज्योत्स्नावत् प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम्।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च॥ (वि॰वि॰)

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम्।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना॥

एतत् अर्थशास्त्रेण।

विधाय दूरे केयूरमनङ्गाङ्गदमङ्गना।
बभार कान्तेन कृतां करजोल्लेखमालिकाम्॥

अत्र, केयूरपदे नखक्षतं न विहितमिति, एतत् कामशास्त्रेण।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे।

---

केनापि जनेनागीयत येन गानेन कीर्त्त्यैव चन्द्रवत्तमोनाशात् सा मुक्ताशङ्का सती प्रियगृहमगात् अस्यार्थस्य समर्थकमर्थान्तरं न्यस्यति क्व नासीति सर्वदैवेत्यर्थः। विद्याविरुद्धं वक्तव्ये धर्मविद्याविरुद्धमाह।

सदेति। ग्रहोपरागं विनेति दिवाकरकरैः पूतं दिवा स्नानं प्रशस्यते अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनादिति पराशरवचनात्। नीतिशास्त्रविरुद्धमाह।

अनन्येति। षड्गुण्यं मन्त्रणा तदनुसृति तदनुसरणं एतदर्थशास्त्रेणेति। अर्थशास्त्रं नीतिशास्त्रं तेनेदं विरुद्धमित्यर्थः। बाहुबलषाड्गुण्ययोर्मिलितयोरेव कार्य्यसाधकत्वस्य नीतिशास्त्रोक्तत्वात्। कामशास्त्रविरुद्धमाह। विधायेति। अनङ्गाङ्गदमिति करजोल्लेखमालिकाविशेषणम्। अत्रेति। नखक्षतस्य स्थानान्याह।

वात्स्यायनः। नखक्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः।
पार्श्वौ जघनमूरू च स्तनगण्डललाटिका इति॥

योगशास्त्रविरुद्धमाह।

आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥

अत्र, विवेकख्यातिस्ततः सम्प्रज्ञातसमाधिः, पश्चादसम्प्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ, एतत् योगशास्त्रेण। एवं विद्यान्तरैरपि विरुद्धमुदाहार्य्यम्।

प्राप्ताः श्रियः सकलकामदुघास्ततः किम्,
दत्तं पदं शिरसि विद्विषतां ततः किम्।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम्,
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

अत्र ततः किमिति न नवीकृतम्। तत्तु यथा,

यदि दहत्यनलोऽत्र किमद्भुतं, यदि न गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता ॥

---

अष्टाङ्गेति। समाधिधनानां मौलिमणिः यमश्च नियमश्चैवमासनं प्राणसंयमः। प्रत्याहारो धारणा च ध्यानञ्चैव समाधियुक्। एतानि कथितान्यष्टौ योगाङ्गानि मनीषिभिरित्युक्ताष्टाङ्गयोगस्य यत्परिशीलनमनुष्ठानं तस्य कीलनेनाभ्यासेन दुःसाधनेऽवश्याकर्षणे मोहनादीनां सिद्धीनां योगोपसर्गरूपाणां सविधं सान्निध्यं दूरे विदधत् अधुना विमुक्तः किं कुर्वन् अभिमतां विवेकख्यातिं समाधिविशेषमासादयन्। समाधीनां क्रमं दर्शयत्यत्रेति। तथाच योगशास्त्रोक्तक्रमविरोधाद्विद्याविरुद्धत्वमत्र। एवमिति वैद्यकादिविद्याविरुद्धमित्यर्थः। अनवीकृतमाह।

प्राप्ता इति। उद्देश्यप्रतिनिर्देश्यत्वाभावे सति बहुशः प्रत्यायस्यैकस्यैवार्थस्य भङ्गीभेदेन नवीकरणराहितार्थत्वं तत्त्वम्। चर्वितचर्वणाद्वैरस्याधानमत्र दूषकताबीजम्। सर्वत्र ततः किमित्यस्मात्परं मुक्त्युपयोगित्वज्ञानं यदि न स्यादिति शेषः। ननु कीदृशकरणे नवीकरणं स्यादित्यत्राह।

तत्तु यथेति। अविषादिता विषादराहित्यं सतां प्रकृतिरेव स्वाभाविक्येव नत्वौपाधिकी तत्र प्रतिवस्तूपमामाह।

यदीत्यादि। तयं गौरवं गुरुत्वम् अत्र स्वाभाविकत्वस्यैव बहु शोच्यस्य किमद्भुतं किं ततः सदैव प्रकृतिरेवेति भङ्गीचतुष्टयेनोक्तिः। सनियमपरिवृत्तमाह।

यत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधेः,
उत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पदः,
तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥

अत्र, छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचितेति सनियमत्वं वाच्यम् ।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा, शोण एवाधरस्ते,
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।

---

यत्रेति । सनियमेनान्यव्यवच्छेदेन वक्तव्येऽतथा कथितार्थत्वं तत्त्वम् । तस्य अर्थाच्चिन्तामणेराभासमणिकृताश्मसु शोभया मणिकृतशिलासु मध्ये गणन इति दोषः । अश्मत्वं शिलात्वमेवोचितं न तु मणित्वं निकृष्टमध्यगण्यत्वे निकृष्टसाधारणधर्मेणैव निर्देष्टुमुचितत्वात् यत्र मणौ विधेरेतन्निखिलं निर्माणं विधेः निर्मीयमाणाखिलगुणा इत्यर्थः । अनुल्लिखिताख्यं स्वस्वनामोल्लेखागोचर इत्यर्थः । उत्कर्षप्रतियोगी अमुकापेक्षयाऽमुक उत्कृष्ट इत्यपेक्षाबुद्धिविषयः सर्वोत्कृष्टस्य प्रत्येकं प्रति तथा कल्पनस्य न्यक्कारत्वात् कोटिः काष्ठा तथा यत्सम्पदः प्राणिनां मनोरथाविषया अपि जाता इत्यर्थः । अत्र सर्वगुणमध्ये आभासः शोभाप्येकगुणः अतः सर्वगुणवन्तो मणयोऽपि आभासमणिकृता भवन्त्येव तन्मध्येऽश्मत्वमेवेति न युज्यते अतो गुणान्तरव्यवच्छेदेनैव वक्तव्यमित्यतस्तथैव पाठं रचयति ।

छायामात्रेति । छायामात्रेति पाठकरणे तस्येत्यस्य प्रक्षेपं कुरुते तस्याश्मतैवेति । यद्यप्यत्र मणिकृतेत्यभूततद्भावार्थकच्विप्रत्ययमहिम्नैव मणेरेवाभासवशान्मणित्वे लब्धे गुणान्तरव्यावृत्तिः लभ्यते इतीदमुदाहरणं न प्रकृते सम्भवति तथापि स्त्रीलिङ्गमणिशब्दाभिप्रायेणैव इदमुदाहृतं न च्विप्रत्ययाभिप्रायेण भुवा सिद्धिर्बलवतां नृपाणां जायते नहीत्येवास्योदाहरणं द्रष्टव्यं नीतिव्यवच्छेदाय बलमात्रवतामिति सनियमस्य वक्तव्यत्वात् । अनियमपरिवृत्तमाह ।

वक्त्राम्भोजमिति । सरस्वती वाग्देवतैव सरस्वती नदी सा तव वक्त्राम्भोजमधिवसति तथा सदा अधरः शोणोऽरुण एव शोणो नदः समुद्रमुद्राविशेषयुक्तो दक्षिणो

वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णम्
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते ! तेऽम्बुपानाभिलाषः ॥

अत्र श्लेष एवेति नियमो न वाच्यः ।

श्यामां श्यामलिमानमानयत भोः ! सान्द्रैर्मसीकूर्चकैः,
मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके,
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥

अत्र ज्योत्स्नीमिति श्यामाविशेषो वाच्यः ।

कल्लोलवेल्लितदृषत्परुषप्रहारैः
रत्नान्यमूनि मकरालय ! मावमंस्थाः ।

---

बाहुः साहस्यात् काकुत्स्थस्य रामचन्द्रस्य वीर्यस्मृतिकरणे पटुः स एव दक्षिणः समुद्रः सागरः सेतुबन्धाद्रामवीर्यस्मारकः तथाच ता वाहिन्यः सेना एव वाहिन्यो नद्यः अभीक्ष्णं सततं भवतः पार्श्वं क्षणमपि नैव मुञ्चन्ति तथा स्वच्छेऽकुटिले मानसे मनस्येव मानसे सरोवरेऽन्तः सति कथम् अम्बन्तरपानाभिलाष इत्यर्थः ।

अत्रेति । अनियमे नाम्बुसत्तायां दर्शयितव्यायामेवकारेणान्यव्यवच्छेदानौचित्यात् नचार्थान्तरव्यवच्छेदकोऽयमेवकार इति वाच्यम् । विशेष्योत्तरपाठ्येवकारस्य तथा व्युत्पत्त्यभावात् । विशेषपरिवृत्तमाह ।

श्यामामिति । विशिष्टवक्तव्यत्वे सामान्येन कथितार्थत्वं तत्त्वम् । उर्वशीविरहादुन्मत्तस्य पुरूरवस उक्तिरियम् । भोः ! सख्यः ! श्यामां रात्रिं सान्द्रैर्मसीकूर्चकैर्मसीचूर्णैः श्यामलिमानं श्यामलत्वमानयत प्रापयत तथा मन्त्रं तन्त्रमौषधञ्च प्रयुज्य श्वेतोत्पलानां स्मितं विकाशं हरत तथा शिलापट्टके कृत्वा चन्द्रं कणशश्चूर्णयत येनैवंविधकरणेन तस्या उर्वश्या वक्त्रेण मुद्राङ्किताः चिह्निता दश दिशोऽहं द्रष्टुं क्षमे एवंविधाकरणे तु एभिरुद्दीपकैरन्धीकृतोऽहं द्रष्टुं न शक्त इति भावः ।

अत्रेति । श्यामाविशेषो रात्रिविशेषः तमस्विन्याः श्यामीकरणाभावात् । अविशेषपरिवृत्तमाह ।

कल्लोलेति । सामान्ये वक्तव्ये विशिष्यकथितार्थत्वं तत्त्वम् । हे मकरालय-

किं कौस्तुभेन विहितो भवतो न नाम
याञ्चाप्रसारितकरः पुरुषोत्तमोऽपि॥

अत्र, एकेन किं न विहितो भवतः स नामेति सामान्यं वाच्यम्।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः, प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया।
उत्कर्षश्च परस्य, मानयशसोर्विस्रंसनं चात्मनः,
स्त्रीरत्नञ्च जगत्पतिर्दशमुखो देवः कथं मृष्यते?॥

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति। नहि परस्येत्यनेन सम्बन्धो योग्यः।

---

कल्लोलैस्तरङ्गैर्वेल्लितानां दृशदां परुषैः प्रहारैरमूनि रत्नानि माऽवमंस्थाः, माऽवमानय यतो भवतः स्थाने पुरुषोत्तमोऽपि किं याच्ञया प्रसारितकरः कौस्तुभेन न विहितोऽपि तु विहित एव। तथाच रत्नस्योपकारकत्वात् कथं तदवमाननमिति भावः। अत्र रत्नसामान्यावमानन निषेधे रत्नसामान्यस्यैवोपकारकत्वं वक्तव्यं न विशेषस्य कौस्तुभस्य अतः पाठं परावर्त्तयति।

एकेनेति। एकेनापीत्यर्थः अपिना रत्नान्तरसमुच्चयनाभावे तद्दोषतादवस्थ्यात्। साकाङ्क्षमाह।

अर्थित्व इति। उपात्तपदार्थान्वयित्वभ्रमप्रयुक्तस्यार्थस्यानुपात्तपदार्थान्वयकाङ्क्षत्वं तत्त्वम्। न्यूनपदे तु तथा भ्रमाभावादियं विशेषणम्। धनुर्भङ्गे रामेणैव सीता परिणेतव्येति निश्चिते सीतयाचनस्य रावणदूतस्य शौष्कलस्य वाक्यमिदम्। बलान्नेतुं समर्थस्य रावणस्य प्रभोरर्थित्वे प्रकटीकृतेऽपि न सीतापरिणयरूपफलप्राप्तिः प्रत्युत विपरीते तया याच्यमानया कन्यया सुबाहुसुकेशादिराक्षसवधात्तस्य द्रुह्यन् द्रोहकारी दाशरथिः युक्तः तस्मात् परस्य शत्रोरुत्कर्षश्च आत्मनो मानयशसोर्भ्रंशनञ्च देवो दशमुखो जगत्पतिः कथं मृष्यते न द्वेष्टीत्यर्थः।

अत्र समुच्चयार्थकचकारत्रयवशात् पूर्वोक्तत्रयस्येव स्त्रीरत्नस्यापि कथं मृष्यत इत्यत्रान्वयित्वभ्रम उन्नीयते वस्तुतस्तु तत्र नान्वयः। द्वेषहेतुसत्त्व एव कथं न द्वेष्टी

आज्ञा शक्रशिखामणिप्रणयिनी, शास्त्राणि चक्षुर्नवम्,
भक्तिर्भूतपतौ पिनाकिनि, पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च, तदहो ! नेदृग्वरो लभ्यते ?
स्याच्चेदेष न रावणः, क्व नु पुनः सर्वत्र सर्वे गुणाः ॥

अत्र स्याच्चेदेष न रावण इत्यत एव समाप्यम् ।

---

त्युक्तिसम्भवात् स्त्रीरत्नस्य त्वनुरागपात्रत्वेन द्वेषहेतुत्वभावात् अतस्तदुपेक्षायामेव द्वेषान्वयो योग्य इत्यत आह अत्रेति । ननु परस्य स्त्रीरत्नं द्वेषयोग्यमित्यत आह नहीति । आत्मन इत्यनेन व्यवधानादासत्त्यभावादिति भावः । न योग्यो नोचितः । चक्रवर्त्ती तु आकाङ्क्षितपदाध्याहारेऽपि विवक्षितान्वयानिर्वाह एव साकाङ्क्षत्वं तथाचावोपेक्षितुमित्यस्याध्याहारे स्त्रीरत्नञ्चोपेक्षितुमित्यन्वये चकारबलात् परोत्कर्षस्वमानयशोभंशयोरपि उपेक्षितुमित्यत्रैवान्वयापत्तौ विवक्षिता सिद्धिः । परोत्कर्षस्वमानयशोभंशयोरेव द्वेष्यत्वान्न तदुपेक्षाया इति साकाङ्क्षत्वमित्याह तन्न । स्त्रीरत्नञ्चेति चकारात् पूर्वमुपेक्षितुमित्यस्याध्याहारे स्त्रीरत्नमुपेक्षितुञ्चेत्यर्थे स्त्रीरत्नोपेक्षायां परोत्कर्षस्वमानयशोभंशयोग्यद्वेषान्वये विवक्षितसिद्धेः ईदृशलक्षणकरणेऽनभिहितवाच्यभेदापत्तेश्च । अपदयुक्तमाह ।

आज्ञेति । अयुक्तस्थाने समापितपद्यार्थत्वं तत्त्वं पदं हि स्थानं युक्तत्वं हि पद्यार्थसमापनम् । सीतां परिणेतुं प्रहितदूतस्य रावणस्य प्रशंसापूर्वत्यागाय शतानन्दस्य वाक्यमिदम् । तस्य रावणस्याज्ञा शक्रशिखामणेः प्रणयिनी सहचरी शक्रेण शिखायां मणिवत्तदाज्ञा च ध्रियत इत्यर्थः । शास्त्राण्येव नवं नवीनं विधिनिर्मितभिन्नं चक्षुः भूतानां प्राणिनां पत्यौ पिनाकिनि महेशे भक्तिः लङ्केति लङ्कानाम्नी दिव्यापुरी पदं वसतिस्थानं द्रुहिणस्य ब्रह्मणोऽन्वये कुले उत्पत्तिः अहो तत्तस्मान्नेदृग्वरो लभ्यते यद्येष रावणो लोकानामार्त्तरावजनको रावणनामधारित्वदौर्जन्यो वा न स्यात् अतस्तथात्वान्नासौ वरो ग्राह्य इति भावः । तादृशनानागुणवतस्तस्य तमेव दोषसम्भवमुपपादयति क्व नु पुनरिति ।

अत्रेति । समाप्यं पद्यमिति शेषः क्व नु पुनरित्यादिस्तदत्याग एवोपयोगित्वेन तदुक्ता पद्यसमापनानौचित्यादिति भावः । अत्र रावणविषयासूयाया अपकर्षो दोषताबीजम् । सहचरभिन्नमाह ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता,
मदेन नारी, सलिलेन निम्नगा ।
निशा शशाङ्केन, धृतिः समाधिना,
नयेन चालङ्क्रियते नरेन्द्रता ॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।

लग्नं रागावृताङ्ग्येत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।

---

श्रुतेनेति । उत्तमोचितधर्मेणानेकेषामुत्तमानां प्रशंसायामनुत्तमोचितधर्मेणानुत्तमस्यापि प्रशंसनं तत्त्वम् । श्रुतं वेदः व्यसनमकार्य्यं धृतिः धैर्य्यं समाधिर्युक्तत्वायुक्तत्वावधानं तेन गृहादौ दह्यमाने प्रतिकारसम्भवे तत्र धैर्य्यं न कार्य्यम् अप्रतिकार्य्ये पुत्रादिमरणादौ तु धैर्य्यं कर्त्तव्यमेवेत्येवं समाधिनेत्यर्थः ।

अत्रेति । सहचरैरेकवाक्यनिर्दिष्टैः भिन्नत्वमनुचितत्वम् श्रुतबुद्ध्यादिमद्विषयभावप्रकर्षविघातोऽत्र दोषताबीजम् । प्रकाशितविरुद्धमाह ।

लग्नमिति । प्रकाशितो व्यञ्जितः प्रकृतोपश्लोकेन विरुद्धोऽर्थो येन वाक्यार्थेन तादृशार्थत्वं तत्त्वम् । अनुचितार्थे पशुतापदस्यैवार्थस्तथा न तु वाक्यार्थः । तथा कुविन्द इत्यादौ वाक्यानुचितार्थे श्रितक्षमारक्तभुव इत्यादौ वाक्यगतविरुद्धमतिकृति चानेकार्थपदघटितवाक्यात्वाद्वाक्यमेव विरोधिव्यञ्जकं न वाक्यार्थः न च शाब्द्यां व्यञ्जनायामर्थस्यापि शब्दसहकारितया व्यञ्जकत्वात् वाक्यार्थोऽपि तत्र व्यञ्जक इति वाच्यम् स्वातन्त्र्येणैवार्थस्यात्र व्यञ्जकताया विवक्षितत्वान्न तु सहकारितावशादप्राधान्येन लग्नमित्यादिकं व्याख्यातं गर्भितदोषे । श्रीस्तस्मादिति राज्ञोऽपचारस्य विदितं तेऽस्त्वित्यनेन दृढप्रत्यायनात्तदपचारप्रतिक्रियाचिकीर्षावगमात् । विध्ययुक्तमाह ।

प्रयत्नेति । द्वयोर्विधेयत्वेऽपि क्वचिदेकं विधेयमुद्दिश्य नापरं विधातुमर्हं विधेय-

इयं परिसमाप्यते रणकथाऽद्य दोःशालिनाम्,
अपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥

अत्र शयितः प्रयत्नेन बोध्यसे इति विधेयम्। यथा वा,

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितम्,
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैः,
दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥

---

ताया निराकाङ्क्षतारूपापर्य्याप्तिरपि तत्रैवोचिता तथात्वविपर्य्यासाद्विधेयतापर्य्याप्त्य-युक्तत्वं तत्त्वम्। तदयुक्तत्वग्रहश्च क्वचिद्योग्यताबलात् क्वचित्तु ग्राहकविशेषणग्राहित-तात्पर्य्यात् विधेयाविमर्षे तु विधेयतैव न प्रतीयते न तु विपर्य्यासाद्विधेयतापर्य्याप्त्य-युक्तत्वं यत्। तत्र योग्यताबलगृहीततदयुक्तत्वे उदाहरति। प्रयत्नपरिबोधित इत्यादिकुरुपाञ्चालशीकृष्णानां नाशाय दुर्य्योधनस्यानेऽश्वत्थाम्नः प्रतिज्ञेयम्। शेष इति भविष्यत्सामीप्ये वर्त्तमाना। तथाच हे दुर्य्योधन! अद्य निशां व्याप्य शयिष्यसे स्तुतिभिः प्रयत्नपरिबोधितस्य इत्यर्थः। सोमकाः पाञ्चालाः रणकथा रणप्रसङ्गः दोःशालिनां वीराणाम् अपैतु अपगच्छतु नृपा एव काननम्।

अत्रेति। युद्धचिन्तया निद्रा तदुत्तरं प्रबोधश्च द्वयमपि नास्तीत्यत आश्वासने द्वयमपि विधेयं तत्र निद्रितस्यैव प्रबोधात् विधेयता पर्य्याप्तिस्तत्रैवाख्यातेन कर्त्तुं युक्ता तद्विपर्य्ययेणाच निर्देशात् विध्ययुक्तता न च निद्राद्वयमध्यवर्त्तिप्रबोध एवाय मुक्तः स च तदुत्तरनिद्रायामनुवाद्य इति वाच्यम्। स्तुतिभिः प्रयत्नपरिबोधितत्व-वशाच्छत्रुनाशाधीनसुखनिद्रायां लब्धायां तदुत्तरं निद्रान्तरकथनानुपयोगात् तदुत्तर-मपि स्तुतिभिः प्रबोधनकथनौचित्यापाताच्च अद्य शेष इत्युक्त्या तथात्वव्याघाताच्च। अर्थान्तरन्यासगृहीततात्पर्य्याया विधेयतात्पर्य्याप्तेरप्ययुक्तत्वमाह।

वाताहारेति। विषधराणां वाताहारता सर्वजनप्रसिद्धैव तैस्तथात्वेनाश्वास्य जगदेव निःशेषितं तेषां दम्भाधीनतादृशकर्मणः फलमाह।

ते ग्रस्ता इति। ते विषधरास्तु इत्यर्थः नियमतोऽभ्रतोयकणिकाभक्षणं बर्हिणां लोकसिद्धमतस्तत्तीव्रव्रतं दम्भोपयोगि तथा व्रतवद्भिरित्यर्थः। तेषामपि तादृश-कर्मणः फलमाह तेऽपीति। ते बर्हिणः क्रूरं कठिनं चमूरवो मृगा लुब्धकैर्व्याधैः

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम्।
अरे रामाहस्ताभरण! भसलश्रेणिशरण!
स्मरक्रीड़ाव्रीड़ाशमन! विरहिप्राणदमन!।
सरोहंसोत्तंस! प्रचलदल नीलोत्पल! सखे!
सखेदोऽहं, मोहं श्लथय, कथय क्वेन्दुवदना?॥

---

तेषामपि चर्मधरणं वहिःप्रतारकतया दम्भोपयोगि तेषां तत्कर्मफलमप्येवं रीत्या बोध्यमिति भावः। कथं तैरेव दम्भोपयोगिकर्मासत्फलदर्शनेऽपि क्रियत इति अर्थान्तरन्यासेन तथाकरणं समर्थयति दम्भस्येति। वाताहारादिकर्मभिराचरितस्य दम्भस्य स्फुरितं फलं वहिर्ग्रासादिरूपं विदन्नपि जनो विषधरादिरन्यजनो वा दाम्भिको दम्भोपयोगिकर्माख्येव गुणानीहते गुणतया चेष्टते यतो नाज्ञो निकृष्टः इत्यर्थः।

अत्रेति। वाताहारादित्रयं वाताहाराश्नतीयकणिकाव्रतचर्मधरणरूपव्रतत्रये-णाश्वासनरूपव्युत्क्रमेण निर्दिष्टविधेयतापर्याप्तिं परावर्त्य वाच्यमित्यर्थः। तथाच जगन्निःशेषणाय वात आहृतः तद्ग्रसनायाश्नकणिकाव्रतं कृतं तान् चयितुं क्रूर-चमूरुचर्मवसनं कृतमित्येवं रूपतया वाताहारादौ विधेयता पर्याप्तणीया इत्यर्थः। कथमेवं वाच्यमितिचेदर्थान्तरन्यासे गुणानीहते इत्युक्त्या आख्यातेन दम्भोप-योगिगुणचेष्टायां विधेयतापर्याप्तौ तात्पर्यस्य ग्राहितत्वादिति भावः। वाता-हारादिकरणानाञ्च दम्भोपयोगिगुणचेष्टारूपत्वात्। केचित्तु वाताहारादिव्रतानां क्रमशो न्यूनं न्यूनतरव्रतत्वेन न्यूनतरादिक्रमेणैव वाच्यमिति ग्रन्थकृता दर्शितं गुरु-गुरुतरव्रतानां लघुव्रतादिक्रमेणैव करणीयत्वादिति व्याचक्षते तन्न। तथोक्तौ दुष्क्र-मदोषरूपत्वेन प्रकृतोदाहरणतया ग्रन्थकृता तत्प्रदर्शनस्यानौचित्यात् लघुव्रतादि-क्रमेण करणीयत्वेऽप्युक्तौ तथाक्रमनियमाभावाच्च। भिन्नकर्तृकव्रतेषु तथाक्रमा-भावाच्च अनुवादायुक्तमाह।

अरे इति। प्रकृतविधेयस्य यद्धर्मविशिष्टानुवादः प्रतिकूलस्तादृशधर्मस्यानुवाद्य-विशेषणत्वं तत्त्वम्। उर्वशीहस्तभ्रष्टं नीलोत्पलमालोक्य पुरूरवसस्तत्सम्बोधने-नोक्तिरियम्। अरे इति सानुनयसम्बोधने। रामा प्रकृते उर्वशी भसला भ्रमराः मकरन्ददायित्वात् तेषां शरण! स्मरक्रीड़ायां या व्रीड़ा उद्दीपकत्वात्तच्छमन! उत्पल-

अत्र विरहिप्राणदमनेति नानुवाच्यम्।

लग्नं रागावृताङ्ग्येत्यादि,

अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना पुनरु-पात्तः।

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।

यथाऽस्य जायते पातो न तथा पुनरुन्नतिः॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः।

---

तलचारिणां सरोवरहंसानाम् उपरिस्थितत्वात्तदुत्तंस! शिरोभूषण! सखि! नीलो-त्पल! इन्दुवदना उर्वशी क्व इति कथय तत्कथनाच्च मम मोहं शमय यतः सखेदो-ऽहमित्यन्वयः। अत्र व्रीडाशमनान्तसम्बोधनत्रयेण सरोहंसोत्तंसेति सम्बोधनेन च परोपकारित्वं प्रचलदलेति सम्बोधनेन स्वोपकारोपयोगिजीवित्वं सम्भावितम्।

अत्रेति। विरहिप्राणदमनस्य विरहिमोहशमनप्रार्थनायामयोग्यत्वमिति भावात् त्यक्तः पुनः स्वीकृतमाह।

लग्नमिति। क्रियाकर्माद्युक्त्या उपसंहृतेऽपि वाक्यार्थे उक्तजातीयकारकस्य पुन-रुपादानरूपं स्वीकृतत्वं बत्त्वम्। दधाति शोभां शशभृन्नभस्तले इत्यत्र तु नभस्तल इत्यधिकरणस्य उक्तकारकजातीयत्वाभावान्न दोषः। समाप्तपुनरात्ते तु विशेषणा-न्वयार्थं विशेष्यानुषङ्गो नैतल्लक्षणाक्रान्त इति बोध्यम्। तेनेत्यादिनेति। कर्मकार-काणां लग्नमित्यादिगणयतीत्यन्तानामुक्तत्वे तेनाश्लेष्यादेः कर्मकारकस्य पुनः स्वीकारः निराकाङ्क्षत्वमत्र दोषताबीजम्। अश्लीलार्थमाह।

हन्तुमेवेति। अश्लीलार्थव्यञ्जकवाक्यार्थत्वतत्त्वं शब्दाश्लीले तु अनेकार्थपदस्यैव व्यङ्ग्यः खचितोऽर्थोऽश्लील इति। हन्तुमेव शत्रून् प्रहर्त्तुमेव एवकारान्नीतिप्रवृत्तिव्यव-च्छेदः। पक्षे सुरतप्रहारं कर्तुं स्तब्धस्य विवेचनारहितस्य पक्षे नम्रतारहितस्य विवरं शत्रो श्छिद्रं पक्षे योनिविवरं पातः शत्रुकर्तृकोनिग्रहः नीतिशून्यत्वात् पक्षे सुरतान्ते नम्रभावः। उन्नतिःशत्रुबाधकत्वम् अनम्रभावश्च। अरे रामाहस्तेत्यादौ सखेदो-ऽहमिति गर्भितं सखेदोऽहमित्यत्र सखे! इत्यत्राश्राव्यवृत्तश्च मात्सर्यमुत्सार्य इत्यादौ श्रुतिकटुत्वञ्च तत्कथं तदप्रदर्शनमित्यत आह।

यत्रैक इति। इदानीमुक्तदोषाणां प्रतिप्रसवे वक्तव्ये पुनरुक्तत्वाधिकपदत्वदोषौ प्रतिप्रसूते।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति तथापि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतम्।

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः।

सन्निधानादिबोधार्थम्,

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते, तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये, यथा,

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम्।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम्॥
अपूर्वमधुरामोदप्रमोदितदिशस्ततः।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः॥

अत्र कर्णश्रवणशिरःशब्दाः सन्निधानप्रतीत्यर्थाः।

---

कर्णावतंसादीनि। ध्वनिः शब्दः निर्मितिः प्रयोगः व्याचष्टे अवतंसादीनि अवतंसपदस्य कर्णभूषणत्वेनैवोपस्थापकत्वात् कर्णपदप्रयोगे कर्णकर्णभूषणमित्यर्थे पुनरुक्तत्वं आदिपदात् कुण्डलशेखरादिपरिग्रहः कुण्डलशेखरपदद्वयस्य श्रवणशिरः-स्थितियोग्यसंस्थानविशेषव्यङ्ग्यकुण्डलत्वशेखरत्वजातिविशिष्टेनैव शक्यतावच्छेदके-नोपस्थापकमतस्तत्र श्रवणशिरःपदप्रयोगे यद्यपि पौनरुक्त्यं नास्ति शक्यतावच्छेदक-शरीरे श्रवणशिरसोरप्रवेशात् तथापि श्रवणशिरःपदयोरधिकपदत्वव्यञ्जकसंस्थान-ज्ञानादेव श्रवणशिरःसम्बन्धित्वलाभात् तत्प्रयोगे तद्दोषद्वयं परिहरति कर्णादि-स्थितिप्रतिपत्तय इति। तथाच कर्णादिशब्दास्तत्र कर्णादिस्थितपरतया लाक्षणिका इति भावः। प्रयोजनाभावेऽपि रूढ़िहेतुकेयं लक्षणेत्यग्रे वक्ष्यते। नचावतंसपदस्यापि कर्णस्थितभूषणवाचित्वात् सैव पुनरुक्तिरिति वाच्यम्। कर्णयोग्यभूषणवाचित्वा-देव तस्य। चक्रवर्त्ती तु कर्णस्थितिः कर्णपदव्यङ्ग्यैव इत्याह तन्न। व्यङ्ग्यबोधस्य शब्दबोधोत्तरकालीनत्वेन कर्णशब्दस्य लाक्षणिकत्वाभावे शाब्दबोधे पुनरुक्त्यनु-द्धारात्। कर्णावतंसपदं श्रवणकुण्डलपदञ्चोदाहरति। अस्याः कर्णावतंसेनेति कर्णस्थितावतंसेनेत्यर्थः। एवं श्रवणस्थितं कुण्डलमित्यर्थः। शिरःशेखरपद-

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फूर्जितं तव॥

अत्र धनुःशब्द आरूढ़त्वावगतये। अन्यत्र तु,

ज्याबन्धनिस्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादात्॥

इत्यत्र केवलो ज्याशब्दः।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः।
मुक्ताहारेण लसता हसतीव स्तनद्वयम्॥

---

मुदाहरति अपूर्वेति शिरःशेखरशालिनी जना आययुरित्यन्वयः। मधुरामोदः शेखरस्थपुष्पाणां बोध्यः भृङ्गमुखरत्वमपि तत एव। धनुर्ज्याशब्दमप्युदाहरति।

विदीर्णेति। विदीर्णाः शरनिर्भिन्ना येऽभिमुखारातयस्तैः कराले व्याप्ते इत्यर्थः। दोष्णा हस्तेन विस्फूर्जितं दिदीपे।

अत्रेति। ज्याशब्दस्य धनुःस्थितियोग्यसंस्थानविशेषव्यङ्ग्यजातिविशेषेण शक्यतावच्छेदकेनोपस्थापकत्वात्तद्व्यञ्जकसंस्थानज्ञान एव धनुःस्थितियोग्यतालाभ इत्यतो धनुःपदस्याधिक्यं धनुरारूढ़त्वलक्षणया परिहृतमित्यर्थः। तादृशलक्षणयैव सङ्गरमध्ये हस्तस्य प्राशस्त्यलाभात् अन्यथा धनुर्विद्याभ्यासार्थं धनुरास्फालनकृतचिह्नस्य हस्तस्य सङ्गरे प्राशस्त्यालाभात् यत्र तु धनुरारूढ़त्वप्रतिपादनेन प्राशस्त्यलाभे तात्पर्यं नास्ति तत्र तदर्थं न धनुःशब्दोपादानमित्याह।

अन्यत्र त्विति। यस्य कार्त्तवीर्यार्जुनस्य कारागृहे आप्रसादात् प्रसादपर्यन्तं लङ्केश्वरेणोषितमित्यन्वयः। विनिश्वसती वक्त्रपरम्परा यस्य इति विग्रहः। अत्र निष्पिष्टभुजत्वादेव वीरत्वलाभ इति भावः।

अत्र। ज्याबन्धज्याघातेति पाठद्वयम्। यदि च धनुरारूढ़त्वप्रतिपादनेऽपि तात्पर्यं तद्गतबन्धपदान्यतरस्मादपि तल्लाभ इत्यपि बोध्यम्। अत्र कारा स्याद्बन्धनालये इत्यमरकोषात् गृहपदपौनरुक्त्यमपि काराशब्दे बन्धमात्रलक्षणया परिहरणीयमिति बोध्यम्। मुक्ता ग्रैवेयकं हार इति कोषान्मुक्ताहारपदे मुक्ताशब्दस्यापि पौनरुक्त्यमुद्धरति।

प्राणेश्वरेति। प्राणेश्वरस्य प्रियस्य परिष्वङ्गेन या विभ्रमस्य विलासस्य प्रतिपत्तयः

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः।
सौन्दर्य्यसम्पत्, तारुण्यं यस्यास्ते, ते च विभ्रमाः।
षट्पदान् पुष्पमालेव कान्नाकर्षति सा सखे !॥
अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः, निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते।

स्थितेष्वेतत्समर्थनम् ॥ १० ॥

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते।
जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥

---

प्राप्तयस्ताभि र्लसता शोभमानेन मुक्ताहारेण तस्याः स्तनद्वयं हसतीवेत्यन्वयः मुक्ताहार एव हास इति भावः ज्ञापकत्वे तु तृतीयः।

अत्रे ति। तथाचान्यरत्नामिश्रितमुक्तावैयर्थ्यवैयर्थ्येणेत्यर्थः। पुष्पमालाशब्दे ऽपि पौनरुक्त्यमुद्धरति।

सौन्दर्य्येति। यस्यास्तारुण्यं ते ते विभ्रमाश्च सौन्दर्य्यसम्पत् सा कान् नाकर्षति षटपदान् पुष्पमालेव।

अत्रे ति। मालाशब्दस्य पुष्पस्रक्त्वेन रूपेण बोधकत्वात् पुष्पमालेत्यत्र पुष्प-पुष्पस्रगिति बोधे पौनरुक्त्यं पुष्पशब्दस्योत्कृष्टत्वे लक्षणया परिहृतमित्यर्थः। उत्कृष्ट-पुष्पविषये इति मालाशब्दार्थैकदेशे यत् पुष्पमुत्कृष्टं तद्विषये इत्यर्थः। न तु पुष्प-पदमुत्कृष्टपुष्प एव लाक्षणिकं तदा पौनरुक्त्यतादवस्थ्यात्। निरुपपदः पुष्प-शब्दोपपदरहितः पुष्पस्रजमेव न तु उत्कृष्टस्रजमित्येवकारार्थः सोपपदत्वे ऽपि पुष्पस्रग्वाचित्वानपायात्। नन्वेवमैच्छिक्या सन्निहितलक्षणया जघनकाञ्च्यादि-शब्दा अपि प्रयुज्यन्तामित्यत आह स्थितेष्विति। रूढ्यास्थितेष्वित्यर्थः रूढ्यभावे तु नेदृशी लक्षणेति व्याचष्टे।

न खल्विति। वागनुकूलक्रियात्वे नैव कण्ठताल्वाद्यभिघातवाचिनो गदधातो-रेव वागनुकूलत्वलाभे। जगाद वाचमित्यत्र यद्वाचमित्यस्य पौनरुक्त्यं तदपि वागनु-कूलत्वांशमपहाय तत्क्रियायामेव गदधातो र्लक्षणया परिहार्य्यमिति मनसिकृत्य तत्पौनरुक्त्यमन्यथा ये परिहरन्ति तन्मतं दूषयति जगादेति। न युक्तमिति ऊचे वचस्तापसकुञ्जरेणेत्यत्र नृपमूचे वचनं वृकोदर इत्यत्र जगाद वाक्यं गिरिराजपुत्री-

इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ, गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्य्यः" इति न युक्तम्। युक्तत्वे वा,

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम्।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते॥

इत्युदाहार्य्यम्।

## ख्यातेऽर्थं निर्हेतोरदुष्टता-

यथा,

चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः॥

अत्र रात्रौ पद्मस्य सङ्कोचः दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति न भुङ्क्ते इति हेतुं नापेक्षते।

---

त्यादौ च विशेषणदानं विनापि तत्प्रयोगात् विशेषणदानेऽपि पौनरुक्त्यानुज्ञा वाच्येति भावः। विशेष्यस्यानुपादाने मधुरत्वं विशेषणं कथं देयमित्यत्राह क्रियाविशेषणत्वेनेति। मधुराचरणशालीति क्रियाविशेषणविधयैव तदुपपत्तिरित्यर्थः। ननु तत् किमन्यतो लभ्यस्य विशेष्यस्य विशेषणदानार्थं क्वापि नोपादानमित्यत्राह।

युक्तत्वे वेति। पौनरुक्त्याभावे यत्र योग्यतावशात् विशेष्यलाभः सम्भवति तत्रैव विशेषणदानार्थं गतार्थविशेष्यस्योपादानमिति हृदयेन तादृशस्थलमुदाहरति।

चरणत्रेति। चरणत्रं पादुका तत्करणकेन कण्टकवेधतः स्वपरित्राणेन हीनाभ्यामपीत्यर्थः। अत्र व्रजनयोग्यतयैव पादलाभो न तु पौनरुक्त्यमतोऽत्रैव विशेषणस्य चरणत्रेत्यादेः ज्ञापनार्थं पादाभ्यामित्यस्य देयत्वादिदमेव तन्नोदाहार्य्यमित्यर्थः। अत्र च क्रियाविशेषणमपीच्छावशात् कर्त्तुं सम्भवतीति बोध्यम्।

ख्यात इति। तद्धेतुकत्वेन ख्यात इत्यर्थः एकत्रापि स्थैर्य्याभावाल्लोला चञ्चला लक्ष्मीश्चन्द्रं गता सती रात्रौ मुद्रितानां पद्मानां गुणान्न भुङ्क्ते न तद्गुणैः शोभिता भवति एवं पद्माश्रिता सती दिवा निष्प्रभचन्द्रसम्बन्धिनीमभिख्यां शोभां न भुङ्क्ते तया न शोभिता भवतीत्यर्थः। द्विसंश्रयां चन्द्रपद्मोभयविषयाम् उमामुखे उभयगुणसत्त्वादिति भावः॥

ऽनुकरणे तु सर्वेषाम्।

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम्, यथा,

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम्।
एष्वैष च गवित्याह सुत्रामाणं यजेति च॥

वक्राद्यौचित्यवशाद्
दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ॥११॥

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः क्रमेणोदाहरणम्,

---

अनुकरणेत्विति। सर्वेषामेव दोषाणामदोषत्वमित्यर्थः परवाक्यानुकारकवाक्यतदर्थयोरनुकार्य्यवाक्यतदर्थदोषैरलिप्तस्य न्याय्यत्वादिति भावः। तत्र श्रुतिकटुत्वच्युतसंस्कृतित्वाप्रयुक्तत्ववद्वाक्यानुकरणे उदाहरति।

मृगचक्षुषमिति। पूर्वार्द्धे श्रुतिकटुत्वस्य तृतीयपादे निर्विभक्त्यन्तस्य नाम्नश्च्युतसंस्कृतित्वस्य चतुर्थपादे सुत्रामपदाप्रयुक्तस्यादोषत्वम्। इति शब्दस्य लिङ्गार्थगोव्यक्तिपरामर्शकत्वादेव च्युतसंस्कृतित्वप्रसक्तिः शब्दमात्रपरामर्शकत्वे तु तस्य निरर्थकत्वेन लिङ्गत्वाभावान्निर्विभक्त्यन्तस्य परामर्शेऽपि न च्युतसंस्कृतित्वं यथा प्रत्यक्षोपजीवकत्वादित्यं तच्छब्दैकदेशमात्रपरामर्शे प्रत्यक्षाविति।

वक्त्रादीति। व्याचष्टे वक्तृप्रतिपाद्येति व्यङ्ग्यपदमत्र रसरूपव्यङ्ग्यपरं न च साक्षात्कार्य्यत्वेन सिद्धान्तितस्य रसस्य कथं व्यङ्ग्यत्वमिति वाच्यम्। व्यञ्जनानन्तरमेव साक्षात्कार्य्यत्वस्य सिद्धान्तितत्वात्। अतएव रसादिध्वनेरलक्ष्यक्रमव्यङ्ग्यत्वपरिभाषाप्युपपद्यते। वैयाकरणादाविति आदिपदात्तार्किकपरिग्रहः। वैयाकरणत्वञ्च न व्याकरणगाढशास्त्रत्वमात्रं सोऽध्यैष्ट वेदानित्यादौ तादृशभट्टिकारवक्तृके श्रुतिकटुत्वदोषोदाहरणत्वानुपपत्तेः किन्तु स्ववैयाकरणताचिख्यापयिषया वक्तरीत्यर्थः। प्रतिपाद्ये तादृशचिख्यापयिषाविषय इत्यर्थः। कष्टत्वं श्रुतिकटत्वम्।

दीधीवेवीट्समः कश्चिद् गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते॥
यदा त्वामहमद्राक्षं शब्दविद्याविशारदम्।
उपाध्यायं तदास्मार्षं समस्प्राक्षञ्च सम्मदम्॥
अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति॥

---

दीधीवेवीडिति। कश्चित् पुरुषः गुणो विद्यादिः व्याकरणविहितः कार्यविशेषस्य वृद्धिः सम्पत् व्याकरणविहितो गुणबाधककार्यविशेषश्च दीधीवेवीधात्वोश्च गुणनिषेधात्तद्बाधिका वृद्धिरपि नास्ति। एवमिडागमस्यापि धातौ विंकरणत्वान्न गुणवृद्धी स्वसन्निहितजनस्यापि गुणवृद्धिप्रतिरोधकः कश्चित् क्विप्प्रत्ययेनोपमीयते क्विप्प्रत्ययेति। यत्र पुरुषे यत्र क्विप्प्रत्यये च सन्निहिते सति ते गुणवृद्धी तत्सन्निहितस्य पुरुषस्य धातोर्वा न स्त इत्यर्थः। यावद्भावेन गुणस्य तद्वारिकाया वृद्धेश्च क्विप्यभवात्। अत्र वेवीट्समेति क्विप्प्रत्ययेति च श्रुतिकटुत्वस्य गुणत्वं तादृशपदोपादानात् वक्तु वैयाकरत्वचिख्यापयिषालाभेनोद्देश्यनिर्वाहकत्वात् एवमुत्तरत्रापि बोध्यम्। वैयाकरणे प्रतिपाद्ये श्रुतिकटुत्वस्य गुणत्वमाह।

यदा त्वामिति। अद्राक्षं दृष्टवानस्मि शब्दविद्या व्याकरणम्। अस्मार्षं स्मृतवानस्मि सम्मदं हर्षम् अस्प्राक्षं स्पृष्टवानस्मि। अत्र प्रतिपाद्यस्य शब्दविद्याविशारदत्वात्तस्य वैयाकरणत्वं निश्चितं वक्तुरुपाध्यायान्तरप्राप्त्या सम्मदस्पर्शित्वेन पूर्वोपाध्यायस्मर्तृत्वेन च अध्येतृज्ञापनान्न गाढवैयाकरणत्वमिति न वैयाकरणवक्तृकोदाहरणमित्यरुचेः। रसरूपव्यङ्ग्यमहिम्ना श्रुतिकटो गुणत्वमाह।

अन्त्रप्रोतेति। प्राकरणिकी ताड़का दर्पोद्धतं यथा स्यात्तथा धावति। कीदृशी अन्त्रेण नाड़िकया प्रोतैर्ग्रथितैर्बृहद्भिः कपालैः नलकैश्च हस्तजङ्घास्थिभिः क्रूरं क्वणन्ति यानि कङ्कणप्रायाणि प्रेङ्खितानि चलानि भूरीणि च भूषणानि तेषां रवैरम्बरमाघोषयन्ती शब्दापयन्ती तथा प्रथमं पीतं ततश्छर्दितं वान्तं यद्रक्तरूपं कर्दमं तस्य घनप्राग्भारेण निविड़सेकेन घोरा तथा उल्लसता व्यालोलेन स्तनभारेण

वाच्यवशाद्यथा,

मातङ्गाः ! किमु वल्गितैः, किमफलैराडम्बरैर्जम्बुकाः !
सारङ्गाः ! महिषाः ! मदं व्रजत किं ! शून्येषु शूरा न के।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुनः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम् ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः। प्रकरणवशाद्यथा,

रक्ताशोक ! कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनम् ?
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ?।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ? ॥

अत्र शिरोविधूननेन कुपितस्य वचसि।

---

भैरववपुरित्यर्थः। अत्र पादत्रयव्यङ्ग्यो बीभत्सरसश्चतुर्थपादव्यङ्ग्यश्च वीरो रसः ओजोगुणव्यञ्जनादुभयस्यैवानुगुणाः कटुवर्णा इति तस्य गुणत्वम्।

मातङ्गा इत्यादि। वल्गितैरित्यादौ सगर्जितैरिति शेषः। तदेव परार्धगर्जितविशेषप्रशंसालभ्यस्योक्त्यार्जितानर्थक्यस्योपपत्तेः। इभारेः सिंहस्य सिन्धोरिव प्रतिध्वानवति हुङ्कृते यद्गर्जितं स्फुरति तदेव गर्जितं प्रशस्तगर्जितमित्यर्थः। इभारेः कीदृशस्य कोपाटोपेन क्रोधसंरम्भेण समुद्भटा उत्कटा भीषणा शटाकोटिर्यस्य तादृशस्य अस्य सिंहविषयभावध्वनित्वान्न व्यङ्ग्यमहिम्ना परुषा वर्णा इत्यत आह। सिंहे वाच्य इति।

रक्ताशोकेति। उन्मत्तस्य पुरूरवस उक्तिरियम्। नु भो रक्ताशोक ! कृशोदरी उर्वशी मामनुरक्तं जनं त्यक्त्वा क्व गता रक्ताशोकेति। अनुरक्तत्वशोकनाशकत्वसूचकं सम्बोधनं तस्य वायुकम्पमानशिरोदर्शनात् पुनराह वातेनाहतमेव वातव्याध्यभिभूतं शिरो न दृष्टेतिसूचकं चालयसि किं मुधा व्यर्थमित्यर्थः कुत इत्यत्राह तस्याः पादाहति मन्तरेण भवतोऽयं पुष्पोद्गमः कुतः कीदृशः उत्कण्ठया घटमान या षट्पदानां घटा समूहस्तया सङ्घट्टेन परस्परघर्षणेन दष्टच्छदो यस्य तादृशः मकरन्दाप्राप्त्या च्छदमपि दशन्तीति भावः।

अत्रेति। शिरोविधूननव्यङ्ग्ये उत्कण्ठेत्याद्युक्त्या प्रकरणवशता। क्वचिच्छो भावोत्यु दाहर्त्तुमाह क्वचिदिति।

क्वचिन्नीरसे न गुणो न दोषः, यथा,

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ यथा,

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

---

श्रुतिकटुत्वं न गुणो न दोष इत्यर्थः ।

शीर्णघ्राणेति । यो घर्मांशुरेकः स्वतुल्यद्वितीयरहितः शीर्णघ्राणाङ्घ्रिपाणीन् कुष्ठरोगविशीर्णनासिकापादपाणीन् जनानुल्लाघयन् गदान्निर्गतान् कुर्वन् पुनरपि घटयति घ्राणाङ्घ्रिपाणिभि र्योजयति । कीदृशान् व्रणिभिः क्षतविशिष्टैरपघनैः शरीरैर्विशिष्टान् अतएव घर्घराव्यक्तशब्दान् अघौघैर्जन्मान्तरीयपापसमूहै दीर्घाघ्रातान् चिरकालं प्राप्तान् तस्य घर्मांशो र्घृणयो रश्मयो वः शीघ्रमंहसां पापानां विघातं विदधतु कुर्वन्त्वित्यर्थः । तस्य कीदृशस्य द्विगुणा दैवतान्तरापेक्षया द्विगुणा याऽन्तर्गता घनघृणा सततकृपा तन्निघ्ना तदायत्ता निर्विघ्ना च वृत्तिर्यस्य तादृशस्य । उल्लाघो निर्गतो गदादिति कारुण्यं करुणा घृणेति गभस्तिघृष्णिघृणय इति अंहो दुरित दुष्कृतमिति चामरः । घृणयः कीदृशाः सिद्धसमूहैर्नभसि दत्तार्घाः । सूर्यविषयभावध्वनिरयमतो नीरसत्वात् त्वदोर्योजोगुणव्यञ्जकता नास्तीत्यतो न गुणः न च भाववृत्तिगुणानङ्गीकारे भावध्वनौ सगुणत्वघटितकाव्यलक्षणाव्याप्तिः तत्र माधुर्याङ्गीकारे च तन्माधुर्यबोधप्रतिबन्धकत्वादेव दोष इति वाच्यम् । समस्तपद्यव्यापकत्व एव प्रतिकूलवर्णतया तत्प्रतिबन्धात् न तु प्रादेशिकत्वे अनुप्रासवशात् श्रुतिदुःखदायकत्वमपि नास्तीति सरेफाणां वर्णानां श्रुतिकटुत्वं न दोष इति भावः ।

अप्रयुक्तेति इदमपि नीभावित्यस्योदाहरणम् ।

येन ध्वस्तेति । त्वां सर्वदः सर्वदाता माधवः सर्वदा उमाधवः पार्वतीपतिश्च पायात् । माधवः कीदृशः अन्धकेषु यदुषु श्रीकृष्णमूर्त्या स्वयं निवासकारी क्षितिवास-

यस्याहुः शशिमच्छिरोहर इति स्तुत्यञ्च नामामराः,
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः॥
अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ।
अश्लीलं क्वचिद्गुणः, यथा, सुरतारम्भगोष्ठ्याम्,
(द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु" इति कामशास्त्रस्थितौ)
करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोड़िते।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते॥ (व्रीड़ा०)

---

गत्योरित्यस्य रूपं पक्षेऽन्धकासुरस्य स्वयं हन्ता येन माधवेन अभवेन अनुत्पत्तिनाऽनः शकटं ध्वस्तं बलिजिद्बलिनामासुरजेता स्वकायः पुरा स्त्रीकृतो नारीकृतोऽमृताहरणे मोहिनीरूपधारणात्। पक्षे ध्वस्तमनोभवेन कामारिणा येन बलिजितो विष्णोः कायः पुरस्य त्रिपुरासुरस्य नाशाय अस्त्रीकृतस्त्रिपुरदाहे विष्णोः शररूपत्वात्। यश्च माधवः उद्वृत्तस्य दुर्वृत्तस्य भुजङ्गस्य सर्परूपाघासुरस्य हन्ता रवस्य शब्दरूपब्रह्मणो लयो लीनता यत्र तादृशः पक्षे यश्चोद्वृत्तभुजङ्गस्वरूपाहारवलयः यश्च माधवोऽगं गोवर्द्धनाचलं वराहमूर्त्त्या गां पृथ्वीञ्चाधारयत्पक्षे गङ्गाम्। यस्य माधवस्य नाम शशिमथो राहोः शिरोहर इति स्तुत्यममरा आहुः पक्षे यस्य शिरः शशिमत् चन्द्रयुक्तं हर इति स्तुत्यं नाम च अमरा आहुः।

अत्रेति। शशिमच्छब्दस्य राहावप्रयुक्तत्वम् अन्धकक्षयकर इति समासवशादेक एव शब्द इत्यतो द्विवचनम्। समासपदैकदेशपदद्वयञ्च निहतार्थम् अन्धकासुरे नाशे चान्धकक्षयशब्दयोः प्रसिद्धेः। सुरतारम्भेति सुरतस्यारम्भो यस्यां तादृशगोष्ठ्यां वक्तामित्यर्थः। पिशुनयेत् सूचयेत् रहस्यवस्तु गोप्यवृत्तं कामशास्त्रस्य स्थितौ नियमे सतीत्यर्थः।

करिहस्तेनेति। सम्बाधे आवृते साधनस्य सैन्यस्य अन्तर्मध्ये प्रविश्य उपसर्पन् चलन् पुंसां ध्वजः पताका विराजतु। कीदृशे करिणां हस्तेन विलोड़िते द्विधा कृते अथच श्लेषवशादश्लीलार्थ एव व्यञ्जनया प्रतिपाद्यः यथा साधनस्य स्त्रीणां गुह्याङ्गस्यान्तःप्रविश्य उपसर्पन् पुंसां ध्वजो लिङ्गं विराजते कीदृशे बालिकायास्तादृशाङ्गत्वेन सबाधे सङ्कुचिते तदुपसर्पणोपायमाह करिहस्तेनेति। तर्जन्यनामिके युक्ते मध्यमा स्याद् बहि र्यदि। करिहस्तः समाख्यातः कामशास्त्रविशारदैरित्यनेन परि-

शमकथासु,

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते ॥ (जुगु०)

निर्वाणवैरदहनाः प्रशमादरीणाम्
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

अत्र भाव्यमङ्गलसूचकम् । सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्य्यवसायित्वे गुणः,

---

भाषितेनाङ्गुलिवर्येण विलोड़िते आस्फालिते । व्रीड़ाश्लीलार्थस्यैवावोद्देश्यत्वादगुणत्वम् । शमकथासु शान्त्यर्थं कथासु ।

उत्तानेति । पाटितं दारितं स्त्रीणां वराङ्गमेव व्रणाकारत्वाद्व्रणः सक्तिरासङ्गः जुगुप्साश्लीलार्थस्यैवावोद्देश्यत्वाद गुणत्वम् ।

निर्वाणेति । नटस्येयं कुरूणाममङ्गलसूचकोक्तिः आपाततः कुरुपाण्डवयोरप्याशीः । वैरदहनो वैरितारूपोऽग्निः अरीणां कौरवाणां प्रशमाच्छान्त्यवलम्बनात् कुरुराजसुता दुर्य्योधनादयः स्वस्थाः सुस्था भवन्तु वकारवानयं सकारः कीदृशाः रक्ता अनुरक्ता प्रसाधिता आयत्तीकृता भूर्भूलोको यैस्तादृशाः क्षतविग्रहाव्यक्तयुद्धाः ।

अत्रेति । कुरूणां भाविनोऽमङ्गलस्य सूचनमित्यर्थः तथाहि अरीणां प्रशमान्मरणात् तथा रक्तेन रुधिरेण प्रसाधिता भूर्यैः क्षता विग्रहाः शरीराणि येषां ते कुरुराजसुताः स्वस्थाः स्वर्गस्था भवन्त्विति । अघोषपरे सकारे स्वःशब्दस्य विसर्गलोपः । अमङ्गलाश्लीलस्यैवावोद्देश्यत्वादगुणत्वम् । सन्दिग्धमपीति सन्देहजननयोग्यपदमपीत्यर्थः । वाच्यमहिम्नेति । प्रत्येकवाक्यार्थान्वयिविभिन्नवाच्यमहिम्नेत्यर्थः । नियतार्थेति । एकैकवाच्ये सन्देहकोटीभूतयोः स्वार्थयोः प्रतीतिकारित्वे इत्यर्थः । अतएव सन्देहफलाभावात् सन्दिग्धपदमव सन्देहयोग्यपरतया व्याख्यातं ईदृशत्वे च क्वचिद्व्याजस्तुतिः पर्य्यवसतीत्याह व्याजस्तुतीति । ननु सर्वत्रैव व्याजस्तुतिपर्य्यवसायित्वम् ।

यथा,

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव!।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्॥

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः, यथा,

आत्मारामा विहितरतयो निर्विकल्पे समाधौ,
ज्ञानोद्रेकाद्विघटितमनोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्,
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम्॥

---

नीपं दृष्ट्वा हरितकपिशं केशरैरर्द्धरूढ़ैः
आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्।
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम्॥

इत्यत्र सारङ्गपदस्य भृङ्गहरिणादिरूपनियतार्थप्रतीतिकारित्वेऽपि व्याजस्तुतिपर्य्यवसायित्वाभावात् गुणत्वम् सन्देहयोग्यपदेनापि स्वार्थद्वयस्य विभिन्नान्वयनिश्चयजननात्।

पृथुकार्त्तेति। राज्ञि दरिद्रस्योक्तिरियम्। हे देव! तव मम चावयोः सदनं गृहं समं तव पृथूनि कार्त्तस्वरस्य सुवर्णस्य पात्राणि यत्र तादृशं सदनं मम तु पृथुकानां शिशूनां क्षुधार्त्तत्वादार्त्तस्वरस्य पात्रं तव भूषिता अलङ्कृता निःशेषपरिजना यत्र तादृशं मम तु भुवि उषिताः सुप्ता निःशेषपरिजना यत्र तादृशं तव विलसन्तीभिः करेणुभि र्हस्तिनीभिर्गहनं व्याप्तं मम तु विले गर्त्ते सत्काः कुत्सितं सन्तो मूषिका पिपीलिकादयस्तेषां रेणुभिर्गहनमपरिष्कृतत्वात् कुत्सायां कः। अत्र श्लिष्टपदानामर्थद्वयस्यैव विभिन्नान्वयिन्यन्वयनिश्चयाद्गुणता राज्ञश्च व्याजस्तुतिः पर्य्यवस्यति। ज्ञत्वे विज्ञत्वे गुणत्वञ्च प्रतिपाद्यस्य तदर्थ एव शीघ्रप्रतीतेः।

आत्मारामा इति। दुर्य्योधनेन कृष्णं बद्धुं प्रयतितमिति श्रुत्वा भीमस्योक्तिरियम्। निर्विकल्पे द्वैतादर्शिनि समाधौ विहितरतयो जना यं कमपि अनिर्वचनीयं वीक्षन्ते मोहान्धोऽयं दुर्य्योधनस्तममुं पुराणं देवं कथं वेत्ति यं कीदृशं तमसां ज्योतिषां वा परस्तात् बहिर्भूतं तमःसहकारिणा इन्द्रियेण ज्योतिःसहकारिणा

षड़धिकदशनाड़ीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः, यथा,

फुल्लुक्करं कलमकूरणिहं वहन्ति
जे सिन्धुवारविड़वा मह वल्लहा दे।
जे गालिदस्स महिसीदहिणोसरिच्छाः
दे किञ्च मुद्ध विअइल्लपसूणपुञ्जा॥

अत्र, कलमकूरमहिसीदहिशब्दा ग्राम्या अपि विदूषकोक्तौ।

---

इन्द्रियेण वाऽग्राह्यत्वात् ध्यानैकगम्यत्वात् समाधौ विहितरतयः कीदृशाः आत्मारामाः आत्मन्येव रमन्तः तमोग्रन्थिरज्ञानवासना ज्ञानस्य तत्त्वज्ञानस्य उत्सेकादुद्बोधाद्विघटिततत्काः सत्त्वनिष्ठाः सात्त्विकाः। अत्रात्मारामादिपदानि योगशास्त्र एव प्रतीतानि प्रतिपाद्यः सहृदयश्च तज्ज्ञः। स्वयं परामर्शो वक्तुरेव स च तदर्थज्ञातैवेति तस्याप्रतीतपदं विलक्षणप्रतीतिकारित्वाद् गुण इत्यर्थः।

षड़धिकेति। मालतीमाधवे कपालकुण्डलायाः शिवस्तुतिरियम्। स शक्तिनाथो महेशो जयति। कीदृशः शक्तिभिः पार्वतीमूर्त्तिभिः परिणद्धो वेष्टितः तद्विदां तं जानतां योगिनां षड़धिकदशनाड़ीचक्रस्य इड़ापिङ्गलादिषोड़शनाड़ीचक्रस्य मध्ये स्थितात्मा सन् हृदि विनिहितरूपः हृदा एवं ध्येयः सन् सिद्धिदाता अविचलितमनोभिः स्थिरचित्तैः साधकैर्मृग्यमाणो ध्यानेन ग्रहीतुं चेष्यमानः। अत्र षड़धिकादिपदानामप्रतीतत्वेऽपि स्वयं परामर्शाद् गुणत्वम्।

अधमेति। अधमताप्रकाशनस्यैवोद्देश्यत्वाद् गुणत्वम्।

पुष्पोत्करं कलमभक्तसमं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते।
ये गालितस्य महिषीदध्नः सदृशाः ते किञ्च मुग्धविचकिलप्रसूनपुञ्जाः॥

इति संस्कृतम्। ये सिन्धुवारविटपाः शालिभक्तसमं पुष्पोत्करं वहन्ति ते मम वल्लभाः किञ्च ये मथितस्य महिषीदध्नः सदृशास्ते सुन्दरमल्लिकापुष्पपुञ्जा अपि मम वल्लभा इत्यर्थः। क्वचिदिति पदन्यूनताया एव यत्र भावपोषकत्वं तत्रेत्यर्थः।

न्यूनपदं क्वचिद्गुणो, यथा,

गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मा मा मानद ! माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु ! मृता नु किं ! मनसि किं लीना ! विलीना नु किम् ! ॥

क्वचिन्न गुणो न दोषः, यथा,

तिष्ठेत्कोपवशात् प्रभावपिहिता ? दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता भवेत् ? मयि पुनर्भावार्द्रमस्या मनः।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीम्,
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥

---

गाढेति। सख्यौ रतिवृत्तं कथयतः सख्युरुक्तिरियम्। चलमित्यस्य पीड़येति शेषः। हे मानद ! मां मा मा इत्यलं पीड़येत्यन्वयः इति क्षामस्याल्पस्याक्षरस्योल्लापिनी प्रिया भावातिशयेन निष्पन्दत्वात् किं नु सुप्ता निद्रिता निद्रितत्वे स्पन्दः स्यादित्यत आह मृता न्विति। मृतत्वेऽन्तर्गता न स्यादित आह मनसीति। तथात्वेऽपि स्खलिता स्यादित्यत आह विलीनेति। अस्खलनलययोरेवेत्यर्थः कीदृशी सत्येवं भूतेत्यत आह गाढेति। गाढालिङ्गनखर्वितकुचासौ प्रोद्भिन्नरोमोद्गमा चेति विग्रहः न तु कुच एव रोमोद्गमः कविभिस्तथाऽवर्णनात्। तथा सान्द्रेण निविड़ेन स्नेहरसातिरेकेण विगलत् श्रीमती नितम्बादम्बरं यस्यास्तादृशी। अत्र पीड़येति वक्तुमसामर्थ्यस्य भावातिशयसूचकस्य व्यञ्जकं न्यूनपदमिति गुणत्वम्।

क्वचिदिति। न्यूनपदत्वं न गुणो न दोष इत्यर्थः।

तिष्ठेदिति। उन्मत्तस्य पुरूरवसो वितर्कोक्तिरियम्। प्रभावेण दैव्या शक्त्या सा उर्वशी पिहिताऽदृश्या तिष्ठेदिति। वितर्कं निषिध्यति दीर्घमिति एवमुत्तरवितर्केऽपि मयि पुनरित्यनेन निषेधः तां हर्त्तुमित्यत्र तु निषेध एवासुराहरणतर्कसूचकः मे पुरोवर्त्तिनी सेत्यन्वयः हि अवधारणेनैवेत्यर्थः। अगोचरमगोचरत्वं याता प्राप्ता विधिः प्रकारः उत्तराप्रतिपत्तिः पुरःप्रतिपत्तिविरुद्धविषया बोध्या घटप्रतिपत्त्युत्तरायाः पटप्रतिपत्तेर्घटप्रतिपत्त्यबाधकत्वात्। क्वचिद्गुण इति यत्राधिक्यवशादेव तादृशपदे लक्षणा यत्र वीप्सितत्वादेव विशेषार्थव्यञ्जना तत्रेत्यर्थः।

अत्र पिहितेत्यतोऽनन्तरं नैतद्यत इत्येतैन्र्यूनैः पदै विशेषविधेरकरणान्न गुणः उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः। अधिकपदं क्वचिद्गुणः, यथा,

यद्वञ्चनाहितमतिर्बहु चाटुगर्भम्
कार्य्योन्मुखः खलजनः कृतकं ब्रवीति।
तत्साधवो न, न विदन्ति, विदन्ति, किन्तु,
कर्त्तुं वृथा प्रणयमस्य न पारयन्ति॥

अत्र, विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम्। यथा वा, वद वद! जितः स शत्रुः? न हतो जल्पंश्च तव तवास्मीति। चित्रं चित्रम्! अरोदीद्धाहेति परं मृते पुत्रे॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि।

कथितपदं क्वचिद्गुणः, (लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च) क्रमेणोदाहरणम्,

सितकरकररुचिरविभा विभाकराकारधरणिधरकीर्त्तिः।
पौरुषकमला, कमला सापि तवैवास्ति नान्यस्य॥ (लाटा०)

---

यद्वञ्चनेति। वञ्चने प्रतारणे आहितमतिर्दत्तमतिः स्वकार्य्योन्मुखः खलजनो बहु चाटुगर्भं कृतकं कृत्रिमं यद् ब्रवीति साधवो जनास्तन्न न विदन्ति अपि तु विदन्ति किन्तु तस्य प्रणयं वृथा कर्त्तुं न पारयन्तीत्यर्थः अन्ययोगेति। साधुभ्योऽन्यस्मिंस्तद्वेदनयोगव्यवच्छेदपरमित्यर्थः। तथाच विशेष्यसङ्गतैवकारार्थे लक्षणेत्युक्तं न नेति। निषेधद्वयाच्चायोगव्यवच्छेदलाभे साधव एव विदन्त्येव इत्यर्थः पर्य्यवस्यति। वीप्सायामेकपदाधिक्यं परिहरति।

वदवदेति। जितारातौ सेनापतौ वदवदेति राज्ञः पृच्छा जित इत्यादिकं सेनापतेरुत्तरं तव तवास्मीति जल्पन् शत्रुर्न हत इत्यर्थः। चित्रं चित्रमिति राज्ञ उक्तिः अरोदीदित्यादि सेनापतेः शत्रुर्न हतस्तत्पुत्र एव हतः शत्रुस्तु हाहेत्यरोदीदित्यर्थः। अत्र वीप्सितपदानां वक्तृव्यक्तय एव वाच्यार्थाः हर्षादयस्तु व्यङ्ग्याया इत्याह। अर्थेति। लाटानुप्रासः पदानुप्रासः स चाग्रे वक्ष्यमाणः।

सितकरेति। हे विभाकराकार! हे सूर्य्यतुल्य! हे धरणिधर! पृथ्वी-

ताला जाअन्ति गुणाः, जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइं होन्ति कमलाइं कमलाइं ॥ (अर्था०)

जितेन्द्रियत्वं विनयस्य कारणम्,
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते,
जनानुरागप्रभवा हि सम्पदः ॥ (वि० अ०)

एतत्प्रकर्षमपि क्वचिद्गुणः, यथा, उदाहृते [२३४पृ०] प्रागप्राप्तेत्यादौ ॥ समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते यथाऽत्रैव प्रागप्राप्तेत्यादौ ॥ अपदस्थसमासो क्वचिद्गुणः, यथा, उदाहृते [२८५पृ०]रक्ताशोकेत्यादौ ॥ गर्भितं तथैव यथा,

---

पालक ! सितकरस्य चन्द्रस्य करवद्रुचिरविभा कीर्त्तिस्तवैवास्ति नान्यस्य तथा सा प्रसिद्धा कमलापि तवैव पौरुषकमला पौरुषमेवाधिष्ठानं कमलं यस्यास्तादृशी चेत्री लक्ष्मीरन्यस्य पौरुषाधिष्ठात्री लक्ष्मीस्तु तवैवेत्यर्थः । अत्रानुप्रासाधायकत्वादेव कथितपदं गुणः । अर्थान्तरसंक्रमितवाच्ये तदाह । ताला इति ।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ इति संस्कृतम् ।

अत्र द्वितीयकमलपदमुत्कृष्टपरतयाऽर्थान्तरसंक्रमितवाच्यं तादृशार्थबोधकत्वादेव गुणः । विहितानुवादे त्वाह ।

जितेन्द्रियत्वमिति । अत्र विनयादयो विहितानुवाद्यास्तत्र च कथितपदेनोक्तात्रैव नार्थान्तरावभास इति प्रागुक्तत्वाद् गुणत्वम् । क्वचिद् गुण इति यत्र तादृशप्रकर्षोऽननुगुणः प्रागप्राप्तेत्यादौ हि गुरुस्मरणे क्रोधाभावादुद्धतवर्णानुप्रासप्रकर्षस्याननुगुणत्वात्तत्पातो गुणः । न पुनर्ग्रहणमिति । ननु पुनर्ग्रहणाभावे समाप्तपुनरात्तताप्रसक्तिरेव नास्तीत्यत आह ।

यत्रेति । वाक्यान्तरेणैव पुनरात्तता नानुषङ्गेण यत्रेत्यर्थः प्रागप्राप्तेत्यादौ हि येनानेनेत्यनेन वाक्यान्तरेण परशोः पुनर्ग्रहणं नानुषङ्गेण । उदाहृते रक्ताशोके-

होमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओवि।
सिविणेवि तुमम्मि पुणो पत्तिहि भत्तिं ण पसुमरामि॥

अत्र, प्रतीहीति मध्ये, दृढ़प्रत्ययोत्पादनाय॥ एवमन्यदपि लक्ष्यान्लक्ष्यम्।

**व्यभिचारिरसस्थायि भावानां शब्दवाच्यता।**
**कष्टकल्पनया व्यक्तिरनुभावविभावयोः॥ १२॥**
**प्रतिकूलविभावादि ग्रहो दीप्तिः पुनः पुनः।**
**अकाण्डे प्रथनच्छेदौ अङ्गस्याप्यतिविस्तृतिः॥१३॥**
**अङ्गिनोऽननुसन्धानं, प्रकृतीनां विपर्य्ययः।**
**अनङ्गस्याभिधानञ्च रसे दोषाः स्युरीदृशाः॥१४॥**

---

त्यादाविति तत्र शिरोविधूननेन कुपितस्य वचसि दीर्घसमासस्यानुगुणत्वात् न च तत्कथमपदस्थतेति वाच्यम्। शृङ्गारीयपद्यस्थत्वात्। तथैवेति क्वचिद्गुण इत्यर्थः। होमिअ इति।

भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि।

स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरिष्यामि॥ इति संस्कृतम्।

कामं प्रति तन्मखस्य वसन्तस्योक्तिरियम्। अपहस्तितरेखो दूरीकृतमर्य्यादः निरङ्कुशोऽनर्गलः भद्राभद्रविवेकशून्यश्चाहं भवामीत्यर्थः। त्वयि भक्तिं पुनः स्वप्नेऽपि न प्रस्मरिष्यामि एतत् प्रतीहि इत्यर्थः। प्रस्मरिष्यामीत्यर्थे पसुमरामीति प्राकृतोपकारात् परोक्षकारीपरि सकारः स्मृधातोः स्यासीत्यस्य च सिमीति रूपम्।

अत्रेति। अयं भावः। यदि वाक्यार्थप्रतीत्यनन्तरं दृढ़प्रत्यायनं क्रियते तदा तन्निष्फलं वाक्यार्थप्रतीते र्जातत्वेन तत्र दार्ढ्योत्पादनासम्भवात् दृढप्रतीत्यनन्तरस्य चाशब्दत्वात् अतः शाब्दप्रतीतावजातायामेव दृढतदुत्पादनमुचितमिति मध्ये तत्कर्तव्यं न चैवमादौ तत्कर्त्तव्यमिति वाच्यम्। कतिपयपदार्थोपस्थितावेव बोध्यः शुश्रूषाविशेषोदयात् नचैवं वदामि भवतस्तत्त्वमित्यपि दृढ़प्रत्यायनमस्तु तत्कथं तत्र

स्वशब्दोपादानं व्यभिचारिणो यथा,

सव्रीड़ा दयितानने, सकरुणा मातङ्गचर्माम्बरे,
सत्रासा भुजगे, सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ, दीना कपालोदरे,
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

अत्र व्रीड़ादीनाम्, व्यानम्रा दयितानने, मुकुलिता मातङ्गचर्माम्बरे, सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि । भीलद्भ्रूः सुरसिन्धुदर्शनविधौ, म्लाना कपालोदरे त्यादि तु युक्तम् ।

---

गर्भितत्वदोष उक्त इति वाच्यम् तत्र दुर्जनसङ्गतित्यागस्य सार्वलौकिकप्रसिद्धत्वेन तत्प्रतीते र्दृढ़त्वस्यायत्नसिद्धत्वेन तत्र तत्करणानौचित्यात्प्रकृते तु त्वयि भक्तिप्रसरणाभावस्य तदुक्तिमात्रलभ्यत्वेन दृढ़प्रत्ययस्यान्यतोऽनुपपत्तेः एवं स्वीयजनस्याकार्य्यकारित्वश्रवणादेव क्रोधाविर्भावाद्दृढ़प्रतीतिरुत्पद्यत इति तत्रापि तदर्थं न गर्भितकरणमित्यतो लग्नं रागावृताङ्ग्यत्रापि तथात्वं दोषः ।

रसदोषान् सूचयति । व्यभिचारीति व्यभिचारी व्यभिचारिभावः । शब्दवाच्यता स्ववाचकशब्देनोपादानम् ।

सव्रीड़ेति । नवसङ्गमः प्रथमपतिदर्शनं पार्वत्यास्तत्प्रणयिनी तत्र नियुक्ता दृष्टि र्वः शिवायास्तु कादृशी दयितस्य महेशस्यानने विषये सव्रीड़ा नवोढ़ात्वात् मातङ्गचर्मरूपेऽम्बरे विषये सकरुणा हतं मातङ्गं प्रति कारुण्यवती भुजगे विषये त्रासवती अमृतस्यन्दिनि चन्द्रे विषये विस्मयात्मकरसवती एतादृशमहात्मनस्य चर्माम्बरवतोऽसम्भवात्सेर्ष्या सपत्नीत्वबुद्ध्या कपालोदरे विषये दैन्यवती एतादृशामङ्गलभूषण एव मम स्वामीति बुद्ध्या दैन्यम् ।

अत्रेति । यद्यपि करुणविस्मययो र्व्यभिचारिभावमध्ये गणनं नास्ति तथापि कारणान्यथकार्य्याणि सहकारीणि यानि चेत्यत्र रत्यादे रित्युक्तेव प्राप्तौ यत्स्थायिन इत्युपादानं तद्रत्यादीनां रसान्तरे व्यभिचारिभावत्वज्ञापनार्थमत एव शृङ्गारे क्रोधह्रासावपि व्यभिचारिभावावित्यालङ्कारिकाः । तदत्र करुणपदार्थः शोको विस्मयश्च

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम्, क्रमेणो-दाहरणम्,

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिरामरूपाम् ।
पश्यैष बाल्यमतिवृत्त्य विवर्त्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥

---

पार्वत्याः पत्यालोकनव्यङ्ग्ये शृङ्गारे व्यभिचारिभावे वेति । तदभिप्रायेणेदमुक्तमिति प्राचीनाः । वस्तुतस्तत्र शृङ्गारे तयोरनुपयुक्तत्वेन तथात्वाभावात्तानपहायैवात्र प्रकृतोदाहरणतेति युक्तम् । ईर्ष्यात्वासूयात्मको व्यभिचारिभाव एवेति बोध्यम् । पाठं परावर्त्तयति व्यानम्रेति नम्रत्वं व्रीड़या मुकुलनं शोकस्य उत्कम्पस्त्रासस्य निर्निमेषत्वं विस्मयस्य भ्रूनिमीलनमीर्ष्याया म्लानिर्दैन्यस्यानुभावा इति तदुपादानेनैव तद्व्यञ्जनमुचितमित्यर्थः ।

तामनङ्गेति । तां नेत्रयो र्गोचरे कृतवतोऽस्य निरन्तरो निविड़ः कोऽपि रसोऽजायत तां कीदृशीं किञ्चिदुच्चभुजमूलावच्छेदेनावलोकितामित्यर्थः । तथात्वे भुजमूलदर्शनेन कामोद्दीप्तिः । नन्वेतत्काव्यश्रवणजन्यो रसः श्रोतृनिष्ठ एव ज्ञान-सम्बन्धेन श्रोतृनिष्ठस्य नायकरत्यादेरेव रसत्वस्य सिद्धान्तितत्वात् नायकस्तु नैत-त्काव्यश्रोता किन्तु नायिकादर्शनजन्यरतिमानेव तथाच तस्य रतिरजायतेत्येवार्थः । ततश्च स्थायिभावस्यैव शब्दवाच्यत्वं लक्षणीयत्वं वा न रसस्य तस्य तु तत्तत्काव्यस्थ-शब्देन वाच्यता न सम्भवत्येवेत्युक्तं गुणीभूतव्यङ्ग्ये रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्य इत्यनेन सत्यं रसादिशब्दैः स्थायिभावस्योपादान एवात्र रसस्य स्वशब्दवाच्यता-दोष इत्युक्तौ स्थायिभावस्य पृथगुपादानं पुनरुक्तिरेवेति वाच्यम् । स्थायिभावस्यैव रसवाचकशब्देन स्ववाचकशब्देन वा उपादानमित्याशयेन दोषद्वयकथनात् ।

आलोक्येति । बाल्यमतिवृत्त्य विवर्त्तमान एव पुमान् अभिरामरूपां नायिका-मवलोक्य शृङ्गारस्य सीमनि पार्श्वे तरङ्गितं गतागतमातनोति एतत्पश्य कीदृशीं

स्थायिनो यथा,

सम्प्रहारे प्रहरणैः प्रहाराणां परस्परम्।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत्॥

अत्रोत्साहस्य।

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्य्यवसायिनः स्थिता इति कष्टकल्पना।

परिहरति रतिं, मतिं लुनीते,
स्खलति भृशं, परिवर्त्तते च भूयः।
इति वत विषमा दशाऽस्य देहम्
परिभवति प्रसभं, किमत्र कुर्मः॥

---

कोमलकपोलतलेऽभिषिक्तेनाभिषेकेण व्यक्तो योऽनुरागस्तेन सुभगामित्यर्थः। अभिषिक्तेति भावे क्तः। कपोलावलोकनेनानुरागव्यक्तिभावात्।

सम्प्रहार इति। युद्ध इत्यर्थः। प्रहरणैरस्त्रैः परस्परं प्रहाराणामित्यन्वयः। अनुभावस्य कष्टकल्पनया व्यक्तिमाह।

कर्पूरेति। शिशिररोचिषि चन्द्रे सति सा नायिका तस्य यूनो नयनावनौ नयनविषयतायाम् अभूदित्यर्थः। चन्द्रे कीदृशे कर्पूरधूलिवत् धवलद्युतिपूरेण धौतदिङ्मण्डले सा कीदृशी लीलया शिरसि अंशुकनिवेशस्य विशेषक्लृप्तिव्यक्तस्तनोन्नतिः तदर्थं हस्तोत्क्षेपेण स्तनोन्नतिदर्शनात्। अत तस्य शान्तशृङ्गारित्वान्यतरनिश्चायकाभावेन अनुभावस्य चक्षुःप्रसारणस्य कष्टकल्पनया व्यक्तिमाह।

परिहरतीति। अत्र सर्वास्वेव क्रियासु अयं कर्त्ता बोध्यः। रतिं विहारस्पृहां परिहरति त्यजति लुनीते नाशयति इति विषमा दशा अस्य देहं परिभवतीत्यन्वयः प्रसभं बलात्। प्रयत्नप्रतिपाद्य इति प्रकरणानुसन्धानमेवात्र यत्नः अत्र च विभावा-

अत्र, रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात्कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः।

प्रसादे वर्त्तस्व, प्रकटय मुदं, सन्त्यज रुषम्,
प्रिये! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः।
निदानं सौख्यानां क्षणमभिमुखं स्थापय मुखम्,
न मुग्धे! प्रत्येतुं प्रभवति गतः कालहरिणः॥

अत्र, शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः।

णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू॥

---

दीनां प्रतिकूलसाबीयत्वाभावान्न प्रतिकूलविभावादिग्रहदोषप्रसक्तिः तन्माचीयत्व एवं तथात्वस्य व्यक्तीभविष्यत्त्वात्। प्रतिकूलविभावस्थायिभावव्यभिचारिणां ग्रहमेकत्रैव दर्शयति। प्रसादे इति शुष्यन्ति शोषं लभमानानि अङ्गानि कर्मभूतानि अमृतमिव ते वचः कर्तृ सिञ्चतु इत्यन्वयः। प्रत्येतुं प्रत्यागन्तुम्।

अत्रेति। कालोऽत्र जीवनकालः तदनित्यतया जीवनस्यैवानित्यत्वं कालस्य नित्यत्वात् तथाच स्वजीवनानित्यत्वप्रकाशनरूपः शान्तभावस्य विभाव इत्यर्थः। एवं तत्प्रकाशितो निर्वेदोऽपि शान्तिभाचीयः। न च निर्वेदः कथं शान्तस्य व्यभिचारी उक्तसदीयस्थायिभावत्वादेव तस्येति वाच्यम्। प्रकृते शृङ्गारे उपात्तो व्यभिचारिनिर्वेदः प्रतिकूलशान्तरसीय इत्येव तदर्थात् प्रतिकूलविभावादीत्यादिपदेन तदीयस्थायिभावस्याप्युक्तत्वात् यौवनानित्यत्वप्रकाशनन्तु न शान्तभावीयं जरतोऽपि कामसत्त्वात् अतएव त्यजत मानमलं तव विग्रहैर्नपुनरेति गतं चतुरं वय इति रघाव दुष्टम्। प्रतिकूलानुभावग्रहमुदाहरति। णिहुअरमणम्मेति।

निभृतरमणे लोचनपथं पतिते गुरुजनमध्ये।
सकलपरिहारहृदया वनगमनमेव महति वधूरिति॥ संस्कृतम्।
निभृतरमणे उपनायके महति इच्छति।

अत्र सकलपरिहारवनगमने शान्तानुभावौ। इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेत् न दोषः।

दीप्तिः पुनः पुनर्यथा कुमारसम्भवे रतिविलापे।

अकाण्डे प्रथनं यथा, वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये प्रवृत्ते, भानुमत्या सह दुर्य्योधनस्य शृङ्गारवर्णनम्।

अकाण्डे छेदो यथा, वीरचरिते द्वितीयेऽङ्के कङ्कणमोचनाय गच्छामीति राघवस्योक्तौ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं यथा, हयग्रीववधे हयग्रीवस्य। अङ्गिनोऽननुसन्धानं यथा, रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गा-

---

अत्रेति। वनगमने इत्यत्र तत्पूर्वकवनगमने इत्यर्थः। वनगमनमात्रस्य शान्तानुभावत्वाभावात् शान्तानुभावौ शान्तमात्रानुभावौ शृङ्गारे त्वलङ्काराद्यपरिहारेण परिहार्य्यसाकल्याभावात् वनगमनस्य सकलपरिहारपूर्वकत्वाभावे तु न दोष इत्याह इन्धनादीति आदिना फलपुष्पादिपरिग्रहः उपभोगार्थमिति तादृशवनगमनस्य फलं दर्शितं तादृशवनगमने तु लब्धे उपभोगलाभ इति भावः। न तूपभोगार्थतापि शान्तीति बोध्यम्।

दीप्तिरुद्दीपनं रतिविलापेष्विति। विललाप विकीर्णमूर्द्धजेत्युपक्रम्य धारावाहिके करुणरसे प्रवर्त्तितेऽपि पुनर्मधौरागमने तमवेक्ष्य रुरोद सा भृशं स्तनसम्बाधमुरोजघान चेति तदुद्दीपनं कृतं तत्र च पिष्टपेषणन्याय एव दोषताबीजम्।

अनेकेति। स्वपुत्रलक्ष्मणप्रभृत्यनेकेत्यर्थः। अप्रधानस्येति प्रतिनायकस्येत्यर्थः। न च वंशवीर्य्यश्रुतादीनि वर्णयित्वा रिपोरपि। तज्जयान्नायकोत्कर्षकथनञ्च चिनोति न इति दण्ड्युक्तिविरोध इति वाच्यम्। तस्यातिविस्तरेण वर्णनाभावपरत्वात् अतिविस्तरेण वर्णने तु तत्रैव नायकबुद्ध्युदयेन अङ्गिनोऽननुसन्धानदोषापत्तेः। बाभ्रव्यागमने इति सागरिकाया एव प्रियगृहादागतः कञ्चुकी बाभ्रव्यः। प्रकृतिविपर्य्ययं दुष्टं प्रकृतीराह।

रसान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः उत्तमाधममध्यमाश्च तत्र रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवत् दिव्येष्वपि, किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया, तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्।

क्रोधं प्रभो ! संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥

---

प्रकृतय इति। प्रकृतिविशेषा इत्यर्थः। तानाह दिव्या इति दिव्या इन्द्रादयः अदिव्या मानुषा दुष्मन्तमाधववत्सराजादयः दिव्यादिव्या देवमानुषाः श्रीकृष्णरामादयः। वीरेति एते त्रय एव वीरादिरसप्राधान्येन चतुर्विधा इत्यर्थः। तथाच ते द्वादशांसतत्तद्रसप्राधान्येन तेषां न परिभाषा आह धीरोदात्तेति।

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथित इति तल्लक्षणम्।
मायापरः प्रचण्डश्चपलोऽहङ्कारभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥ इति।

धीरोद्धतलक्षणम्।

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यादिति।

धीरललितलक्षणम्।

सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यादिति।

धीरप्रशान्तलक्षणम्।

एते द्वादशैव उत्तमादित्रिविधा इत्याह।

उत्तमेति। तेन षट्त्रिंशन्नायकाः। तथा वर्णनीयानौचित्यरूपं विपर्य्ययं वक्तुं वर्णनीयौचित्यं दर्शयति रतिहासेति दिव्येष्वपीति वर्णनीयानीति शेषः। अत्यन्तमिति अनुचितमिति तेन तद्वर्णनं प्रकृतिविपर्य्ययः एवञ्च वक्ष्ये खिहि अपि असख करकिणश एत्यादिके विन्नवी अरए इत्यादिके च विपर्य्यय एवेति बोध्यम्।

क्रोधं प्रभो इति। मरुतां देवानाम्। यावदवदानमिति। अवदानं मूलभूतपुराणादिप्रसिद्धं प्रसिद्धं लोकप्रसिद्धम्।

इत्युक्तवत् भ्रूकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव। अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा, तावदेवोपनिबद्धव्यम्, अधिकन्तु निबध्यमानमसत्यप्रतिभासेन, नायकवद्वर्त्तितव्यं, न प्रतिनायकवत्, इत्युपदेशे न पर्य्यवस्येत्। दिव्यादिव्येषु उभयथापि। एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथावर्णनं विपर्य्ययः। तत्रभवन् भगवन्नित्युत्तमेन, न अधमेन, मुनिप्रभृतौ, न राजादौ, भट्टारकेति नोत्तमेन राजादौ प्रकृतिविपर्य्ययापत्ते र्वाच्यम्। एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम्।

अनङ्गस्य रसानुपकारकस्य वर्णनं यथा, कर्पूरमञ्जर्य्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य वन्दिवर्णितस्य राज्ञा प्रशंसनम्।

ईदृशाः' इति नायिकापादप्रहारादिना नायककोपादिवर्णनम्।

---

इत्युपदेश इति। काव्यादेरनुपदेशस्य रामादिरतिवादि प्रागेवोक्तत्वात् काव्यन्तु प्रौढ़ोक्तिभिन्नं बोध्यम्। भाषाविपर्य्ययोऽपि प्रकृतिविपर्य्यय एवेति। वक्तुं भाषाविशेषेण सम्बोधनकर्त्तृनियमनमाह। तत्रभवन्निति। तया भाषया सम्बोधननियमान्नियमतयैवेति मुनौति न राजादावित्यादिना प्रभुमात्रपरिग्रहः। आलिङ्गितस्तत्रभवानित्यत्र तु न सम्बोधनमित्यतोऽदोषः। वाच्यमिति इति वाच्यमिति च न वाच्यमित्युभयत्रान्वयः। एवं देशेति। दिवि मानुषभाषा देशानुचिता एकऋतुधर्मस्य ऋत्वन्तरे वर्णनं कालानुचितं जरत्या, कामवर्णनं वयोऽनुचितं विप्रस्य शूद्रसेवादिवर्णनं जात्यनुचितं विधवायाः सिन्दूरादिवर्णनं वेशानुचितम् अदाक्षिणात्यानां मातुलकन्यापरिणयो देशव्यवहारानुचितः।

अनङ्गस्याभिधानं व्याचष्टे अनङ्गस्येति। वन्दिवर्णितस्येति स्वस्येति शेषः। अनौचित्यादिति प्रकृतिविपर्य्ययरूपानौचित्यादित्यर्थः। तदाभासा अनौचित्यप्रव-

उक्तं हि ध्वनिकृता,

अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परेति ॥

इदानीं क्वचिद्दोषा अप्येते, इत्युच्यन्ते,

**न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित्।**

यथा,

औत्सुक्येन कृतत्वरा, सहभुवा व्यावर्त्तमाना ह्रिया,
तैस्तैर्बन्धुवधूजनस्य वचनै र्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा, गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा, शिवायास्तु वः ॥

अत्रौत्सुक्यशब्द इव तदनुभावो न तथाप्रतीतिकृत्। अतएव "दूरादुत्सुकम्" (८०) पृ० इत्यादौ व्रीड़ाप्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसा प्रसरणादि-रूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्।

**सञ्चार्य्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥१५॥**

---

त्तिता इत्युक्तमनौचित्यन्तु नास्य विषय इत्यवधेयम्। उपनिषत् मूलभूतवेदः। सञ्चारिणो व्यभिचारिणः। क्वचिदिति यत्र तदनुभावोऽन्यसाधारणस्तत्रेत्यर्थः।

औत्सुक्येनेति। नवे सङ्गमे प्रथमदिनसमागमे हसता हरेण श्लिष्टा अतएव संरोहत्पुलका गौरी वः शिवायास्तु। कीदृशी तद्गृहागमने प्रथममौत्सुक्येन कृतत्वरा ततश्च सहभुवा साहजिकया ह्रिया व्यावर्त्तमाना ततश्च तैस्तैरित्यादि ततश्चाग्रे वरं स्वामिनं दृष्ट्वा आत्तेत्यादि।

अत्रेति। तदनुभावस्त्वराकरणरूपः न तथेति नौत्सुक्यमात्रप्रतीतिकृदित्यर्थः। मात्रादिजनाभीत्यापि त्वराकरणसम्भवादिति भावः। प्रतिकूलविभावादिग्रहं प्रति-प्रसूते।

सञ्चार्य्यादेरिति। आदिना अनुभावविभावपरिग्रहः। विरुद्धरसीयानामेषां

बाध्यस्योक्तिः न, न परं दोषः, यावत्प्रकृतरसपरिपोषकृत् ।

यथा,

क्वाकार्य्यं, शशलक्ष्मणः क्व च कुलम् (१०५पृ०)-इत्यादौ,

अत्र, वितर्कादिषु उद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः ।

(पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसञ्च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥
इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम् ।)

सत्यं मनोरमा रामाः, सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ (विरु० वि०)

इत्यत्राद्यमर्द्धं बाध्यत्वेनैवोक्तम् । जीवितादपि अधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति ; न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः ।

---

बाध्यत्वेनोक्तिरित्यर्थः । तदाह बाध्यत्वेनोक्तिरिति क्वाकार्य्यमिति । अत्र वितर्कादिषु शान्तरसीयेष्वित्यर्थः । विरुद्धस्योत्तरभावस्य पूर्वभावबाधकत्वात् भावसन्धौ त्ववच्छेदभेदेन स्थित्या तुल्यबलत्वात् न बाध्यबाधकभावः । ननु विरुद्धरसीयविभावादेः बाध्यत्वेनानुक्तावपि कथं रसहतिः । क्वचिन्नोपलभ्यत इति दर्शयन्नाह पाण्डुक्षाममिति । मालतीं प्रति लवङ्गिकाया उक्तिरियम् । हे सखि ! तव पाण्डु क्षामं वदनादिकं कर्तृ तव हृदन्तर्नितान्तं क्षेत्रियरोगमावेदयति अस्मिन् क्षेत्रे शरीरेऽचिकित्स्यरोगः । क्षामं क्षीणं सरसं सस्वेदं साधारणं करुणविप्रलम्भयोः । न विरुद्धत्वमिति प्रतिकूलमात्रीयत्वाभावादिति भावः । न सुविरुद्धरसमात्रीयस्यापि विभावस्य क्वचिदनुभूयमाने प्रातिकूल्याभावे किं बीजमिति दर्शयन्नाह ।

सत्यमिति । अत्र शान्तरसप्रतिकूलस्य शृङ्गारस्य कामविभूतिमत्ताङ्गनापाङ्गभङ्गय आलम्बनोद्दीपनविभावः । समाधत्ते ।

अत्रेति । किन्त्वित्यनेन कामादीनामकिञ्चित्करत्वबोधनाद्बाध्यत्वं प्रतीयते बाध्यत्वेनानुक्ताया अपि मत्ताङ्गनापाङ्गभङ्ग्या व प्रातिकूल्ये बीजमाह जीवितादपीति

न तु विनेयोन्मुखीकरणमत्र परिहारः, शान्तशृङ्गारयो र्नैरन्तर्य्यस्याभावात्, नापि काव्यशोभाकरणम्, रसान्तरादनुप्रासमात्राद्वा तथाभावात्।

**आश्रयैक्ये विरुद्धो यः, स कार्य्यो भिन्नसंश्रयः।**
**रसान्तरेणान्तरितः, नैरन्तर्य्येण यो रसः॥ १६॥**

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्य्येण विरोध इति रसान्तरमन्तरे कार्य्यम्। यथा नागानन्दे, शान्तस्य जीमूतवाहनस्य, अहो गीतम्! अहो वादित्रम्! इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः। न परं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्त्तते।

यथा,

---

प्रसिद्धभङ्गुरञ्च तदुपमानञ्चेति विग्रहः तत्तयोपात्तमित्यर्थः। शान्तमिवेति उपमानेनोपमेयप्रकर्षस्यैव बोधनात् जीवितस्यातिलोलत्वे लब्धे तेन शान्तरसपोषणात्। एवञ्च विभावयोरुपमानोपमेयभावेन रसयोरप्युपमानोपमेयभावग्रहीतेरग्रे व्यक्तीभविष्यत्त्वात् साम्येनाथ विवक्षित इति कारिकया यत् प्रतिप्रसविष्यते तद्विषयादोषत्वमात्रं दर्शितम्। न पुनरिति अनुपमानशृङ्गारप्रतिपादनेन तेषामुन्मुखीकरणं न पुनरत्र दोषपरिहार इत्यर्थः। नैरन्तर्य्यमव्यवधानं तस्य च स्वातन्त्र्येणाभावादित्यर्थः। ननु शोभनीयस्य तस्य कथं शोभाकरत्वमित्यत आह अनुप्रासादेति रमाकामरम्याङ्गनापाङ्गभङ्ग इति अनुप्रासः। इदानीं कवीनुपदिशति।

आश्रयैक्ये इति। कयोश्चिद्रसयोरेकाश्रयत्वं नास्ति कयोश्चित्तु नैरन्तर्य्यमेव नास्ति तत्रावश्योपनिबन्धप्रकारमाह पूर्वार्द्धेन अन्यस्य तु परार्द्धेन। तादृशविरुद्धौ तौ दर्शयति वीरेति शान्तेति अद्भुतमन्तर्निवेश्येति। अद्भुतरसस्थायिभावविस्मयपदार्थमन्तर्निवेश्येत्यर्थः। सर्वत्रैवात्र रसपदस्याद्भुतादिपदस्य च स्थायिभावपरत्वेनैव वक्ष्यमाणत्वात्। न परमिति प्रबन्धे नाटके एकस्मिन् वाक्ये कुलकरूपे।

भूरेणुदिग्धान्, नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढ़ं शिवाभिः परिरभ्यमाणान्, सुराङ्गनाश्लिष्टभुजान्तरालाः ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसिक्तैः सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्य्यङ्कतले निषण्णाः कूतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभि र्वीराः स्वदेहान् पतितानपश्यन् ॥

अत्र, बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः ।

**स्मर्य्यमाणो विरुद्धोऽपि, साम्येनाथ विवक्षितः ।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ, तौ न दुष्टौ परस्परम् ॥ १७॥**

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

एतत् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ ; अत्र पूर्वावस्थास्मरणम् शृङ्गाराङ्गमपि करुणं परिपोषयति ।

---

भूरेणिवति । युद्धे पतिता वीरा देवत्वं प्राप्य विमानपर्य्यङ्कतले निषण्णाः सन्तो ललनानामप्सरसाम् अङ्गुलीभिर्निर्दिष्टान् नश्यमानदेहान् भूमिपतितान् कुतूहलाविष्टतया अपश्यन्नित्यन्वयः । तत्र सर्वं प्रथमान्तं वीरा इत्यस्य सर्वं द्वितीयान्तं स्वदेहानित्यस्य विशेषणं क्रव्यभुजां खगानां सशोणितैः पक्षैरुपवीज्यमानानित्यन्वयः । अत्रेति वीररसः शूरार्थः वीरशब्देन लक्ष इत्यर्थः । विरुद्धरसद्वयस्य प्रबन्धातिरिक्तोऽप्युपनिबन्धप्रकारमाह ।

स्मर्य्यमाण इति । न दुष्टावित्यत्र व्यत्ययान्न दुष्ट इत्यन्वयः ।

अयं स इति । अत्र शृङ्गारः स्मर्य्यमाणः करुणस्य विरुद्धोऽपि न दुष्टः । यद्यपि शृङ्गारोऽत्र व्यज्यमान एव तथाप्यतीतस्य व्यङ्गस्य स्मर्य्यमाणपूर्वावस्थासम्बन्धात् स्मर्य्यमाणत्वमुक्तम् । साम्येन विवक्षितस्यादुष्टत्वमाह ।

दन्तैः क्षतानि, करजैश्च विपाटितानि,
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य । यथा वा, परः शृङ्गारी तदवलोकनात् सस्पृहः तद्वत् एतद्दृशो मुनय इति साम्यविवक्षा ।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः, पातितयावकैरिव ; पतद्बाष्पाम्बुधौताननाः ।

---

दन्तैः क्षतानीति । प्रसूय स्वापत्यं जिघत्सौ सिंह्यां तत्परिवर्त्तं स्वाङ्गं दत्तवति तन्नखदन्तक्षताङ्गाय जिनाय कस्यचिदुक्तिरियम् । रक्तमनसा निविष्टचित्तया मृगराजवध्वा दत्तानि दन्तक्षतानि करजैः नखैः विपाटितानि च प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे जातस्पृहैः मुनिभिरप्यवलोकितानीत्यन्वयः । पुलकः परपरित्राणहर्षात् स्वशरीरव्ययेनापि परपरित्रायकत्वदर्शनादतादृशानां मुनीनां सस्पृहता अपि शब्दादन्येषां सुतराम् ।

अत्र जिनगतस्य सिंहीदत्तदन्तनखक्षतदर्शिमुनिनिष्ठः शान्त उपमेयः प्रेमवशादनुरक्तवधूदत्तकामुकगतस्य दन्तनखक्षतदर्शिकामुकान्तरनिष्ठः शृङ्गार उपमानं तयो र्विभावयोरुपमानोपमेयभावप्रदर्शनमुखेन तयोरपि तथात्वं दर्शयति अत्रेति । दन्तक्षतादीनीत्यत्र अनुरक्तचित्तवधूदत्तानीत्यपि बोध्यम् । साम्यविवक्षेति । तत्साम्यविवक्षया तद्व्यङ्ग्ययोः शान्तशृङ्गारयोरपि तथात्वं बोध्यम् । न च किमर्थमत्र साम्यविवक्षया दोषोद्धारः शृङ्गारिकामुकशान्तमुनिरूपाश्रया-भेदादेव विरोधाभावादिति वाच्यम् । एतदुभयज्ञातरि एतद्वक्तरि एव उभयस्यापि सम्भवात् परकीयरतिनिर्वेदज्ञातर्य्यपि तदुभयोत्पत्तिसम्भवात् । अङ्गिन्यङ्गत्वमाश्रयो विरुद्धयोरप्यदुष्टत्वमाह ।

क्रामन्त्य इति । राज्ञः स्तौतुरुक्तिरियम् । त्वच्छत्रुनार्य्योऽङ्गनां दावाग्नि परितो भ्रमन्ति पलायनपराः । तवोत्प्रेक्षते पुनरपीति पुनरपि जायमानविवाहा इवेत्यर्थः । तद्युत्प्रेक्षाघटकानि विशेषणान्याह क्रामन्त्य इति । सदर्भाः स्थलीः पादैः क्रामन्त्यः

भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्य्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ [१]

अत्र, चाटुके राजविषया रतिः प्रतीयते, तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः, यथा

एहि गच्छ ; पतोत्तिष्ठ ; वद, मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीड़न्ति धनिनोऽर्थिभिः ॥

अत्र, एहीति क्रीड़न्ति, गच्छेति क्रीड़न्तीति क्रीड़नापेक्षयोरागमनगमनयोर्न विरोधः।

क्षिप्तो हस्तावलग्नः, प्रसभमभिहतोऽप्याददानोऽंशुकान्तम्
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः,
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ [२]

---

वनान्तस्य दर्भमयत्वात् विवाहेऽपि वह्निप्रदक्षिणे आस्तृतदर्भमयस्थलाक्रमणात् विवाहे पादस्य सालक्तकद्रवत्वात् तदुत्प्रेक्षते गलद्भिः पतितयावकैरिवेति। यावकमलक्तकं विवाहेऽपि धूमादश्रुनिर्गमादाह पतद्बाष्पाम्बुिति। दावाग्निभ्रमणे तादृशावस्थाप्राप्त्या दुःखाद्बाष्पाम्बुपातः विवाहेऽपि वह्निप्रदक्षिणे भर्तृकरावलम्बितकरत्वादाह भर्तृकरेति दावाग्निभ्रमणे तु क्षतोऽक्षमत्वात् भर्तृकरावलम्बितकरत्वं विवाहेनावाद्यमानत्वेन भर्तृतो भयं दावाग्निभ्रमणे तु त्वत्तो वह्नितश्च भयमाह भीता इति।

अत्रेति। चाटुको राजस्तोता करुण इवेति तासां शोच्यावस्थाज्ञानाद्विवाहकालीनावस्थाज्ञानाच्च अनयो नैरन्तर्य्येण विरुद्धयोरपि राजविषयभावाङ्गयोरदुष्टत्वं भावाङ्गता च शोच्यावस्थाया राजप्रयोज्यत्वाद्विवाहकालीनावस्थायाश्च तत्स्थानीयत्वात् तदङ्गयोः करुणशृङ्गारयोश्च तत्स्थानीयत्वात् तदङ्गयोः करुणशृङ्गारयोरपि तत्प्रयोज्यत्वात्। अत्रैवैकक्रियाङ्गयोर्विरुद्धक्रिययोरप्यदुष्टत्वं दृष्टान्तयति। यथा

एहि इति। क्रीड़ाहि सुखविशेषः तदुत्पादकत्वादनुमन्यमानानामेहीत्यादिक्रियाणामङ्गता। नैरन्तर्य्येण विरुद्धयोरङ्गिनि साक्षात्परम्पराभ्यामङ्गत्वमुदाहरति।

क्षिप्त इति। त्रिपुरदाहे स प्रसिद्धः शाम्भवः शराग्निर्वो दुरितं दहतु। कीदृशः

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु शृङ्गारः; तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव। अथ वा प्राक् यथा कामुक आचरति स्म, तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते। उक्तं हि,

'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते॥' इति।

---

आर्द्रापराधः आसन्नापराधः कामीव शराग्निकामिनी विशेषणान्यत्र। चिप्त इति। हस्तावलग्नयोर्हि शराग्नि कामिनोर्द्वयोरपि साश्रुनेत्रोत्पलाभिस्त्रिपुरयुवतिभिः चेपात् भयात् क्रोधाच्चाश्रु एवमंशुकस्यान्तमाददानः शराग्निः कामी च इति प्रसभं सहसाऽभिहितः केशेषु रहन्नप्यपास्तः कामिनः केशग्रहणं चुम्बनार्थं चरणनिपतितस्याग्निः सम्भ्रमेण भयेनानिरीक्षणं कामिनस्तु सम्भ्रमेणादरेणेक्षणाभावः।

अत्रेति। प्रभावातिशयोऽत्र तद्विषयी वक्तुरतिशयितो भावस्त्रिपुरस्त्रीविडम्बनेन भावस्यातिशयितत्वात्। करुण इति तासां शोच्यावस्थाज्ञातरि वक्तरि करुणः स च त्रिपुररिपुप्रयोज्यत्वात् तद्विषयभावस्य प्रकर्षकत्वेनाङ्गं तस्य चेति उपमानेन वक्तृनिष्ठशृङ्गारेण उपमेयकरुणप्रकर्षणात् विश्रान्तिः प्रकर्षणपर्य्याप्तिः करुणप्रकर्षणद्वारा भावस्यापि प्रकर्षणात् पूर्वोदाहरणादस्यायं विशेषो यदत्र शृङ्गारेण करुणप्रकर्षणं करुणेन भावप्रकर्षणमिति करुणः साक्षादङ्गं शृङ्गारः परम्पराङ्गं क्रामन्त्य इत्यादि पूर्वोदाहरणे तु करुणस्थानीयत्वेन करुणस्येव शृङ्गारस्य साक्षादेव भावाङ्गत्वमिति। तस्याङ्गतैवेति। शृङ्गाराङ्गिनोऽपि करुणस्याङ्गतैवेत्यर्थः। इत्थं पदैः सकलपदार्थोपस्थितौ खले कपोतन्यायेन विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमिति शक्तिबोधस्तद्वद्व्यङ्ग्यबोधेऽपीयं रीतिरित्युक्तम्। इदानीं विशिष्टस्य वशिष्यमिति प्रथमं शृङ्गारविशिष्टकरुणबोधस्ततः करुणविशिष्टभावबोध इति वक्तुमाह अथवेति। विशिष्टवैशिष्ट्यबोधस्य ईदृशरीतिद्वयात् तथा शराग्निरिति अनेन प्रथमं शृङ्गारौपम्यत्वं करुणस्य दर्शितम्। मुख्य एवेति त्रिपुररिपुविषयभाव एवेत्यर्थः। उपोद्बल्यते प्रकृष्यते अनेन च शृङ्गारविशिष्टकरुणवैशिष्ट्यं भावस्य दर्शितमिति विशिष्टस्य वैशिष्ट्यमिति रीत्या विशिष्टवैशिष्ट्यबोधो दर्शितः।

गुण इति। गुणो विशेषणं स्वस्य विशेषणेन कृतोपकारः सन् प्रधानं पार्य्ये

प्राक् (४७०) प्रतिपादितरूपस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवति, इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते।

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः।

---

## अष्टमः उल्लासः।

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह,

**ये रसस्याङ्गिनो धर्माः शौर्य्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥ १॥**

---

न्तिकविशेष्यं प्रतिपद्यते अन्वेति। तथा इति तादृशान्वितः सन्नेव इति प्रधानस्य भूयस्युपकारि वर्त्तत इति एवञ्चेदृशं काव्यमपराङ्गमिवेति बोध्यम्। ननु वीररसस्थायिभावोत्साहभयस्थायिभावभीत्याद्योरिवाश्रयैक्ये विरोधः करुणस्थायिभावशोकशृङ्गारस्थायिभावरत्याद्योरिव च नैरन्तर्य्येण विरोधस्तयोरेव भिन्नसंश्रयत्वरसान्तरितत्वादिकथनमुचितम्। रसस्तु ज्ञातृसामाजिकनिष्ठ एव सामाजिके तु सकलरस एव तस्य कथं भिन्नसंश्रयत्वादिकमुपदिष्टमित्यत आह प्रागिति। स्थायिभाव एवेति तथाच बहुषु स्थानेष्वेव रसशब्देन स्थायिभावएवोच्यते इति दर्शितं तथाच रसस्य शब्दवाच्यत्वं यदुक्तं तत्रापि स्थायिभावपररसशब्द इत्युक्तं व्याख्यातञ्चेदं तत्रैव।

इति सप्तमो दोषः प्रतिविम्बः।

---

दोषेण परिभूयन्ते चक्षुष्मन्तोऽपि मानवाः।
आदर्शस्य गुणेन स्युस्ते सदर्थ विलोकिनः॥

काव्यलक्षणोक्तक्रमेण दोषनिरूपणानन्तरं गुणे निरूपणीये भ्रान्तपरम्परयैव गुणालङ्कारयो र्भेदव्यवहारो वस्तुतस्त्वभेद इति ये ब्रुवते तन्मतं निराकर्त्तुं तयोर्भेदं साधयितुमाह एवमिति विवेकं पृथग्भावम्। तत्र गुणसामान्यलक्षणमाह।

ये रसस्येति। अङ्गिनः पराङ्गतामनापन्नस्य रसस्य ये उत्कर्षहेतवो धर्मा

आत्मन एव हि यथा शौर्य्यादयः, नाकारस्य; तथा, रसस्यैव माधुर्य्यादयो गुणाः, न वर्णानाम्। क्वचित्तु शौर्य्यादिसमुपचितस्याकारमहत्त्वादेर्दर्शनात् 'आकार एवास्य शूरः' इत्यादि व्यवहारादन्यत्राशूरेऽपि विततातिकृत्वमात्रेण 'शूरः' इति, क्वापि शूरेऽपि मूर्त्तिलाघवमात्रेण 'अशूरः' इति अविश्रान्तप्रतीतयो यथा व्यवहरन्ति, तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्य्यादिमात्रेण माधुर्य्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्य्यादेरमाधुर्य्यादि रसपर्य्यन्तविश्रान्तप्रतीतिबन्ध्या व्यवहरन्ति। अतएव माधुर्य्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते, न तु वर्णमात्राश्रयाः। यथैषां व्यञ्जकत्वं, तथोदाहरिष्यते।

---

वक्ष्यमाणा माधुर्य्यौजःप्रसादाख्यास्ते गुणाः स्युरित्यर्थः। उत्कर्षहेतुता च साक्षादेवेति बोध्यम्। तेन परम्परया तद्धेतुतया वक्ष्यमाणस्यालङ्कारस्य व्यवच्छेदः। ते चाचलस्थितयो रसे सति अवश्यं सन्तस्तत्तद्रसत्वव्यापका इत्यर्थः। प्रसादस्तु रसत्वस्यैव व्यापकः व्यञ्जकसत्त्वे गृह्यन्ते तदसत्त्वे तु न गृह्यन्त इति तु विशेषः। पराङ्गरसे त्वगृह्यमाणत्वान्न तत्र गुणस्वीकार इत्यतोऽङ्गिन इत्युक्तम्। गुणा वर्णधर्मा एवेति केषाञ्चिद्व्यवहारो भ्रान्तपरम्परयेति दर्शयति।

आत्मन एव हीति। नाकारस्य न शरीरस्य शौर्य्यादीनां शरीरधर्मत्वेन भ्रान्तव्यवहारवद्गुणानामपि वर्णधर्मत्वेन भ्रान्तानामेव व्यवहार इति दर्शयितुमाह क्वचित्त्विति। अस्यात्मनः शूर इतीत्यस्य व्यवहरन्तीत्यग्रेऽन्वयः इत्थं शूरत्वव्यवहारं प्रति शरीरमहत्त्वस्यान्वयं दर्शयित्वा तद्व्यतिरेकेण तद्व्यवहारव्यतिरेकमाह क्वापीति अविश्रान्तं यथार्थेऽतिष्ठन्ती प्रतीतिर्येषां तादृशाः। इत्थं दृष्टान्ते भ्रमबीजं दर्शयित्वा दार्ष्टान्ते गुणेऽपि तद्दर्शयति तथा मधुरादीति अनङ्गरङ्गेत्यादौ तद्बोध्यम्। माधुर्य्यव्यवहारप्रवृत्तेरिति भ्रमेणेति बोध्यम्। अमधुरादीति वीरादिरसीयकाव्यस्थानामित्यर्थः। मधुरादीति व्यवहरन्तीत्यन्वयः। अयं भ्रममूलको भ्रमो दर्शितः।

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥ २॥**

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं सम्भविनमुपकुर्वन्ति, ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः; यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्य्यवसायिनः; क्वचित्तु सन्तमपि नोपकुर्वन्ति। यथाक्रममुदाहरणानि,

अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः।
अलमलमालि! मृणालैः, इति वदति दिवानिशं बाला॥

इत्यादौ वाचकमुखेन,

---

इत्थं माधुर्य्यव्यवहारे वर्णसौकुमार्य्यस्यान्वयं दर्शयित्वा तद्व्यतिरेकेण तद्व्यवहारव्यतिरेकं दर्शयति मधुरादिरसोपकरणानामिति रसपर्य्यन्तेति। गुणवैशिष्ट्येन रसविशेषप्रतीतिशून्या इत्यर्थः। अतएवेति। व्यवहर्तॄणां भ्रान्तत्वादेवेत्यर्थः। न तु वर्णमात्रेति। अत्र मात्रपदं स्वरूपमात्रपरं वर्णाश्रयत्वमात्रस्यैव खण्डनीयत्वात्। इत्थं गुणसामान्यस्य रसवृत्तित्वमुक्त्वा शब्दतदर्थवृत्तीनामलङ्काराणां तद्भिन्नत्वं वक्तुमाह।

उपकुर्वन्तीति। सन्तं स्फुटस्थितं सर्वथा नीरसस्य सगुणत्वाभावेन काव्यत्वाभावात्। व्याचष्टे ये इति अङ्गद्वारेणेत्यस्य विवरणवाच्यवाचकेति मुख्यं सर्वापेक्षयाऽधिकास्वाद्यं सन्तमित्यस्य विवरणं सम्भविनमिति स्फुटसम्भविनमित्यर्थः। क्वचित् स्फुटतदसम्भवे कस्योपकारका अलङ्कारा इत्यत्राह यत्र त्विति स्फुटो नास्तीत्यर्थः। जातुचिदित्यनेन क्वचिदुपकारकत्वाभावोऽपीत्युक्तं तदाह क्वचित्त्विति। तत्र प्रथमं सतस्तस्योपकारकत्वं शब्दतदर्थालङ्कारयोः श्लोकद्वये दर्शयति।

अपसारयेति। मनोराग इति च घनसारं कर्पूरम्। वाचकमुखेनेति वाचकः शब्दस्तदलङ्कारोऽत्रानुप्रासः तेन शब्दमुपकृत्य शब्दोपस्थाप्यार्थद्वारा रसोपकारात्।

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतम्,
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतः,
न मां त्रातुं तातः प्रभवति, न चाम्बा, न भवती॥

इत्यादौ वाच्यमुखेन अलङ्कारौ रसमुपकुरुतः।

चित्ते विहट्टदि, ण खिद्दि सा गुणेसुम्
सेज्जासु लोटदि, विसप्पदि दिम्मुहेसुम्।
बोलम्मि वट्टदि, पवट्टदि कव्वबन्धे,
धाणे ण तु तुट्टदि चिरं तरुणी तरट्टी॥

इत्यादौ वाचकमेव,

मित्रे क्वापि गते, सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु, वीच्य दयितासन्नं पुरः सारसम्।

---

मनोराग इति। लवङ्गिकां प्रति मालत्या उक्तिरियम्। प्रमाथी मनःप्रमथनशीलो माधवविषयो मनोरागोऽविरतं तीव्रं विषमिव विसर्पति तथा निर्धूमो विधुतो वातचलितः पावक इव ज्वलति तथा गरीयान् ज्वर इव प्रत्यङ्गं हिनस्तीति विभिन्नधर्मा मालोपमा इत इतस्त्रातुं तातादिकं न प्रभवतीत्यर्थः। इत इत इत्यतिविषादे वीप्सा। विधुतश्चन्द्रात्पावको ज्वलतीवेत्युत्प्रेक्षा वा। अलङ्काराविति श्लोकद्वयोक्तशब्दार्थालङ्कारावित्यर्थः। क्वचित्तु सन्तमपि नोपकुर्वन्तीत्यत्रोदाहरति।

चित्ते इति।

चित्ते विघटिते न खिद्यति सा गुणेषु शय्यायां लुठति विसर्पति दिङ्मुखेषु।
वाक्ये वर्त्तते प्रवर्त्तते काव्यबन्धे ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भेति॥संस्कृतम्।

गुणेषु न खिद्यति तव गुणभावनायाम्। खेदं न भजतीत्यर्थः। दिङ्मुखेषु विसर्पणमुद्दश्यमात् वाक्ये वर्त्तते कमप्युपदेशं गृह्णाति अतएवास्मदुपदिष्टे त्वद्विषये काव्यबन्धे प्रवर्त्तते त्रुट्यति क्षीणा भवति। प्रगल्भायां तरट्टी देशी। वाचकमेवेति टवर्गानुप्रासस्य शृङ्गारप्रतिकूलत्वेन वाचकमात्रोपकारकत्वात्।

मित्रे इति। सन्ध्याकालीनचक्रवाकक्रियावर्णनमिदम्। वियोगिना उपस्थितवियोगेन चक्रवाकेण विसलता मृणाललता नास्वादिता नोज्झिता केवलं

चक्राह्वेन वियोगिना विसलता नास्वादिता नोज्झिता,
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः॥

इत्यादौ वाच्यमेव, न तु रसम्। अत्र विसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा॥

एष एव च गुणालङ्कारप्रविभागः। एवञ्च 'समवायवृत्त्या शौर्य्यादयः, संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनाञ्चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैषां भेदः' इत्यभिधानमसत्। यदप्युक्तं, काव्यशोभायाः कर्त्तारो धर्मा गुणा-

---

निर्गच्छतो जीवस्यार्गलेव वक्त्रे निहिता कदैवं कृतमित्यत्राह मित्रे इति। उपस्थिता वियोगस्य दुःखोद्दीप्तिस्त्रिधा भवति इष्टवियोगिदर्शनात् तद्बन्धूनां क्रन्दनात् इष्टसंसर्गिदर्शनाच्चेति। तत्रेष्टवियोगिदर्शनादाह मित्रे इति। मित्रे सूर्य्ये एव मित्रे बन्धौ क्वाप्यलब्धवार्त्ताके देशे गते सति तद्बन्धौ सरोरुहवने बद्धानने ताम्यति सति आननमत्र पुष्पमेव इष्टवियोगिबन्धुक्रन्दनादाह क्रन्दत्स्विति अत्र गुञ्जिते क्रन्दनाध्यासः इष्टसंसर्गिदर्शनादाह वीक्ष्येति। सारसीं सारसस्त्रीं दयितेन आसन्नां युक्तामित्यर्थः। न तु रसमिति वियोगिनो जीवनरक्षणप्रयत्नानौचित्येन तदुत्प्रेक्षाया विप्रलम्भानुपकारकत्वादिति भावः। नन्वत्र मास्तु जीवनरक्षणप्रयत्नोत्प्रेक्षा यया विप्रलम्भानुपकारः किन्तु पुरान्निर्गच्छतो जीवस्य प्राणिनो याऽर्गला निर्गमनविरोधिका द्वारपिधानकाष्ठरूपा केवलं सैव निहितेत्युपमैवेयमास्तामित्यत आह।

अत्रेति। यदि जीवनरोधकत्वेन साधर्म्येणेयमुपमा स्यात्तदा उपमेयायां विसलतायां तन्नास्तीत्याह न क्षमेति न समर्थेत्यर्थः। प्राणिरोधकत्वस्य श्लेषाजीवनरोधकत्वस्य वा तत्राभावात् अतः प्रकृतं जीवरोधकत्वं साधर्म्यमननुगुणमसम्पादकं यस्या इयमुपमा तादृशी इत्यतोऽत्र नोपमेयत्यर्थः। यदि च दीर्घत्वादिसाधर्म्येणेयमुपमा स्यात्तदा जीवस्येत्यादि वैयर्थ्यमेव स्यादिति। स्फुटत्वादेव नोक्तमिति भावः। अर्गलामात्रोपमयैव दीर्घत्वादिलाभात्। चक्रवर्त्ती तु अत्र विसं लतेवेति या उपमा सा प्रकृतस्य जीवरोधकत्वस्याननुगुणाऽननुकूला लतोपमया कोमलत्वलाभेन तस्या जीवरोधनासामर्थ्यादिति व्याचष्टे तन्न। तत्कथनस्य प्रकृतानुपयोगात्

स्तदतिशयहेतवस्त्वलङ्कारा:' इति ; तदपि न युक्तं, यत:, किं समस्तैर्गुणै: काव्यव्यवहार:, उत कतिपयै:, यदि समस्तै:, तत्कथमसमस्तगुणा गौड़ी पाञ्चाली च रीति: काव्यस्यात्मा ? अथ कतिपयै: तत:,

अद्रावत्र प्रज्वलत्यग्निरुच्चै:, प्राज्य: प्रोद्यन्नुल्लसत्येष धूम: ।
इत्यादावोज:प्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्ति: ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।

---

तावता प्रकृतरसानुपकारकत्वाद्यभावात् विसमेव लतेति रूपकसम्भवे उपमाया एवाभावाच्च किञ्च उपमायां न ह्यूपमानगतं सर्वमेव धर्ममुपमेये प्रतीयते चन्द्र इव मुखमित्यादौ कलङ्कित्वादेरपि प्रतीत्यापत्ते: तत्कथं कोमलत्वप्राप्ति: । इत्थं गुणा रसनिष्ठा अलङ्कारास्तु शब्दतदर्थनिष्ठा: स्वाश्रयप्रकर्षणद्वारा रसोपकारका इति व्यवस्थापितेऽयमेव गुणालङ्कारयोर्भेद इत्याह एष एव चेति विभागो भेद: । केचित्तु दृष्टान्तयो: शौर्य्यहारादयोर्गुणालङ्कारयो: स्वाश्रये सम्बन्धभेदाभेद उचित एव काव्यीयगुणालङ्कारयोस्तु स्वाश्रयस्य तन्निष्ठसम्बन्धस्य च भेदाभावोऽभेद एव किन्तु भ्रान्तपरम्परयैव भेदव्यवहार इत्याहुस्तेषां तदभिधानमसदित्याह एवञ्चेति । समयवायवृत्त्येति । समवायोऽत्र स्वरूपसम्बन्ध एव स्थितिर्वर्णेष्वेव गड्डलिका-ऽज्ञातप्रवाहागमस्थानो धारावाहिकप्रवृत्तो नदीविशेष इति केचित् मेषयूथैरनु-गम्यमाना मेषोत्यन्ये तन्न्यायेन भ्रान्तपरम्परयैव भेदो व्यवह्रियत इति तेषामभिधान-मसदित्यर्थ: । गुणालङ्कारयोर्लक्षणभेदाद्भेद इति कैश्चिदुक्तं दूषयितुमाह यदप्युक्त-मिति । काव्यशोभाया इत्यत्र काव्यव्यवहारप्रयोजिकाया: शोभाया इत्यर्थ: । अन्यथा-ऽग्रे वितर्क्य काव्यस्यैव दूषयिष्यमाणस्य व्यवहारस्यासङ्गत्यापत्ते: । गुणाश्च तन्मते श्लेष-प्रसादादयो दश गुणा दण्ड्युक्तनामानो बोध्या: । काव्यस्यात्मेति रीतिरात्मा काव्य-स्येति वामनोक्तत्वात् । ओज:प्रभृतिष्विति ओजोऽत्र परुषवर्णविन्यास: प्रभृति पदा-ञ्चार्थव्यक्तिरूपगुणपरिग्रह: बहुत्वन्त्वविवक्षितं काव्यव्यवहारापत्तिरिति न चानिष्टापत्ति-रिति वाच्यम् । गौरपत्यं वलीवर्दो घासमत्ति सुखेन स इतिवत् स्वरूपकथनमात्र-रूपत्वेन सर्वथा नीरसस्यास्य काव्यत्वानङ्गीकारात् स्वरूपकथनमात्रत्वेन वह्निधूम-विषयभावस्याप्यभावाच्च । इत्यमतिव्याप्तिमुक्त्वाऽव्याप्तिमाह ।

अस्या रदच्छदरसो न्यक्करोतितरां सुधाम्॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ।

**माधुर्य्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश।**

एषां क्रमेण लक्षणमाह,

**आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणम्॥३॥**

शृङ्गारे (अर्थात्) सम्भोगे, द्रुतिर्गलितत्वमिव श्रव्यत्वं पुनरोजःप्रसादयोरपि।

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।**

अत्यन्तद्रुतिहेतुत्वात्।

---

स्वर्गेति। वरवर्णिनी पुंसोऽनेनैव देहेन स्वर्गप्राप्तिः प्राप्यमाणः स्वर्गः तथा रदच्छदस्य ओष्ठस्य रसः सुधां न्यक्करोतितरां विशेषोक्तिरेतद्देहरूपकारणसत्त्वेऽपि स्वर्गप्राप्त्यभावरूपस्य फलस्याभावः स्वर्गप्राप्तिः कारणत्वफलत्वे चात्र योगक्षेमसाधारणे बोध्ये व्यतिरेकश्च उपमानीभूतसुधापेक्षया उपमेयस्य रदच्छदरसस्याधिक्यरूपः गुणनिरपेक्षाविति तदुक्तैकगुणस्याप्यत्वाभावादिति भावः।

आह्लादकत्वमिति। आह्लादजनकतावच्छेदको धर्म इत्यर्थः। शृङ्गारादीनां रत्यादिरूपस्थायिभावो हि स्वस्य रसरूपतापरिणामकत्वेन रसरूपाह्लादजनकगुर्जर्यादिरागवृत्तिरिव तद्वृत्तिमाधुर्य्यरूपो धर्मविशेषस्तज्जनकतावच्छेदकः परिणामवशेन रसस्यापि स्थायिभावाभिन्नत्वेन स्थायिभाववृत्तेः माधुर्य्यस्य रसवृत्तित्वं नानुपपन्नं द्रुतिकारणमिति तेन धर्मेण मनसो गलितत्वप्रायरूपा द्रुतिर्जन्यते इत्यर्थः। अर्थात् सम्भोगे इति करुणविप्रलम्भादावत्यन्तद्रुतिहेतुत्वस्य वक्ष्यमाणत्वात् द्रुतिसामान्यकारणत्वसम्भोगमात्रे इत्यर्थः। केचित्तु काव्यस्य सुश्रव्यत्वमेव लक्षणमाहुः तस्या व्यावर्त्तकत्वमित्याह श्रव्यत्वं पुनरिति ओजःप्रसादयोः सतोरपि काव्यस्य सुश्रव्यत्वमस्तीत्यर्थः।

करुण इति। तन्माधुर्य्यम् अतिशयान्वितत्वञ्च फलातिशयादित्याह अत्यन्तेति ओजोगुणलक्षणमाह।

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ४ ॥**

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः।

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च।**

वीरात् बीभत्से, ततो रौद्रे सातिशयमोजः।

**शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः ॥५॥**

**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः।**

अन्यदिति व्याप्यमिह चित्तम्। सर्वत्रेति सर्वेषु रसेषु, सर्वासु रचनासु च

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥६॥**

---

दीप्त्यात्मेति। आत्माऽत्र मनोदीप्तिरूपाया मनोविस्तृतेरित्यर्थः। दीप्तिश्च कटुवर्णश्रुतिजन्यदुःखसम्भिन्नः सुखविशेषः सैवात्मनो मनसो विस्तृतिस्तद्धेतुरित्यर्थः एवमेव व्याचष्टे।

चित्तस्येति। रसनिष्ठेनौजसा मनसा च रसाभिन्नमेव तादृशं सुखं जन्यत इत्यर्थः। सातिशयमिति दीप्तिरूपफलातिशयात्। प्रसादगुणलक्षणमाह।

शुष्केन्धनेति। अन्यदिति ग्राह्यादन्यत् ग्राहकं चित्तमित्यर्थः। यो गुणः सहसा तद्व्याप्नोति स्वाश्रयरसव्यञ्जकार्थेन सह चित्तं स्वविषयकं करोतीत्यर्थः। सहसा व्याप्तौ दृष्टान्तमाह।

शुष्केन्धनेति। स्वच्छे आलवालशून्ये देशे जलवदित्यर्थः। सर्वत्रेति सप्तम्या आश्रयत्वव्यङ्ग्यत्वञ्चार्थ इत्याह सर्वेष्विति सर्वरसाश्रया सर्वजातीयरचनाव्यङ्ग्यश्चेत्यर्थः। नास्य रसविशेषवृत्तित्वनियमो नापि रचनाविशेषव्यङ्ग्यत्वनियमः किन्तु यद्रसीयस्य यद्रचनाविशिष्टस्य च काव्यस्य सहसार्थप्रत्ययस्तद्रसवृत्तिस्तद्रचनाव्यङ्ग्यश्चायमित्यर्थः। नन्वेवं गुणानां रसवृत्तित्वे काव्यवृत्तित्वाभावात् सगुणाविति काव्यलक्षणव्याघात इत्यत आह।

गुणवृत्त्येति। परम्परावृत्त्येत्यर्थः। परम्परावृत्तेः वृत्तित्वाभावेऽपि तथात्व-

गुणवृत्त्या उपचारेण, तेषां गुणानाम्, आकारे शौर्य्यस्येव। कुतस्त्रय एव, न दश ? इत्याह,

**केचिदन्तर्भवन्त्येषु, दोषत्यागात्परे श्रिताः।**
**अन्ये भजन्ति दोषत्वं कुत्रचित्, न ततो दश ॥७॥**

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः ; तेषामोजसि अन्तर्भावः। पृथक्पदत्वरूपं माधुर्य्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिर्गृहीता मार्गाभेदरूपा समता क्वचिद्दोषः, तथाहि, मातङ्गाः किमु वल्गितैः-[२८५पृ०]-इत्यादौ, सिंहाभिधाने मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्य्यम्, औज्ज्वल्यरूपा कान्तिश्च स्वीकृता। एवं न दश शब्दगुणाः।

---

मुपचारादित्याह उपचारेणेति। न दशेति प्राचीनोक्तदशगुणा नेत्यर्थः। कुत्रचित् स्थाने अन्ये गुणा दोषत्वं भजन्तीत्यन्वयः। दशगुणाश्च।

श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधय इति ॥

तत्र श्लेषसमाध्युदारताप्रसादानामोजस्यन्तर्भावमाह।

बहूनामिति। समासवशादित्यर्थः। तथाच दीर्घसमास एव श्लेषपरिभाषितः। आरोहावरोहयोरिति गाढ़वर्णोपक्रमोपसंहारयोरित्यर्थः। विकटत्वमुपक्रमोपसंहाररहित्येन गाढ़वर्णघटना ओजोमिश्रितेति गाढ़वर्णमिश्रितेत्यर्थः। तथाच शैथिल्यमिश्रणमत्र विकटत्वाद्भेदः तेषामोजसीति मयाप्येतैरोजोगुणस्य व्यञ्जत्वाङ्गीकारादेकस्मिन् व्यङ्ग्ये गुणत्वकल्पनापेक्षया बहूनां व्यञ्जकानां गुणत्वकल्पने गौरवमिति भावः। तथाच तेषामुदाहरणमोजोगुणोदाहरणमेवेत्येवमन्तर्भावः एवमग्रेऽपि पृथक्पदत्वमसमासः भङ्ग्येति अवृत्तिर्मध्यवृत्तिर्वेति। माधुर्य्यव्यञ्जकतयाऽसमासस्य मयापि वक्ष्यमाणत्वात् अवृत्तिपदेन पृथक्पदत्वस्योक्तिरेव भङ्गिः। अन्ये भजन्ति

पदार्थे वाक्यरचनं, वाक्यार्थे च पदाभिधा।
प्रौढ़िर्व्याससमासौ च, साभिप्रायत्वमस्य च'॥

इति या प्रौढ़िः, ओज इत्युक्तम् तत् वैचित्र्यमात्रं न गुणः, तदभावेऽपि काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्य्यम्, अपारुष्यरूपं सौकुमार्य्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृता। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृता। क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्वरूपा समता दोषाभावमात्रं न पुनर्गुणः, कः खल्वनुन्म-

---

दोषत्वमिति दर्शयति मार्गेति उपक्रमोपसंहारयोर्मस्रणैकमार्गता समासता गाढ़वर्णसघात्वन्तु समाधिरित्यनयोर्भेदः। मसृणमार्गे त्यागो गुण इति दोषाभाव इत्यर्थः। तदत्यागे प्रकृतिविपर्य्ययदोषः स्यादित्यतो दोषत्वभजनम्। एवञ्चैकस्यैव गुणस्य दोषत्वभजनकथनादन्ये इत्यत्र बहुलमविवक्षितं बोध्यम्। [दोषत्यागात् परे श्रिता इति दर्शयति कष्टत्वेति औज्ज्वल्यमग्राम्यता। एतद्भिन्ननामानो विभिन्नलक्षणा अर्थगुणा अपि नाङ्गीकर्त्तव्या इत्याह।

पदार्थ इति। चन्द्र इति वक्तव्ये नयनसमुत्थं ज्योतिरत्रेरिति पदार्थे वाक्यरचना कान्तार्थिनी निशि सङ्केतं गच्छतीति वक्तव्येऽभिसारिकेति वाक्यार्थे पदाभिधानम् नायं पण्डित इति वक्तव्ये नायं व्याकरणं स्मृतिमलङ्कारं तर्कं मीमांसाञ्च वेत्तीति व्यासः नायं पण्डित इति समासः मिलितमेतच्चतुष्टयं प्रौढिरित्यर्थः। एतद्वैचित्र्यमात्रमिति तथाच वैचित्र्यमलङ्कार इति लक्षणादलङ्कार एवायमित्यर्थः। तद्भावेऽपीति यद्यपि गुणान्तरात्तत्र काव्यव्यवहार इति वक्तुं शक्यं तथापि गुणान्तरस्य काव्यव्यवहारप्रयोजकत्वमेतद्भावेऽप्यस्ति अस्य तु तथात्वं न गुणान्तरासत्त्वे इत्यन्यथासिद्धत्वमित्यभिप्रायः। अन्यविधस्यौजसः प्रसादमाधुर्य्यसौकुमार्य्योदारतानाञ्च यथासङ्ख्यं पञ्चदोषत्यागेनैव स्वीकार इत्याह अपुष्टार्थत्वेति तद्योगात् साभिप्रायत्वरूपस्य ओजसः

त्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यम्, इत्यर्थदृष्टिरूपः समाधिरपि गुणः।

**तेन नार्थगुणा वाच्याः,**

वाच्या वक्तव्याः।

**प्रोक्ताः शब्दगुणाश्च ये।**

**वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥८॥**

के कस्य? इत्याह,

---

स्वीकारः अर्थवैमल्यमधिकपदेनाकलुषीकरणम् अधिकपदत्वत्यागात् तत्स्वीकारः उक्तिवैचित्र्य बहुधः प्रतिपादनीयस्यार्थस्य भङ्गीभेदेन नवीकरणम् अनवीकृतत्वत्यागात् तत्स्वीकारः अपारुष्यममङ्गलाभावः। अमङ्गलाश्लीलत्वत्यागात् तत्स्वीकारः ग्राम्यत्वत्यागादग्राम्यतारूपाया उदारतायाः स्वीकारः। अभिधायेति रसध्वनीरसगुणीभूतव्यङ्ग्यश्चेत्यु भयत्र रसपदार्थान्वयः। रसगुणीभूतव्यङ्ग्यस्यापराङ्गरूपं ताभ्यामित्यर्थः। क्रमेति। क्रमः क्रियापरम्पराकौटिल्यं वैदग्ध्यव्यञ्जिका रचना अनुल्वणत्वं प्रसिद्धवर्णनम् उपपत्तियोगः सहेतुकत्वमेतच्चतुष्टयमित्यनेन घटनाश्लेष इत्यर्थः तदुदाहरणञ्च।

> दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
> देकस्या नयने पिधाय विहितक्रीड़ानुबन्धच्छलः।
> ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
> मन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बतीति ॥

अत्र हि क्रान्ताख्यातान्तक्रियापरम्परा पुंसो वैदग्ध्यव्यञ्जिका रचना च अयञ्चार्थो लोकप्रसिद्धः अपरस्याश्चुम्बने एकस्या नयनपिधानं हेतुश्चेति। विचित्रत्वमात्रमिति तथाचायमलङ्कार एव न गुण इति भावः। अवैषम्यं प्रक्रमभङ्गाभावः स च प्रक्रमभङ्गः दोषत्यागेनैव स्वीकृत इत्याह दोषाभावेति। अन्यप्रस्तावेऽन्योपक्रमे अन्यदिति। आकाङ्क्षितप्रकारादन्यदित्यर्थः। समाधिगुणास्वीकारवीजमाह अर्थस्येति। सद्योमुण्डितमत्तहूणचिवुकप्रस्पर्द्धि नारङ्गकमित्यादि-

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गाः, रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्य्ये घटना तथा ॥६॥

टठडढवर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः; समासाभावो मध्यमः समासो वेति समासः; 'तथा' माधुर्य्यवतो पदान्तरयोगेन रचना माधुर्य्यस्य व्यञ्जिका। उदाहरणम्,

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥

---

च्छयोनिरर्थः निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावीत्यादिरन्यच्छायायोनिरर्थः अन्यैरपि नारीनयनस्योत्पलसादृश्यवर्णनात्। वाच्या इत्यस्य शक्या इत्यर्थकत्वभ्रमं निरस्यति वक्तव्या इति प्रोक्ता इति माधुर्य्यौजःप्रसादा इत्यर्थः। तेषां शब्दगुणत्वपरम्परयेत्युक्तमेव इताः प्राप्ताः।

मूर्ध्नीति। स्ववर्गान्त्यं वर्णं मूर्द्धावच्छेदेन गच्छन्त इत्यर्थः। स्ववर्गान्तमूर्द्धान इति यावत्कादयो मान्ताः स्पर्शास्ते यद्येवंविधा इत्यर्थः। अत्राटवर्गं पर्य्युदस्यति।

अटवर्गा इति। ह्रस्वान्तणकारस्यापर्य्युदसनीयत्वेन तत्सङ्ग्रहाय ढपर्य्यन्तता ह्रस्वान्ताविति सम्यक् पाठः। ह्रस्वान्तरिताविति पाठे अन्त्यस्वरेण पूर्वव्यञ्जनव्यवधानात् स एवार्थः समास इति समासप्रतियोगिकत्वेन समासाभावस्यापि समासत्वेनोपचर्य्येदमुक्तम्। घटना तथेत्यत्र तथापदं गृह्णन् व्याचष्टे तथा माधुर्य्यवतीति मूर्ध्नि वर्गेत्याद्युक्तमधुरवर्णवतीत्यर्थः। पदान्तरयोगे सन्धौ यद्यपि वर्णत्वेन तस्यापि सङ्ग्रहः सम्भवति तथापि सन्धावपि तादृशा वर्णा उत्पाद्या इत्येवं व्युपदेशपरमिदमिति बोध्यम्। माधुर्य्ये इत्यत्र सप्तम्यर्थो व्यञ्जकता इत्याह व्यञ्जिका इति।

अनङ्गेति। अनङ्गस्य रङ्गस्थलप्रतिमम् आनताङ्ग्यास्तदङ्गं भङ्गीभिरङ्गीकृतं कृत एतज्ज्ञातमित्यत्राह कुर्वन्तीति। यत इत्यर्थे यथेति। यत एता भङ्ग्यो यूनां स्वान्तानि चित्तानि शान्तमपरचिन्तनं येषु तादृशानि कुर्वन्ति अत इत्यर्थः। अत्र

योग आद्यतृतीयाभ्यामन्त्ययोः, रेण, तुल्ययोः ।
टादिः, शषौ, वृत्तिदैर्घ्यं, गुम्फ उद्धत ओजसि ॥ १०

वर्गप्रथमतृतीयाभ्यामन्त्ययोः ( द्वितीयचतुर्थयोः ), रेफेण अध उपरि उभयत्र वा यस्य कस्यचित् तुल्ययोः तेन तस्यैव सम्बन्धः, टवर्गोऽर्थात् णकारवर्जः, शकारषकारौ, दीर्घसमासः, विकटा सङ्घटना ओजसः । उदाहरणम्, मूर्ध्नामुद्वृत्तकृत्तेत्यादि [ २०४पृ० ]

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।
साधारणः समग्राणां, स प्रसादो गुणो मतः ॥ ११ ॥

समग्राणां रसानां सङ्घटनानाञ्च उदाहरणम्,

---

शृङ्गारीयपद्ये गकारास्तकाराश्च स्ववर्गान्त्यमूर्द्धानो माधुर्य्यव्यञ्जकाः प्रतिमन्तेति । दङ्गभेति सम्भावपि तादृशौ वर्णौ । ओजोगुणव्यञ्जकान्याह ।

योग इति । अन्त्ययोरिति स्वस्वान्त्ययोरित्यर्थः गुम्फो घटना उद्धत एतादृशवर्णवान् । तद्द्वितीयचतुर्थयोरिति । तथाचाद्येन द्वितीयस्य तृतीयेण चतुर्थस्य योग इत्यर्थः । अत्र चाद्यत्वतृतीयत्वे भिन्नवर्गसाधारणे बोध्ये तेन भिन्नवर्गाद्येन भिन्नवर्गद्वितीयस्य भिन्नवर्गतृतीयस्य भिन्नचतुर्थेन योगोऽपि बोध्यः । नकारवर्जनेन णकारेण नयोगः तुल्ययोरित्यवाप्येवं बोध्यम् । तेन कच कच्छगजगझक्कादयोऽपि व्यञ्जका बोध्याः अतएवोदाहरणे रक्तसंसक्तेति । उभय एवेति दुर्ग्राह्ये गार्भ्रपर्त्तो मुहुर्घातमार्द्रकमित्यादौ तेन तस्य वेति आद्यस्य आद्येन तृतीयस्य तृतीयेन भिन्नवर्गसाधारणेन योग इत्यर्थः । णकारवर्ज इति । लघुणकारवर्ज इत्यर्थः । विकटा एतादृशोद्धतवर्णवती घटनासन्धिरित्यर्थः मूर्द्धामित्यादीति व्याख्यातमिदं दीपोल्लासे ।

अत्र मूर्द्धामिति । गलद्रत्यादिषु रेफयोगः वृत्तकृत्येति । रक्तसंसक्तेति च आद्यस्य आद्यो योगो जगर्ज्जेति तृतीयेन तृतीयस्येति स्वयमूह्यम् । प्रसादगुणव्यञ्जकान्याह श्रुतिमात्रेणेति । स पूर्वोक्तप्रसादो गुणस्तेषां समग्राणां साधारणस्तादृशैः समग्रैर्व्यञ्ज्य इत्यर्थः । केषां समग्राणां व्यञ्ज्या इत्यत्राह श्रुतिमात्रेणेति । यादृशै

परिम्लानं पीनस्तनजघनसङ्गादुभयतः,
तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः,
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

यद्यपि गुणपरतन्त्राः सङ्घटनादयस्तथापि,

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।**
**रचना वृत्तिवर्णानामन्यथात्वमपीष्यते ॥१२॥**

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा,

मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः,
केनास्मिन् सिंहनादप्रतिरसितसखो दुन्दुभिस्ताड़ितोऽसौ ? ॥

---

रसे यादृशे समासे यादृश्यां घटनायाञ्च सत्यां श्रुतमात्रशब्दादर्थप्रत्ययो भवेत् तादृश-रससमासघटनासद्व्यञ्जिका इत्यर्थः । मात्रपदाद्विलम्बव्यवच्छेदः तथाच फलपरिचया एव तद्व्यञ्जका इत्युक्तं रसानामिति आश्रितत्वं व्यङ्ग्यत्वञ्च षष्ठ्यर्थः आश्रया व्यञ्जकाश्च रसा इत्यर्थः एवञ्च स्वरूपमतिप्रसादे सति शीघ्रोऽर्थबोधस्ततो रसबोधस्ततः प्रसाद-बोध इति सिद्ध्यति ।

परिम्लानमिति । उभयत्र शिरश्चरणावच्छिन्नार्द्धद्वये न्युब्जत्वे स्तनसङ्गः उत्ता-नत्वे जघनसङ्गः तनोर्मध्यस्य परिमिलनघर्षणमप्राप्य अन्तर्हरितमित्यन्वयः । अत्र शीघ्रप्रतीतार्थरसघटनाव्यङ्ग्यः प्रसादः । गुणपरतन्त्रा इति यद्यपि तत्तद्गुणव्यञ्ज-नार्थमेव तत्तद्घटनादय इत्यर्थः । अन्यथात्वं तत्तद्गुणव्यञ्जनार्थतां विनाप्युपादेयत्वं तत्र मिलितवक्त्रादित्रयौचित्यक्षमं निरस्य न व्याचष्टे क्वचिदिति ।

मन्थायस्तेति । रणस्थले दुन्दुभिशब्दं श्रुत्वा भीमस्येयं पृच्छा । दुन्दुभिरत्र दुन्दुभि-शब्दः केन ताड़ितः ताड़नाज्जनितविशेषणानां शब्दविशेष्यकत्व एवोपपत्तेः कीदृशः शब्दः मन्थेनायस्तं प्राप्तायासं यदर्णवाम्भस्तेन प्लुतं व्याप्तं कुहरं गुहा यस्य तादृशस्य चलतो मन्दरस्य ध्वानवद्धीर इत्यर्थः । तथा कोणो वादनदण्डः तदीयाघातेषु

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम्, अभिनेयार्थञ्च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः, वक्ता चात्र भीमसेनः ।

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः । यथा,

प्रौढ़च्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्य्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्य्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजाम्
भाङ्कारैर्भीतमेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते, तथाहि, आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि

---

सत्सु गर्जन्त्याः प्रलयघनघटाया अन्योन्यसङ्घट्टनेव चण्ड इत्यर्थः ईदृशं चण्डत्वं कोणाघातकाले इत्यर्थः यद्वा ।

ढक्काशतसहस्राणि भेरीशतशतानि च ।
एकदा यत्र ताड्यन्ते कोणाघातः स उच्यते ॥

इति परिभाषायां यत्रेत्यस्य यन्निमित्तमित्यर्थकत्वेन एकदा ढक्कादिताड़नजन्याः शब्दाः कोणाघातास्तेषु मध्ये गर्जदित्यादिवत् चण्ड इत्यर्थः । कोणाघातघटकशब्दानां मध्येऽयं तादृशचण्ड इत्यर्थः । कृष्णा द्रौपदी तत्क्रोधप्रवर्त्तकत्वात्तदग्रदूत इत्यर्थः । कुरुकुलनिधनार्थमुत्पातरूपनिर्घातसहितवात इत्यर्थः । अस्मात् सिंहनादस्य यत्प्रतिरसितं प्रतिध्वनिस्तत्तुल्यः । अभिनेयार्थञ्च इति वेणीसंहारनाटकरूपमित्यर्थः । तत्र च रौद्रेऽपि न दीर्घसमासादय इति नियमस्य वक्ष्यमाणत्वान्न तदौचित्यं तथा च वक्त्रौचित्यमात्रादत्र दीर्घसमासादय इत्याह वक्ता चात्रेति तस्य धीरोद्धतत्वात्तदौचित्यम् ।

प्रौढ़च्छेदेति । एतत् कुम्भकर्णस्य उत्तमाङ्गं शिरो वियतो निपतति कीदृशं कन्दरा ग्रीवा तदीयरन्ध्रभाजां मरुतां भाङ्कारैः भामित्यव्यक्तशब्दैर्भीमं तत्रोत्प्रेक्षते कुर्वदिति काकुत्स्थो रामः तस्य स्तुतिं कुर्वदिवेत्यर्थः पुनः कीदृशम् अरुणेन सूर्यसारथिना ईक्ष्यमाणं कीदृशेनारुणेन सैंहिकेयो राहुस्तेन उपघातस्तत्त्रासाकृष्टैरश्वैस्तिर्य्यक् वलितो रविरथो येन तादृशेन तच्छिरसि राहुभ्रमेण तुरगानाकृष्य

नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः। एवमन्यदप्यौचित्यमनुसर्त्तव्यम्।

इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयो नाम अष्टमः उल्लासः॥

---

## नवमः उल्लासः।

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसराः, इति सम्प्रति शब्दालङ्कारानाह,

**यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते।**
**श्लेषेण काक्वा वा, ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥ १ ॥**

तथेति श्लेषवक्रोक्तिः, काकुवक्रोक्तिश्च।

तत्र पदभङ्गश्लेषेण यथा,

---

रविरथोऽरुणेन तिर्य्यग्वर्त्तित इत्यर्थः। ननु पततः शिरसो रविसान्निध्याभावात् कथं राहूपघातत्रास इत्यत उत्तमाङ्गविशेषणमाह प्रौढेति। प्रौढस्य तीव्रवेगजनकस्य छेदस्यानुरूपं यदुच्छलनमूर्द्ध्वगमनं तदीयरयेण मिलत्सन्निहितोऽभवत्। आख्यायिककथा प्राचीनप्रबन्धविशेषौ नाटकादावित्यादिपदान्नाटिकापरिग्रहः।

इति अष्टमो गुणप्रतिबिम्बः।

---

प्राप्तावसराः प्राप्तसमयाः सगुणावनलङ्कृती इति काव्यलक्षणोक्तक्रमादाकाङ्क्षोदयादुपोद्घात एव तु अत सङ्गति र्नावसरः शब्दालङ्कारानिति शब्दार्थावित्युक्तत्वात्तथैव क्रमः।

यदुक्तमिति। अन्यथा अन्याभिप्रायं यद्वाक्यमुक्तमन्येन जनेन उक्तवाक्यश्लेषेण स्ववाक्यकाक्वा वाऽन्यथाऽन्याभिप्रायकं योज्यते योजनया प्रत्याय्यते इत्यर्थः। अन्यदीयं

नारीणामनुकूलमाचरसि चेज्जानासि, कश्चेतनो
वामानां प्रियमादधाति, हितकृन्नैवाबलानां भवान् ?।
युक्तं किं हितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः ?
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः॥

अभङ्गश्लेषेण यथा,

अहो ! केनेदृशी बुद्धिर्दारुणा तव निर्मिता ?।
त्रिगुणा श्रूयते बुद्धि र्नतु दारुमयी क्वचित्॥

काक्वा यथा,

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ॥

---

प्रत्युत्तरं प्रथमवक्तृवाक्यश्लेषस्य स्ववाक्यस्थकाकोर्वा साहाय्यात् प्रथमवक्तुर्वाक्यस्यान्याभिप्रायकत्वप्रतीतिकृदित्यर्थः। तथा द्विधा तादृशी द्विधा व्याचष्टे श्लेषवक्रोति श्लेषश्च सभङ्गोऽभङ्गश्च तवाद्यमुदाहरति।

नारीणामिति। परिहसतीरुक्तिप्रयुक्तौ इमे तव स्त्रीणामनुकूलमाचरामीत्येकेनोक्ते परिहस्य तदन्यः प्रशंसति नारीणामिति जानासि विज्ञोऽसि स्त्रीणामित्यभिप्रायकमिदं प्रथमवाक्यं नारीणामित्यत्र श्लेषवशादरीणां नेत्यभिप्रायकतया स्वप्रत्युत्तरेणान्यो योजनया प्रत्याययति कश्चेतन इति एतदुत्तरस्य वामानां शत्रूणामित्यर्थकत्वात् पूर्ववाक्येऽरीणां नेति योजनालाभः एवं सर्वत्र एतद्वाक्यमेव पुनः पूर्ववक्ता वामानां स्त्रीणामित्यभिप्रायकतया प्रत्याययन् तमनुमोदते हितकृदिति अबाबला स्त्रीहितमिष्टं कृत् कर्त्ता एतद्वाक्यमेव पुनरन्यो बलशून्याभिप्रायकतया योजयन् तं पृच्छति।

युक्तं किमिति। अनेन वाक्येन पूर्ववाक्ये कृतीच्छेदने इत्यभिप्रायकतायाः प्रतीतिः। इदमेव वाक्यं बलस्य बलासुरस्याभावो यस्मात् तादृशानामिन्द्राणां हितस्य मतस्य च्छेत्तेत्यभिप्रायकतया पूर्ववक्ता पुनर्योजयंस्तमधिक्षिपति सामर्थ्यमिति अत्र हितशब्दस्य मतार्थकत्वं हि गतौ सर्वे गत्यर्था ज्ञत्यर्था इत्यनुशासनाद्बोध्यम्।

अहो केनेति। दारुणा कठिना त्रिगुणा इति प्रत्युत्तरम् अस्य मते दारुणेति तृतीयान्तं सत्त्वादिगुणत्रयाधीना इत्यर्थः।

गुरुजनपरेति। अत्र गुरुवाक्यं प्रोषितपतिशोचनाभिप्रायकं पूर्वार्द्धवाक्यं पत्न्याः

**वर्णसाम्यमनुप्रासः,**

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः।

**छेकवृत्तिगतो द्विधा।**

छेकाः विदग्धाः, वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः, गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च।

किं तयोः स्वरूपम्? इत्याह,

**सोऽनेकस्य सकृत्पूर्वः,**

अनेकस्य अर्थात् व्यञ्जनस्य, सकृदेकवारं सादृश्यं छेकानुप्रासः। उदाहरणम्,

---

सखी तु स्ववाक्यकाका तद्वाक्यं कामाकुलत्वेन विषादाभिप्रायकतया पराङ्गस्ववाक्येन योजयन्ती आश्वासयति अलिकुलेति नैष्यति अपितु एष्यति अत्र शिरश्चालनेन सह कृता काकुः। अनुप्रासालङ्कारमाह।

वर्णेति। स्वरसादृश्यमुत्कर्षायैव क्वचित्तद्वैसादृश्येऽपीत्यर्थः। यथा कुपितकपिकपोलक्रोड़ताम्रः शशाङ्क इत्यत्र क्वचित्तु स्वरसादृश्यमपेक्षणीयमेव यथा भूतचूतप्रसून इत्यत्र अतः क्वचित् स्वरवैसादृश्येऽपीत्येवार्थः। संज्ञाव्युत्पत्तिमाह।

रसादीति। छेकवृत्तिगत इति गतः सम्बन्धी तथाच छेकानां विदग्धानां सम्बन्धी वक्तुर्वैदग्धभावप्रत्यायक इत्यर्थः। तेन रसादिसम्बन्धित्वव्यावृत्तिः तच्च स्फुटरसादिरहितरूपे नीरसे बोध्यं स्फुटरसादिसत्त्वे तु वृत्तिसम्बन्धी वृत्तिर्हि रसोपकारिका स्वस्य स्थितिः तत्सम्बन्धी तद्वान् रसविषय इति स्वाश्रयशब्दप्रकर्षणेन तद्द्वारा रसोपकारकत्वाद्रसनिष्ठगुणव्यञ्जकवर्णघटितत्वाच्च गत इत्युत्कीर्त्य तद्वशात् संज्ञासिद्धिमाह।

छेकेति। सकृदिति सकृदपीत्यर्थः। बहुशस्तु सुतरामिति भावः पूर्वश्छेकानुप्रासः। ततोऽरुणेति। प्रातश्चन्द्रवर्णनमिदं परिक्षामः परिक्षीणः अत्र स्पन्दमन्देति। गण्डपाण्डुतेति च संयुक्तानेकवर्णसकृत्त्वं कामक्षामकामिनीत्यसंयुक्तानेकवर्णासकृत्त्वम् एवं ततोऽरुणपरिस्पन्दमन्द इन्दुरसुन्दर इति करणे संयुक्तानेक-

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥

एकस्याप्यसकृत्परः॥ २॥

एकस्य, अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यम् वृत्त्यनुप्रासः। तत्र।

माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते।
ओजःप्रकाशकैस्तैस्तु परुषा,

उभयत्रापि प्रागुदाहृतम् [३२०,३२१ पृ०।]

कोमला परैः॥ ३॥

परैः शेषैः, तामेव केचित् ग्राम्येति वदन्ति।

उदाहरणम्,

अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः।
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला॥

केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः।

एतास्तिस्रो वृत्तयः वामनादीनां मते वैदर्भी गौड़ी पाञ्चाल्याख्या रीतयो मताः।

---

वर्णानामप्यसकृत्त्वं बोध्यम्। प्रातश्चन्द्रवर्णनाच्च न स्फुटरसभावादित्यतो न वृत्त्यनुप्रासः किन्तु वक्तुर्वैदग्ध्यप्रभावव्यञ्जनाच्छेकानुप्रासः।

एकस्यापीति। परो वृत्त्यनुप्रासः अपिशब्दादिति तथाच काव्यस्य स्फुटरसवत्त्वे एकस्यानेकस्य वाऽसकृत्त्वे वृत्त्यनुप्रासत्वं किन्त्वनेकस्य सकृत्त्वे रसानुपकारकत्वात् सरसकाव्येऽपि न वृत्त्यनुप्रासत्वं किन्तु छेकानुप्रासत्वमेव एकस्य सकृत्त्वे तु नानुप्रासत्वमिति निष्कर्षः। धूतचूतेत्यत्र तु स्वरसा स्यान्नेकत्वम् उभयत्रेति। अनङ्गरङ्गेत्यादिकमुपनागरिकायां मूर्ध्नामित्यादिकञ्च परुषायामुदाहृतमित्यर्थः अपसारयेत्यादि।

अत्र सानुस्वारसत्वेन रेफस्य लघुत्वाभावाच्च माधुर्य्यव्यञ्जकत्वं वैदर्भी गौड़ी-

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्य्यमात्रतः ॥४॥**

शब्दगतोऽनुप्रासः, शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात्, लाटजनवल्लभत्वाच्च लाटानुप्रासः। एष पदानुप्रास इत्यन्ये।

**पदानां सः,**

स इति लाटानुप्रासः। उदाहरणम्,

यस्य न सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य॥

**पदस्यापि,**

अपिशब्देन स इति समुच्चीयते। उदाहरणम्,

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्॥

**वृत्तावन्यत्र, तत्र वा।**

**नाम्नः स वृत्त्यवृत्त्योश्च,**

---

येति तेनोपनागरिकानुप्रासो वैदर्भीरीतिः परुषानुप्रासो गौड़ीया कोमलानुप्रासः पाञ्चाली। इत्थं वर्णानुप्रासस्य प्रभेदमुक्त्वा शब्दानुप्रासमाह।

शाब्दस्त्विति। शब्दः पदं पदनिष्पाद्य इत्यर्थः तात्पर्य्येति। तात्पर्य्यविषयान्वयमात्राभेदेऽपीत्यर्थः। मात्रपदात् पदार्थभेदव्यवच्छेदः पदार्थभेदे यमकत्वात् शब्दार्थयोरिति शब्दयोरर्थयोश्चेत्यर्थः शब्दः पदम्। पदानामनेकपदानां यस्य नेति। अत्र पूर्वार्द्धे तापकत्वात् तुहिनदीधितिरपि दवदहनः परार्द्धे तु दवदहनोऽपि दुःखाजनकत्वेन तुहिनदीधितिरिति तात्पर्य्यविषयस्य उद्देश्यविधेयभावेनान्वयस्य भेदः पदार्थानान्त्वभेदः यस्येत्याद्यनेकपदानामयमनुप्रासः। पदस्यापीति एकपदस्यापीत्यर्थः अपिशब्देनेति। न च पदस्यापीत्यपिशब्देन पदानामपीत्येवमेव समुच्चेतुमुचितं न तु भिन्नविभक्त्यन्तस्य स इत्यस्येति वाच्यम्। अपि शब्दान्तेनेत्यर्थात् तथाच पदस्येति षष्ठ्यन्ताकाङ्क्षया स इति लभ्यत इत्यर्थः।

वदनमिति। अत्र पूर्वार्द्धे वदने सुधाकरं रूपयित्वा पुनस्तत्रैवाशङ्कते सुधाकरः

एकस्मिन् समासे, भिन्ने वा समासे, समासासमासयोर्वा नाम्नः प्रातिपदिकस्य, न तु पदस्य, सारूप्यम्। उदाहरणम्।

सितकरकररुचिरविभा विभाकराकार! धरणिधर! कीर्त्तिः।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य॥

तदेवं पञ्चधा मतः ॥५॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः।

**यमकम्**

समरसमरसोऽयमित्यादावेकेषामर्थवत्त्वे अन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुम्, इति अर्थे सतीत्युक्तम्। सेति सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता।

---

क्वन्विति। अस्या वदनं तावत् कलङ्कशून्यं सुधाकरः क्वनु कलङ्केन विकलः शून्यो भवेदित्यर्थः तथाच तत्कथमयं सुधाकर इति संशयः। यद्वा कलङ्केन विकली निकृष्टः सुधाकरः पुनः क्वनु भवेत् अस्या मुखे रूपणेऽस्य दूरपराहतिरेव भवेदित्यर्थः। अत्र सुधाकररूपैकपदमात्रानुप्रासः। इत्थं विभक्त्यन्तस्य पदत्वेन पदघटितं द्विविधं पदानुप्रासमुक्त्वा समासपदैकदेशघटितं तं विविधमाह वृत्ताविति। वृत्तिः समासः तत्र वैविध्यमन्यत्रेति क्रमेणोक्तमप्युदाहरिष्यमाणं श्लोकस्थं क्रमेण व्याचष्टे एकस्मिन्निति। समासासमासयोरिति वृत्त्यवृत्त्योश्चेत्यस्य व्याख्या न तु पदस्येति विभक्त्यन्तरूपपदस्य नेत्यर्थः। तस्य पूर्वोक्तद्वैविध्यान्तर्गतत्वात्।

सितकरेति। व्याख्यातमिति प्राक् किन्तु पौरुषमेव कमलमधिष्ठानपद्मं यस्या इति यत् पूर्वं व्याख्यातं तादृशार्थानभिप्रायेणेदमुदाहृतम् कमला कमलशब्दयोरर्थयोर्भेदेन तदंशे यमकस्यैव प्रसक्तेः किन्तु पौरुषलक्ष्मीरेव लक्ष्मीर्वरिष्ठा इत्यर्थाभिप्रायेणेदमुदाहृतमिति मन्तव्यम्। पञ्चधेति पदानां पदस्य एकसमासे भिन्नसमासे समासासमासयोश्चेत्येवं पञ्चधेत्यर्थः। यमकालङ्कारमाह।

अर्थे सतीति। अनुप्रासवारणाय अर्थभिन्नानामित्यवश्यं वाच्यम्। तत्र समरतेजसीत्यादिषु निरर्थकयोर्मरते मरते इति यमकितभागयोरव्याप्तमतोऽर्थे सतीति। अर्थासत्त्वे तु निराबाधमेव यमकमिति भावः। तथाच निरर्थकानामर्थे सत्यर्थभिन्ना-

पादतद्भागवृत्ति तद्यात्यनेकताम् ॥६॥

प्रथमो द्वितीयादौ [३] द्वितीयस्तृतीयादौ [२] तृतीयश्चतुर्थे [१], प्रथमस्त्रिषु [१], अपीति सप्त। प्रथमो द्वितीये, तृतीयश्चतुर्थे, प्रथमश्चतुर्थे, द्वितीयस्तृतीये इति द्वे। तदेवं पादजं नवभेदम्। अर्द्धावृत्तिः, श्लोकावृत्तिश्चेति द्वे। द्विधा विभक्ते पादे प्रथमपादादिभागः पूर्ववत् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिभेदाः, श्लोकान्तरे हि नासौ भागावृत्तिः। त्रिखण्डे त्रिंशत्, चतुःखण्डे चत्वारिंशत्। प्रथमपादादिगतान्त्यार्द्धादिभागो द्वितीयपादादिगते आद्यार्द्धादिभागे यस्यते, इत्याद्यन्वयतानुसरणेनानेकभेदम्, अन्तादिकम्, आद्यन्तिकम्, तत्समुच्चयः, मध्यादिकम्, आदिमध्यम्, अन्तमध्यं मध्यान्तिकं तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्या-

---

नाश्च सा पुनः श्रुतिरिति लक्षणद्वयं पर्यवसितम् उभयानुगमस्तु एकार्थभिन्नानामित्येवं बोध्यः। व्याचष्टे समरेति। अभीतत्वेन समरेऽसमरतुल्यस्य इत्यर्थः। एकस्येति समरसपदैकदेशसमरपदमत्र निरर्थकम् इदमुपलक्षणं द्वयो निरर्थकत्वे सतीत्यपि बोध्यम्। इत्यादिवैलक्षण्येनेति इत्यादितो वैलक्षण्येनेत्यर्थः।

पादतद्भाग इति। तद्यमकं पादवृत्ति तद्भागवृत्ति चेत्यर्थः। तत्र पादवृत्तेरेकादशविधत्वं दर्शयति।

प्रथम इति। प्रथमः पाद इत्यर्थः। द्वितीयादाविति आवर्त्तत इत्यर्थः। द्वितीये तृतीये चतुर्थे वेत्यर्थः। तथा चेदं त्रयं द्वितीयस्तृतीयादाविति द्वितीयस्य प्रथमे आवृत्तिस्तु प्रथमस्य द्वितीये आवृत्तिरूपैवेति पूर्वगणनाप्रविष्टत्वान्न गणिता एवमुत्तरत्रापि प्रथमस्त्रिष्वपीति पदचतुष्टयं सममित्यर्थः। प्रथमो द्वितीये तृतीयश्चतुर्थे इत्यनयो र्मिलनं बोध्यम् एवमुत्तरत्रापि। अर्द्धावृत्तिरिति प्रथमस्य तृतीये द्वितीयस्य चतुर्थे आवृत्तिरूपमिदमित्यतः पादावृत्तिः श्लोकावृत्तिस्तु पूर्वश्लोकीयपादचतुष्टयस्यैव पुनरावृत्तिरूपेत्यत इदमपि पादावृत्तिरूपं इत्थमेकादशधा पादावृत्तिमुक्त्वा भागावृत्तिमाह द्विधेति। पादस्य द्विधा विभक्तत्वे एकपादीयादिभागस्यान्यपादीयादिभागे

दिभागानां मध्यादिभागेषु, अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम्। तदेतत्काव्यान्तर्गड़भूतम् इति नास्य भेदलक्षणम् कृतम्। दिङ्मात्रमुदाह्रियते,

सन्नारीभरणोमायमाराध्य विधुशेखरम्।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय॥ [ए॰पा॰आ॰]

विनाऽयमेनो नयताऽसुखादिना
विना यमेनोनयता सुखादिना।
महाजनोऽदीयत मानसादरम्
महाजनोदी यतमानसादरम्॥ [अर्द्ध॰ आ॰]

---

तथा एकपादीयान्त्यभागे पादयमनरीत्या यमने एकादशद्वैगुण्येन द्वाविंशतित्वप्रसक्तावाह श्लोकान्तरे हीति अत उक्तं विंशतिरिति। पादस्य त्रिखण्डादित्वे भागं प्रत्येवं रीत्या दशवृद्ध्याऽनेकत्वमित्याह त्रिखण्ड इत्यादि। एवं सजातीयभागस्य सजातीयभागेष्वावृत्तिमुक्त्वा विजातीयभागेष्वावृत्त्याप्यनेकत्वमित्याह प्रथमपादादीति। अन्वर्थतानुसारिणेषां नामान्याह अन्त्यादिकमिति। अन्त्यस्यादौ यमनेऽन्त्यादिकम् आद्यस्यान्त्ययमने चाद्यान्तिकम् उभयसत्त्वे तत्समुच्चय इत्येवंरीतिः सर्वत्र। इत्थं भिन्नपादे यमनमुक्त्वा एकस्मिन्नेव पादे एकभागस्यान्यभागे यमनमाह तथा तस्मिन्नेवेति भागानियमेनाप्येकदेशे यमनमाह अनियते चेति इदञ्च भिन्नाभिन्नपादसाधारणं बोध्यम्। गडु विषमग्रन्थिः।

सन्नारीति। त्वं विधुशेखरमाराध्य आराध्य देवादिकोऽव राधिः ततोऽनन्तरं त्वं पृथिवीं जय विधुशेखरं कीदृशं सती नारीर्बिभर्त्ति पालयतीति सन्नारीभरणा तादृशीमुमां धाति यः पत्नीत्वेन प्राप्नोति तादृशम् आतोऽनुपसर्गात् कः। त्वं कीदृशः सन्ना अवसन्ना अरीणामिभा हस्तिनो यस्मात्तादृशी रणो यस्य तादृशः अमायी मायायुद्धरहितोऽकपटी वा अत्र प्रथमपादस्य तृतीयपादे यमनम्।

विनाऽयमिति। मृतं जटायुषं दृष्ट्वा रामं प्रति लक्ष्मणोक्तिरियम्। अयं विना विपुरुषः पुंपक्षी जटायुः एनोऽपराधं विना यमेन अरमत्यर्थं मानसात् अदीयत अखण्ड्यत अत्यन्तध्वस्तमनःसंयोगः कृतोऽमार्य्यतेत्यर्थः। यमेन कीदृशेन नयता

स त्वारम्भरतोऽवश्यमबलम् विततारवम् ।
सर्वदा रणमानैषीदवानलसमस्थितः ॥
सत्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानलसमस्थितः ॥ [श्लो० आ०]
अनन्तमहिमव्याप्तविश्वाम् वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥ [अन्त० भा० आ०]
यदानतोऽयदानतो नयात्ययं न यात्ययम् ।

---

स्वपुरं प्रापयता असुखादिना प्राणखादनशीलेन सुखादिना सुखतत्कारणैः जनयता हीनं कुर्वता विना कीदृशः महाजनः तथा। महाजनोदी अजक्षेपणे नुदप्रेरणे इत्येताभ्यां महाक्षेपकक्षेपीत्यर्थः। महाप्रवृत्तेरपि प्रवृत्तेति यावत् तन्नोदनक्रियाया विशेषणमाह यतमानेति। स्वरक्षणपरहिंसार्थं यतमानस्य सादमवसादं राति ददाति तादृशनोदनशील इत्यर्थः। अत्र प्रथमो द्वितीये तृतीयश्चतुर्थे आवृत्तः। श्लोकावृत्तिमुदाहरति।

सत्वारम्भेति। प्रबन्धे राजान्तरवर्णनानन्तरं भरतराजवर्णनमिदं स तु भरतो राजा अवश्यं स्ववश्यतामप्राप्तं अरिम् अरिसमूहम् अबलं नाशितबलं विततारवं विस्तृतार्त्तरवं सर्वदा अरणं त्यक्तरणञ्च अवलम्बिततारवम् आश्रिततरुत्वम् आनैषीत् प्रापयामास सैन्यविक्रमनाशादिपूर्वकं वनतरुतले प्रेषयामासेत्यर्थः। राजा कीदृशः अलसं यथा स्यात् तथा अवान् अगच्छन् अणी सत्वरगामीत्यर्थः। वा गतिगन्धनयोरित्यस्य रूपमिदं तथाऽस्थितः शत्रूणामस्थितचक्रः उप्रत्ययान्तस्य तक्षतेरूपमिदं पुनः कीदृशः अवश्यं नियतम्।

सत्वारम्भे सात्त्विककर्म्मणो यज्ञादेरारम्भे रतः न केवलं शत्रुमारणात्तामसिक इत्यर्थः। अत्र सत्त्वेति। पृषोदरादित्वात्तल्लोपस्तेन यमकमक्षुणं तथा सर्वेषां दारुणो हृदयविदारणो यो मानः स्वाधिक्यात् सर्वपूज्यत्वं तदिच्छुः दावानलसमस्थितं परदारकलत्रशीलं यस्य तादृशः। भागावृत्तिमुदाहरति अनन्तेति। यदानत इति च युग्मकं तामर्थात् दुर्गां स्मरामि यां वेधा अपि न वेद न जानाति यतोऽनन्तमहिमव्याप्तविश्वां याच प्रणते मानवे मातेव दयां भजते तथा।

यदानतो यस्याज्ञानतः संसारी जनो न यस्य नीतेरत्ययं विप्लवं न याति

शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम् ॥ युग्मकम्]

सर स्वति प्रसादं मे, स्थितिं चित्तसरस्वति ।
सरस्वति ! कुरु क्षेत्र कुरुक्षेत्र-सरस्वति ! ॥

ससार साकन्दर्पेण कन्दर्पेण स सारसा ।
शरन्नवाना विभ्राणा नाविभ्राणा शरन्नवा ॥

मधुपराजि पराजित मानिनी-
जनमनः सुमनः सुरभिश्रियम् ।
अभृत वारित वारिजविप्लवम्
स्फुटित-ताम्र-तताम्रवनं जगत् ॥

---

अयदानतः शुभावहविधिदानात् अयः शुभावहो विधिरिति कोषः। तां कीदृशीं स्मरेण अमितां प्राप्ताम् असगत्यर्थस्य रूपमिदम् अतएव शिवे महेशे ईहितं कामचेष्टा यस्यास्तादृशीं तथा शिवे कल्याणेऽस्माकं हितामनुकूलाम्। अत्राद्यश्लोके द्वितीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे यमकं द्वितीयश्लोके तु तत्र तत्रैव पादे आद्यान्तिकम्।

सरस्वतीति। अत्र परार्द्धस्थमाद्यं सरस्वतीति सम्बोधनं हे सरस्वति ! स्वतिप्रसादशोभनमतिप्रसादं मे मह्यं सर गच्छ तथा हे चेत्र ! कुरुचेत्र ! सरस्वति मच्छरीरात्मककुरुचेत्रस्थसरस्वतीनामनदि ! मम चित्तसरस्वति चित्तसागरे स्थितिं कुरु नद्याः सागरगामित्वौचित्यात्। सरस्वान् सागरोऽर्णव इति कोषः। अत्राद्यन्तिकयोरन्त्यादिकयोश्च समुच्चयः।

स सारसाकमिति। नवा नवीना शरत्कन्दर्परूपेण दर्पेण साकं सह ससार आगता ससारसा सपद्मा सारसं सरसीरुहमिति कोषः। नवाना नवम् अनः शकटं यत्र तादृशी वर्षापगमे शकटप्रवृत्तेः विभ्राणा वीनां पक्षिणां भाणः शब्दो यस्यां तादृशी तदानीं पक्षिशब्दबाहुल्यात् तथा शरं शरकाण्डं नाविभ्राणा अविभ्राणा न अपि तु विभ्राणैव तदानीं शरकाण्डोद्गमात्। अत्रान्त्यादिकाद्यान्तिकयोः समुच्चयः।

मधुपेति। अथोवसन्तकालीनं जगत् श्रियम् अभृत जगत्कीदृशं मधुपराज्या भ्रमरश्रेण्या पराजितं मानिनीजनानां मनो यत्र तादृशं मधुपश्रेण्या उद्दीपक-

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

**वाच्यभेदेन भिन्ना यत् युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः, श्लेषोऽसावक्षरादिभिरष्टधा ॥७॥**

अर्थभेदेन शब्दभेद इति दर्शने काव्यमार्गे स्वरो न गण्यते, इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यत् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते, स श्लेषः । स च वर्ण-पद-लिङ्ग भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा । क्रमेणोदाहरणम्,

अलङ्कारः शङ्काकर-नरकपालं, परिजनो
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्,
विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ [वर्ण०]

---

त्वात् तथा सुमनोभिः पुष्पैः सुरभिगन्धि तथा वारितो वारिजानां शिशिराधीनो विप्लवो विपद्द यत्र तादृशं तथा ततं विस्तृतं तामसं यत्र तादृशम् । अत्रा नियते भागे तत्र तत्रैव पादे मध्ययमकसमुच्चयः । श्लेषालङ्कारमाह ।

वाच्यभेदेनेति । वृत्ताविवास्य प्रस्फुटा व्याख्या ।

अर्थभेदेनेति । नैयायिकमत एव एकस्य शब्दस्यानेकोऽर्थादर्शनविशेषे यावन्तोऽर्थास्तावन्त एव शब्दाः एकेनैव प्रयत्नेनोच्चार्य्यन्ते एकप्रयत्नोच्चार्य्यदोषाच्च भेदाग्रह इति मतं दर्शितमनेन । नन्वर्थभेदे उदात्तादिस्वरो भिद्यते तथाच स्वरभेदानुकूलप्रयत्नभेदस्तच्छाब्दग्रहः स्यादित्यत आह काव्यमार्गे इति भिन्नं स्वरूपमिति इयं श्लिष्यन्तीत्यस्य व्याख्या स्वभेदं न ग्राहयन्तीत्यर्थः सश्लेष इति तादृशश्लेषणमेव श्लेषालङ्कार इत्यर्थः अक्षरादिभिरिति व्याचष्टे स चेति तत्र पदयोरेकवर्ण कृतवैरूप्येऽपि व्याकरणकृत कार्य्यवशादैकरूप्यम् । वर्णश्लेषमुदाहरति ।

अलङ्कार इति । वक्रे कुटिले विधौ चन्द्रे मूर्ध्नि स्थितवति सति सर्वामरगुरोः स्थाणो महेशस्यापि इयमवस्था वयम् अमी पुन विधौ भाग्ये वक्रे प्रतिकूले मूर्ध्नि स्थितवति के । सर्वथैव तादृशावस्थाप्राप्तियोग्या इत्यर्थः । विधाविति शब्दे का-

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव !।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्॥ [पद०]
भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये।
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः॥ [लिङ्ग०]
एवं वचनश्लेषोऽपि।

---

द्विभुभाग्ययोरेकत्वाध्यासादिदमुपपादनीयं स्याणोरवस्थामेवाह अलङ्कार इति। शङ्काऽशुचित्वशङ्का भृङ्गिनामा विशीर्णाङ्गस्य कश्चित् परिजनः गतवया वृद्ध एको वृषस्य वसु धनमित्यवस्था। अत्र विधुविधिशब्दान्त्यस्वरूपैकवर्णभेदेऽप्यैक-रूप्यम्। पदश्लेषमाह पृथुकेति न्यूनाधिकवर्णकयोः पदयोरभेदेऽपि मिलनादैकरूप्यं बत्वम्।

पृथुकेति। व्याख्यातमिदं दोषोल्लासे। अत्र पृथुपृथुकादिपदानां न्यूनाधिक-वर्णकानां भेदेऽपि ऐकरूप्यं मिलनात्। लिङ्गवचनश्लेषयोरेकमुदाहरणमाह।

भक्तीति। विभिन्नलिङ्गयोर्विभिन्नैकद्व्यादिवचनयोश्चैकरूप्यं तत्त्वद्वयम्। भक्ति-प्रह्वेति। हरेर्नेत्रे नेत्रद्वयं तस्य तनुर्वा युष्माकं भवार्त्तिशमनं कुरुतां पञ्चम्याः परस्मैपदद्विवचने आत्मनेपदैकवचने च रूपमिदम्। नेत्रयोस्तनोश्च विशेषणान्याह भक्तिप्रह्वेति। प्रह्वो नम्रः नेत्रपक्षे तत्कर्मकविलोकने तनुपक्षे तु तत्कर्तृकविलोकने प्रणयिनी वत्सला च नीलेति। नेत्रपक्षे आकारस्य वर्णस्य च तनुपक्षे तु वर्णस्यैव साम्यात्। ध्यानेति। नेत्रपक्षे समाधिनिरतैर्योगिभिर्ध्यानालम्बनतां ध्येयतां हितस्य प्राप्तये नीते तनुपक्षे तु तैरीहितस्य प्राप्तये तथा तां नीता नेत्रयोस्तनोश्च ध्येयत्वात् महानिधिमहाश्रयौ महानिधिर्महाश्रयश्च रेफे विसर्गस्थानीयस्य रेफस्य लोपे दीर्घः लक्ष्मीदृशो रसिकतां तन्वती तन्वाना च उभयस्यैव लक्ष्म्या हर्षेण दृश्यमानत्वात्। अत्र च महानिधि इति विना सर्वत्रैव नपुंसकस्त्रीलिङ्गयोरैकरूप्यं द्विवचनैक-वचनान्तयोरैकरूप्यन्तु सर्वत्रैव तदाह एष एव चेति अत्र च महानिधि इत्यत्र कुरुतामित्यत्र च लिङ्गश्लेषरहितो वचनश्लेषः अरिस्तन्नाम चाददुरित्यत्र वचनश्लेष-रहितो लिङ्गश्लेष इत्यवधेयम्। भाषाश्लेषमाह।

महदेसुरसन्धम्मे तमवसमासङ्गमागमाहरणे ।
हरवहुसरणं तं चित्तमोहमवसरउ मे सहसा ॥ [भाषा०]
अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यं कृदमित्राणां मित्राणाञ्च नृपात्मजः ॥ [प्रकृति०]

---

महदे इति । अर्थभेदेऽपि संस्कृतप्राकृतयोर्भाषयोरैकरूप्यं तत्त्वं भाषासमावेशे तु नार्थभेदः । महदे अत्र संस्कृतप्राकृतयोर्विभिन्नपदविच्छेदः तथाहि संस्कृतपक्षे महदे इति सुरसन्धमिति मे इति तमिति अव इति समासङ्गमिति आगमाहरणे इति हरेति बहुशरणमिति तमिति । चित्तमोहमिति अवसरे इति सहसेति । च पदविच्छेदः । तदर्थस्तु हे उमे ! हे महदे ! उत्सवदात्रि ! आगमस्य वेदस्याहरणे स्वायत्तीकरणे तं प्रसिद्धं समासङ्गं मे मम अव रक्ष जनयेति यावत् । समासङ्गं कीदृशं सुरसन्धं सुरान् सन्धत्ते स्वसंसर्गिणः कुरुते इत्यतः कः सुरगणसहचरत्वकारकमित्यर्थः । तथा तं प्रसिद्धं चित्तमोहमृत्युकालरूपेऽवसरे सहसा हर अपनय कीदृशं बहुशरणं निषिद्धबहुविषयगामिनम् । प्राकृतपक्षे पदविच्छेदस्तु मह इति देसु इति रसमिति धर्मे इति तमवसमिति आसमिति गमागमा इति हर इति णे इति हरवहु इति शरणमिति तमिति चित्तमोहमिति अवसरउ इति मे इति सहसेति च । तदीयं संस्कृतं यथा—

मम देहि रसं धर्मे तमोवशामाशां गमागमाद्धरणः ।
हरवधु ! शरणं त्वं चित्तमोहोऽपसरतु मे सहसेति ॥

तदर्थश्च यथा हे हरवधु ! मम धर्मे रसं देहि गमागमात् संसारात् तमोवशामाशां नोऽस्माकं हर त्वं मे शरणं चित्तमोहो मेऽपसरतु पलायतां सहसा शीघ्रमिति । अत्र सहसापदं भाषासमावेशः सर्वमन्यदर्थभेदाद्भाषाश्लेषः । प्रकृतिश्लेषमाह ।

अयमिति । प्रत्ययैक्ये प्रकृतिभेदेऽप्यैकरूप्यं तत्त्वं राजपुत्रे जाते ज्योतिर्विद उक्तिरियम् । अयं नृपात्मजः सर्वाणि शास्त्राणि हृदि वक्ष्यति अत्र वह धातुः ज्ञेषु पण्डितेषु वक्ष्यति च अत्र वचधातुः प्रत्ययस्तु उभयत्रैकः तथाऽयममित्राणां मित्राणाञ्च सामर्थ्यकृत् एकत्र कृतीच्छेदने अन्यत्र डुकृञ् करणे प्रत्ययस्त्वेकः । प्रत्ययश्लेषमाह ।

रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्वसम्पत्सहस्रः।
प्रमथनिवहमध्ये जातुचित् त्वत्प्रसादात्
अहमुचितरुचिः स्यान्नन्दिता सा तथा मे॥ [प्रत्यय०]
सर्वस्वं हर सर्वस्य, त्वं भवच्छेदतत्परः।
नयोपकारसांमुख्यमायासि तनुवर्त्तनम्॥ [विभक्ति०]

**भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत्।**

---

रजनीति। प्रकृत्यैक्ये आख्यातकृत्तद्धितप्रत्ययभेदेऽप्यैकरूप्यं तच्चम्। महेश-गणमध्ये तिष्ठासोः कस्यचिदुक्तिरियम्। अहं तत्प्रसादात् महेशप्रसादात् जातु कदाचित् प्रमथनिवहमध्ये उचितरुचिर्योग्यदीप्तिः स्यां। अहं कीदृशः नन्दिता आनन्दकर्त्ता तथा रजनिरमणमौलि महेशस्य पादपद्मावलोकनरूपस्य क्षणस्य उत्सवस्य समये पराप्तं प्राप्तमपूर्वसम्पत्सहस्रं येन तादृशः सहस्रमिति पाठे तु स्यामिति क्रियाविशेषणं तथा सा प्रसिद्धा नन्दिता नन्दिनामगणाधिपता मे स्यात् अत्रासधातुरेकः यात् यामप्रत्यययोर्भेदः सत्त्वावैकरूप्यं तथा निन्दितेत्यत्र नदधातु-रेकः कृत्प्रत्ययात्तद्धितप्रत्ययस्याव्यवहितोत्तरत्वचप्रत्ययस्य च भेदेऽपि ऐकरूप्यं विभक्ति श्लेषमाह।

सर्वस्वमिति। सुप्तिप्विभक्तिभेदेऽपि नामधातोरैकरूप्यं तच्च सर्वस्वमिति शिवं प्रति भक्तस्य पुत्त्रं प्रति दस्योरुक्तिरियम्। भक्तपक्षे हे हर! त्वं सर्वस्य सर्वस्वं भवस्य संसारस्य छेदतत्परः नयोपकारयोः साम्मुख्यं प्राप्ति र्यस्मात् तादृशं तनुवर्त्तनं शरीरस्थितिमायासि आगच्छसि। दस्युपक्षे त्वं सर्वस्वं हर छेदतत्परो भव उप-कारसाम्मुख्यं नय अपनय तद्विमुखो भवेत्यर्थः। आयासि परायासदायकं वर्त्तनं स्थितिं तनु विस्तारय। अत्र हर भव नय आयासि इत्यत्र लुप्तसुप्विभक्तेः आया-सोति विना सर्वत्र लुप्ताख्यातविभक्तेश्च आयासीत्यत्रालुप्ताख्यातविभक्तेश्च रूपं त्वेकम्।

भेदाभावादिति। प्रकृत्यादेरित्यत्र प्रभृतिवाचक एवादिशब्दः तेन क्रमपरत्वा-भावे तत्प्रभृतयोऽचरादयोऽपि भवन्तीत्यतोऽचरादेरित्यर्थः। अचरादेर्भेदस्या-भावादसम्भवाद्वित्यर्थः।

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्,

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते॥

अत्र प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ।

ननु स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्य्याणां, तदभावादभिन्नप्रयत्नोच्चार्य्याणाञ्च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्यर्थालङ्कारमध्ये गणितोऽन्यैरिति कथमयं शब्दालङ्कारः? । उच्यते, इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः, सः अन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते, तथाहि कष्टत्वादिगाढ़त्वाद्यनुप्रासादयः व्यर्थत्वादिप्रौढ्याद्युपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते।

---

नवमोऽपीति। स च समानवर्णकाखण्डपदरूपः।

योऽसकृदिति। यो राजा इन्द्रश्च परगोत्राणां शत्रुकुलानां प्रकृष्टगोत्राणां प्रकृष्टाचलानाञ्च पक्षस्य सहायस्य पतत्रस्य च छेदे क्षणात् क्षमः शतस्य कोटिश्च दातृतां शतकोटिना वज्रेण खण्डकताञ्च बिभ्रत् स विबुधानां पण्डितानां देवानाञ्च इन्द्रः प्रभुः स राजते इत्यर्थः।

अत्र शतकोटिदतामित्यंशे पदश्लेषः सर्वत्र अन्यत्राखण्डपदे नवमश्लेषः। नन्वेकार्थस्य प्रकरणनियन्त्रितत्वेऽपरार्थे व्यञ्जनैव तथाचोल्लास्यकालकरवालेत्यादि यदुपमाध्वनिरेवायं न श्लेषालङ्कार इत्यत आह अत्रेति।

ननु सभङ्गश्लेषः शब्दश्लेषः तत्र भङ्गेन विभिन्नप्रयत्नोच्चरितयोः स्वरभेदेन भिन्नयोः श्लिष्टत्वात् अभङ्गशब्दस्तु एकप्रयत्नोच्चार्य्य एक एव न श्लिष्टस्तदभेदादर्थश्लेष एवासौ तथा एतद्द्वयमपि अर्थालङ्कारान्तरं तत्प्रतिभोत्पत्तिस्तज्ज्ञानोदयो हेतुः ज्ञापको यस्य तादृश इत्यर्थः। अर्थालङ्कारान्तरज्ञानज्ञाप्य इति वर्त्तुलार्थः। एवमेव वारंवारलिखनार्थः शब्दश्लेषोऽर्थश्लेषश्चेति भिन्नाभिन्नप्रयत्नोच्चार्य्यत्वे यथासङ्ख्य

इयञ्च पल्लवाताम्रभास्वत्करविराजिता। (इत्यभङ्गः शब्दश्लेषः)
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा॥ (इति सभङ्गः शब्दश्लेषश्च)

इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दे श्लेषत्वमुपपन्नं, न त्वाद्यस्यार्थश्लेषत्वम्। अर्थश्लेषस्य तु स विषयः, यत्र शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना, यथा,

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥

---

बोध्यम्। इदं परीक्षमर्थालङ्कारत्वे बीजमयुक्तं किन्त्वन्वयव्यतिरेकानुविधानमेव बीजमित्याह उच्यते।

इत्यादि कष्टत्वं श्रुतिकटुत्वं तदादिः शब्ददोषः गाढ़त्वमुद्धतवर्णविन्यासस्तदादिः शब्दगुणः परीक्षः अनुप्रासादिः शब्दालङ्कारः तथा व्यर्थत्वमपुष्टार्थत्वं तदादिरर्थदोषः प्रौढत्वं पदार्थे वाक्यरचनेत्याद्युक्तचतुर्विधप्रौढ़िरूपौजोगुणः परीक्षस्तदादिरर्थगुणः उपमादिरर्थालङ्कारः तद्भावेति। तदन्वयव्यतिरेकानुविधायित्वादित्यर्थः। एवञ्चाभङ्गश्लेषत्वेऽपि अर्थालङ्कारज्ञानज्ञाप्यत्वेऽपि च शब्दान्वयव्यतिरेकानुविधायित्वात् शब्दालङ्कार एव श्लेष इति साधयितुमुदाहरति इयञ्चेति। स्वयञ्चेति क्वचित्पाठः। अत्र प्रबन्धगम्या पार्वतीविशेष्या आगतेति शेषः। कीदृशी प्रभातसन्ध्येव उभयसाधारणं श्लिष्टविशेषणमाह पल्लवेति। पल्लववदाताम्रेण भास्वता दीप्यमानेन करेण विराजिता पार्वती। सन्ध्या तु पल्लवेष्वाताम्रेण भास्वतः सूर्य्यस्य करेण विराजिता। अत्रार्द्धे भास्वच्छब्दकरशब्दयोरभङ्गत्वे नार्थश्लेषत्वमुक्तः। तथाऽस्वापे सुखेनालभ्ये दुरापे फले लुब्धानामीहितस्य वाञ्छितस्य प्रदात्री पार्वती। सन्ध्या तु अस्वापे स्वापस्य निद्राया अभावे फले लुब्धे जने ईहितस्य जागरणस्य प्रदात्री। अत्रार्द्धे अस्वापेत्यत्र भङ्गाच्छब्दश्लेषत्वमुक्तः। शब्दान्वयव्यतिरेकानुविधानात्तु द्वयोरपि शब्दश्लेषालङ्कारत्वमाह द्वयोरपीति। नन्वेवमर्थालङ्कारोच्छेद इत्यत आह अर्थश्लेषस्य त्विति।

स्तोकेनेति। तुला मानतुला तस्याः कोटेरग्रभागस्य पक्षे उन्नतिशब्दस्थाने उच्चावीत्पतनादिशब्दानामधोगतिशब्दस्थानेन धनपतनादिशब्दानाञ्च दानेनार्थश्लेषत्वहानिः इत्थमियञ्चेत्यादौ पूर्वार्द्धेऽभङ्गश्लेषत्वे नार्थश्लेषत्वम्। तदुक्तं निषिध्य

न च अयमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथाहि यथा, कमलमिव मुखं मनोज्ञमेतत्कचतितरामित्यादौ गुणसाम्ये, क्रियासाम्ये उभयसाम्ये वा उपमा, तथा, सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुविम्बमिवेत्यादिशब्दमात्रसाम्येऽपि सा युक्तैव। तथाह्युक्तं रुद्रटेन स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु आश्रित्य शब्दमात्रं सामान्यम्, इहापि सम्भवत इति। न च कमलमिव मुखमित्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्, पूर्णोपमाया निर्विषयत्वापत्तेः।

---

शब्दश्लेषत्वे साधिते उपमाज्ञानज्ञेयत्वेनार्थश्लेषत्वमपि तदुक्तं खण्डयति नचायमुपमेति। अयम् इयश्चेत्यादौ श्लेषो न चोपमाज्ञानज्ञाप्यः किन्तु श्लेषज्ञानज्ञाप्यैवोपमा इत्याह अपित्विति। श्लेषाधीनमुभयवाचकशब्दस्वरूपसाधर्म्यज्ञानं तेन चोपमाज्ञानमित्यर्थः। उभयवाचकैकशब्दोऽपि साधर्म्यं भवतीति साधयितुमाह तथा हीति कचति दीप्यते गुणसाम्ये इति मनोज्ञत्वमत्र गुणः कचनं क्रिया विवक्षावशादेकेन उभयेन वा साम्यं दृष्टान्तयित्वा शब्दसाम्यं दृष्टान्तयति तथा सकलकलमिति। सकला कला यस्य चन्द्रविम्बं तादृशं पुरन्तु कलकलशब्दसहितं अत्र उभयवाचकैकशब्दोऽपि साधर्म्यं भवतीत्यत्रार्थे रुद्रटोक्तं प्रमाणयति। तथा ह्युक्तमिति इहापि शब्दालङ्कारमध्येऽपि उपमासमुच्चयौ सम्भवत इत्यर्थः। तत्रोपमायां सकलकलमित्यादिदर्शितमेव समुच्चये तु तवाधरे च रागोऽभूदधुना हृदये च मे इति बोध्यम्। अत्र हि रक्तिमानुरागयोः श्लिष्टं रागपदमेव साधर्म्यम्। ननु मनोज्ञत्वं कथनञ्च व्यक्तिभेदेन कमलमुखयोः विभिन्नार्थकं साधर्म्यमुभयोरिति तदुभयवाचकं मनोज्ञादिपदमेव साधर्म्यं शब्दसाधर्म्ये च श्लेष एवालङ्कारः उपमा तु तत्र नालङ्कारः किन्तु श्लेषघटकतयैवोपपत्तेः उपमालङ्कारस्तु अनुपात्तमनोज्ञत्वादिके कमलमिव मुखमित्यादावेव स्वतः उपमाश्लेषयोरेकत्र समावेश एव नास्ति कथं श्लेषज्ञानज्ञाप्ये वोपमेत्याशङ्कते न चेति पूर्णोपमाया इति। उपमानोपमेयसाधारणधर्मवादीनां चतुर्णामुपादाने पूर्णोपमा साधारणधर्मानुपादान एव उपमास्वीकारे तु तन्निर्विषयत्वापत्तिरित्यर्थः। तथाच तन्निर्विषयत्वापत्तिभीत्या साधारणधर्मोपादानेऽपि

देव ! त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥

इत्यादिः श्लेषस्य चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति, द्वयोर्योगे सङ्कर एव । उपपत्तिपर्य्यालोचने तु उपमाया एवायं युक्तो विषयः, अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् ।

---

उपमा स्वीकार्य्या मनोज्ञत्वादिनाऽनुगमेन मनोज्ञत्वादीनां साधर्म्यत्वं भविष्यति तथा चानुपात्तसाधर्म्यान्तरेण कलकलमित्यादौ श्लिष्टशब्द एव साधर्म्यं तथाच श्लेषज्ञानज्ञाप्यैवोपमा श्लेषस्तु तत्र नालङ्कार इति साधितम् । ननु क्वचित्साधर्म्ये ज्ञाते उपमा ज्ञायते क्वचिदिवादिना उपमायां ज्ञातायां तदुपपादकतया साधर्म्यं ज्ञायत इत्यविनिगमना तथाच कथम् इयञ्चेत्यादौ नियतश्लेषज्ञानज्ञाप्यत्वमुपमाया इति चेदुपमाया अविनिगमनायां द्वयोरेवालङ्कारत्वमस्तु श्लेषस्य शब्दस्य उपमा त्वर्थस्यालङ्कारोऽस्तु तथाच इयञ्चेत्यादौ द्वावेवालङ्कारौ मतामिति हृदयेन श्लेषस्यापि स्वतोऽलङ्कारत्वं साधयितुमुपमा असङ्कीर्णं श्लेषं दर्शयति ।

देव ! त्वमेवेति । हे देव ! लोकत्रयात्मकः पातालादिक्रमेण दर्शयति अलमत्यर्थं पाता पालकः एवं श्लेषात् पाताललोकः तथा आशानामर्थिप्रत्याशानां त्वं निबन्धनमूलं श्लेषादाशानां दिशां निबन्धनं ज्ञापकः भूर्लोक इत्यर्थः । पृथिव्यामेव भ्रमतः सूर्य्यस्योदयेन दिङ्निबन्धनात् स्वर्गपातालयोर्नित्यप्रकाशत्वे न सूर्य्यादियाभावाद्दिङ्निबन्धनाभावात् तथात्वम् । चामरमरुतां चामरीयवायूनां भूमिराश्रयः चामरवीज्यमानत्वात् श्लेषादमराणां मरुद्गणानाञ्च त्वं भूमिराश्रयः स्वर्गलोकश्चेत्यर्थः त्वञ्चेति चकारस्याश्रयश्चेत्येवमन्वयात् ।

इत्यादिः शब्दश्लेषस्य चेति । उपमा सङ्कीर्णस्येति शेषः । चकारादुपमाया अपि श्लेषासङ्कीर्णः कमलमिव मुखं मनोज्ञमित्यादिरेव विषय इति सूचितम् । मनोज्ञत्वादेर्मनोज्ञत्वादिनाऽनुगमेन साधर्म्यात् तथाच पृथक्सिद्धयोः शब्दार्थालङ्कारयोरनयोः इयञ्चेत्यादौ सङ्कीर्णत्वमेवास्तु तथाप्युच्चणमेव श्लेषस्य शब्दान्वयव्यतिरेकानुविधानात् शब्दालङ्कारत्वमित्यभिप्रायेणाह । द्वयोर्योग इति । ननु द्वयोरप्यलङ्कारयो द्वयोर्योगे वक्ष्यमाणः सङ्करालङ्कार एवोत्पद्यते न तत्रैकस्यालङ्कारत्वं तथाच कमलमिव मुखं मनोज्ञमित्यत्र श्लेषासङ्कीर्णपूर्णोपमासत्त्वेऽपि पूर्णोपमायाः श्लेषः सङ्कीर्णविषयाप-

न च, अविन्दुसुन्दरी नित्यं गलल्लावण्यविन्दुकेत्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः, नह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः, द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात्। न च विरोधाभास इव विरोधः, श्लेषाभासः श्लेषः, तदेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरमेव। तथा च,

---

हार एव स्यादित्यत आह उपपत्तीति। पूर्णोपमायाः श्लेषसङ्कीर्णविषयानपहार एवोपपत्तिः अन्यथेति। श्लेषसङ्कीर्णे इयश्चेत्यादौ च सङ्करापत्त्या पूर्णोपमानङ्गीकार इत्यर्थः। विषयापहारः श्लेषसङ्कीर्णविषयस्यापहारः तदसङ्कीर्णस्तु कमलमिव मुखं मनोज्ञमित्यादिरेव विषयीऽस्तीत्यवधेयम्।

न च श्लेषसङ्कीर्णपूर्णोपमास्वीकारे सैवानुपपत्तिः सङ्करालङ्कारस्यैवोपपत्तेरिति वाच्यं श्लेषस्योपमाघटकत्वेनालङ्कारत्वाभावात् सङ्करालङ्कारानुपपत्तेरिति भावः। ननु श्लेषसङ्कीर्णोपमानिर्विषयत्वापत्त्या मास्तु उपमालङ्कारसङ्करस्थले श्लेषोऽलङ्कारः किन्तु श्लेषघटिता पूर्णोपमैवास्तु। श्लेषस्यालङ्कारान्तरसमावेशे तु तदलङ्कारज्ञानज्ञाप्यः श्लेष एवार्थालङ्कारोऽस्तु अलङ्कारान्तरन्तु तद्ग्राहकतयैवोपात्तमस्तु न त्वलङ्कारतयेत्यतस्तदपि खण्डयति न चाविन्दुसुन्दरीति। अस्तु प्रतिविम्बित इन्दुरविन्दुस्तद्वत् सुन्दरी गलन् लावण्यविन्दुर्यस्यास्तादृशी च रोमकूपदृश्यमानस्य दीप्यमानत्वस्य विन्दाकारत्वेन विन्दुत्वाध्यासः अत्राविन्द्वित्यत्र विन्दुशून्यत्वम्।

श्लेषलभ्योऽर्थः तमादाय विरोधः स च श्लेषज्ञानज्ञेय एव न तु विरोधज्ञानज्ञेयः स्याद्यदि ज्ञेयः श्लिष्टशब्दार्थः शब्दानुभवविषयः स्यात् तस्याविन्दभाववाधात्तु तदनुभव एव नेत्यर्थः। प्ररोहोऽनुभवः नन्वेवं कथमत्र श्लेषज्ञानज्ञाप्योऽपि विरोधस्तस्यानुभवाभावादित्याभासरूपविरोधस्त्वयोच्यते तद्वत् मयापि आभासरूपः श्लेषोऽलङ्कारो वाच्यः स एव विरोधाभासज्ञानज्ञाप्यः स त्वर्थालङ्कारः स्यादित्यत आह न च विरोधाभास इवेति। आभासरूपस्य विरोधस्य विचित्रत्वानुभावात् सर्वैरेव विरोधाभासोऽलङ्कारतयाऽभ्युपगम्यते तद्वैचित्र्यनिर्वाहकतयैव श्लेष उपादीयते तादृशश्लेषस्तु आभासरूपो न केनचिदलङ्कारतयाऽभ्युपगम्यते अतो वैचित्र्यत्वाभावादित्यर्थः। एवञ्च श्लेषस्य विरोधज्ञानज्ञाप्यत्वे खण्डिते अलङ्कारान्तरसङ्कीर्णस्थलेऽपि तदलङ्कार-

सद्वंशमुक्तामणिः। [१]
नाल्पः कविरिव स्वल्पश्लोको देव! महान् भवान्। [२]
अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथापि न समागमः॥ [३]
आदाय चापमचलं, कृत्वाऽहीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै॥ [४]

---

घटकतयैव श्लेषत्वाभास उपादीयते अलङ्कारान्तरमेवालङ्कारी न श्लेष इत्यत आह तस्मादेवमादिष्विति। अत्र चालङ्कारमित्यस्य विशेषणतया श्लेषप्रतिभोत्पत्तिहेतुरिति यदुक्तं यद्व यथोक्तं बहुव्रीहिणा अनुपपन्नं पुंलिङ्गानुपपत्तेः तत्पुरुषे तु श्लेषज्ञानज्ञाप्यत्वरूपोऽर्थो न घटते अतोऽत्र हेत्विति पाठमेव कल्पयति चक्रवर्त्ती। तादृशपाठस्तु न क्वापि पुस्तके दृश्यते इत्यतोऽत्र हेतुपदको हेतुः कारणं किं वेत्यत्रैव कार्य्यपरमेव तथा अलङ्कारान्तरपदमपि अलङ्कारान्तरज्ञानपरं तथा चालङ्कारान्तरज्ञानं श्लेषप्रतिभोत्पत्तिजन्यमित्यर्थः तथाच तत्पुरुषेणापि विवचितार्थसिद्धिः तथात्वञ्च परम्परितरूपकालङ्कारेऽपि दर्शयति।

सद्वंशेति। सद्वंशः सत्कुलमेव सद्वेणुः तत्र मुक्तामणेः वंशेऽपि मुक्तोत्पत्तेः अत्र परम्परितरूपकम् एकदेशविवर्त्तीति परीक्षनाम्ना ख्यातं परम्परितरूपकमेवोक्तं नाल्पः कविरिति श्लोकः।

पद्यं यशश्च अन्यकवेः स्वल्पश्लोकः पद्यं तव तु न स्वल्पं यश इत्यर्थः।

अत्र श्लेषव्यतिरेकः। अनुरागेति। सन्ध्येयं सा दिवसस्य अनु पश्चाद्रागवती रक्तिमवती दिवसस्तु तस्याः पुरःसरः पूर्ववर्त्ती श्लेषादनुरक्तनायिकाग्रेसरनायकलाभः तथाप्यसमागमे विस्मयादाह।

अहो इति। अत्र श्लेषसमासोक्तिः।

आदायेति। तस्मै विषमदृष्टये हराय नमः यो विषमदृष्टिः अचलं हिमालयं चापमादाय अहीनं सर्पराजं वासुकिं गुणं कृत्वा अच्युतो विष्णुः शरो यस्य तादृशः सन् लक्ष्यं त्रिपुररूपं शरव्यमभाङ्क्षीत् बभञ्ज इति चित्रं पुराणसिद्धोऽयमर्थः। अत्र च श्लेषात् चलनहीनं चापमादाय गुणञ्च हीनं छिन्नं कृत्वा विषमदृष्टिरस्खलितशरो लक्षसङ्ख्यमभाङ्क्षीदिति श्लेषविरोधः।

इत्यादावेकदेशविवर्त्तिरूपक-श्लेषव्यतिरेक-समासोक्ति-विरोधत्वमुचितम् न तु श्लेषत्वम् ।

शब्दश्लेषः इति चोच्यते, अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः । किञ्च वैचित्र्यमलङ्कार इति, य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रता, इति सैवालङ्कारभूमिः । अर्थमुखप्रेक्षितत्वमेतेषां शब्दानामिति चेत् अनुप्रासादीनामपि तथैवेति तेऽप्यर्थालङ्काराः किं नोच्यन्ते ? रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलङ्कारता । शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता । अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम् ।

विधौ वक्त्रे मूर्ध्नीत्यादौ च वर्णादिश्लेषे एकप्रयत्नोच्चार्य्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्य्यम् ।

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥८॥**

---

इत्यादाविति । उक्तोदाहरणेषु यथासंख्यमिदमलङ्कारचतुष्टयं एकदेशविवर्त्तिरूपकं परम्परितरूपकं श्लेषेति व्यतिरेकादित्रयान्वितं तथाच श्लेषव्यतिरेकः श्लेषसमासोक्तिः श्लेषविरोधत्वञ्चेति ज्ञेयं नयो मतं ननूपाधिभेदादुभयमुच्यते इत्यत आह प्रतिभासंरम्भः प्रतिभापर्य्याप्तिः । अलङ्कारभूमिरलङ्कारत्वज्ञानस्य विषयः अतोऽत्र किञ्चेति । श्लेषघटिते सर्वत्रैवार्थालङ्कार एव विचित्रतेति स एवालङ्कार इति भावः । ननु अनुप्रासस्यार्थापेक्षेव नास्तीत्यत आह रसादीति । वृत्त्यनुप्रासस्य रसनिष्ठगुणरूपार्थव्यञ्जकत्वं लाटानुप्रासस्य तु वाच्यार्थबोधकत्वादित्यर्थापेक्षः एवञ्चार्थापेक्षा विचार्य्यत्व गुणदोषादावप्येवमेव व्यवस्था स्यादित्याह शब्दगुणदोषेति । एकप्रयत्नोच्चार्य्यत्वेऽर्थश्लेषत्वं यदुक्तं तदपि वर्णश्लेषेऽतिव्याप्तमित्याह ।

चित्राविति । अलङ्कारसामान्यस्यैव चित्रत्वेऽपि चित्रसंज्ञकमलङ्कारविशेषमाह तच्चित्रमिति खड्गाद्याकृतीति खड्गाकारादीत्यर्थः । तेन वास्याप्यनाकारे सर्वतोभद्रादौ नाव्याप्तिः । तत्र खड्गबन्धमाह ।

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति, तच्चित्रं काव्यम्। कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्,

मारारिशक्ररामेभमुखैरासाररंहसा।
साराब्धस्तवा, नित्यं तदार्त्तिहरणक्षमा॥
माता नतानां, सङ्घट्टः श्रियां बाधितसम्भ्रमा।
मान्याथ, सीमा रामाणां, शं मे दिश्यादुमादिमा॥

(खड्गबन्धः)

---

मारारीति। श्लोकद्वयेनाचान्वयो बन्धश्च अद्रिजा इति पाठभेदादद्रिजा वा तादृशी उमा मे मम शं कल्याणं दिश्यात् आदिशतु कीदृशः मारारिः कामारिः महेशः शक्र इन्द्रः रामा दाशरथ्यादिरामत्रयं इभमुखो गणेशस्तैरासाररंहसा कथत-ष्टिरित्यासारं यथा स्यात्तथा नित्यमारब्धस्तवा यतस्तेषामार्त्तिहरणक्षमा या आर्त्तिः पीड़ा नतानामाश्रितानां माता श्रियां शोभानां सङ्घट्टी यन्त्रणस्थानं शोभाबाड्ल्यात् बाधितः सम्भ्रमो भयं यया तादृशी मान्या अथ समुच्चये रामाणां स्त्रीणां सीमा आधिक्यकाष्ठा-पन्ना। अत्र मुष्टेरुपर्य्यधः शाखाद्वयवान् खड्गो लेख्यः तत्रोपरि शाखाचतुष्पथ-मध्ये प्राथमिकमाकारो लेख्यः खड्गवामे च रारीत्यादय उपर्य्युपरिक्रमेण चतुर्दश-वर्णाः खड्गोपरि साकारस्तदन्तिमः ततस्तमेव साकारमारभ्य खड्गदक्षिणे राब्धे-त्यादयश्चतुर्दशवर्णाः चान्ता लेख्याः। चतुष्पथमध्यगो माकारस्तदन्तिमः ततस्तमेव माकारमारभ्य खड्गदक्षिणशाखायां तेत्यादयः सप्तवर्णाः खड्गवामशाखायाञ्च श्रियामित्यादयः सप्तवर्णाश्चतुष्पथमध्यगो माकारस्तदन्तिमः ततस्तमेव माकारमारभ्य अधोऽधःक्रमेण न्यायसो इति त्रयो वर्णा मुष्टौ लेख्याः। अधश्चतुष्पथमध्ये च माकार-स्तदन्तिमः ततस्तमेव माकारमारभ्य खड्गदक्षिणशाखायां रामाणां शमिति चत्वारो वर्णाः वामशाखायाञ्च मे दिश्यादु इति चत्वारो वर्णाः चतुष्पथमध्यगो माकारस्तद-न्तिमः ततो मुष्टेरधःस्तके दिमा इति द्वौ वर्णौ। एष खड्गबन्धः।

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरलाबहुलामला ॥

(मुरजबन्धः)

---



मुरजबन्धमाह शरलेति। अत्र प्रबन्धगम्या शरत् विशेष्या। शरत् कीदृशी सरला सरकाण्डोद्गमवती ला आदाने तथा बहुलारम्भाणां तरलानामलिबलानामारवो यस्यां तादृशी वारला हंसस्त्री बहुला यस्यां एतादृशी अमन्दाः परचक्राक्रमणे सोद्योगाः करं राजग्राह्यभागं गृह्णन्तीति करला राजानो यस्यां तादृशी बहुले कृष्णपक्षेऽप्यमला। अत्र पादचतुष्टयं पङ्क्तिचतुष्टयेन लिख्य' षट्मुरजास्तत्रोत्पन्ना द्रष्टव्याः। अत्र मुरजषट्कोत्पत्तिर्दर्शितरेखया बोध्या।



भासते प्रतिभासार ! रसाभाता हताविभा।
भावितात्मा, शुभा वादे, देवाभा बत ते सभा॥

(पद्मबन्धः)

---

पद्मबन्धमाह भासत इति। हे प्रतिभासार ! बत हर्षे तव सभा भासते दीप्यते। कीदृशी देवाभा देवतुल्यदीप्तिः रसाभाता रसैराभाता दीप्ता हताविभा अविभा विभाविरहः हतत्का विभावतीत्यर्थः। भावितात्मा प्रवर्त्तितबुद्धिः आत्मा यत्नो धृतिबुद्धिरिति कोषः। वादे उद्ग्राहे शुभा। अत्राष्टदिक्षु वितताष्टदलं पद्मं लेख्यं तत्र कर्णिकायामाद्यो भाकारो लेख्यः ततो दले निर्गमप्रवेशरीत्या द्वौ द्वौ वर्णौ लेख्यौ किन्तु दिग्दलेषु निर्गमः प्रवेशश्च तत्र च प्राच्यदले आदौ निर्गमः श्लोकान्तप्रवेशः दक्षिणोत्तरदलयोः निर्गत्यैव प्रवेशः पश्चिमदले तु प्रविश्यैव निर्गमः आग्नेयवायव्यदलयोः प्रवेश एव नैर्ऋतैशानयोस्तु निर्गम एव अस्य संस्थानं लिखित्वैव दर्श्यते यथा।



रसासार ! रसा सारसायताक्ष ! क्षतायसा ।
सातावात ! तवातासा रक्षतस्त्वस्त्वतक्षर ! ॥

(सर्वतोभद्रम्)

सम्भविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते ॥

**पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।**
**एकार्थतेव,**

---

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | सा | सा | र | र | सा | सा | र |
| सा | य | ता | क्ष | क्ष | ता | य | सा |
| सा | ता | वा | त | त | वा | ता | सा |
| र | क्ष | त | स्त्व | स्त्व | त | क्ष | र |

सर्वतोभद्रबन्धमाह रसासारेति । हे रसासार ! भूमौ मुख्य ! हे सारसायताक्ष ! पद्मदीर्घलोचन ! हे सातावात ! साते सुखे अवात ! वातवदचञ्चल ! हे अलोलुपेति यावत् अतक्षर ! अनल्पद ! तक्षत्वचतनूकरणे रात्वा दाने इत्यनयोरूपं तव तु रसा पृथ्वी अतासाऽनुतप्ता अस्तु तुशब्दो राजान्तरव्यवच्छेदे । सारसं सरसीरुहमिति शर्मसातसुखानि चेति कोषौ । तसुदसु उपतापे इति धातुः । रसा कीदृशी क्षतायसा क्षत आय उपचयो येन स क्षतायस्तं स्यति अन्तं प्रापयति तादृशी षोऽन्त कर्मणि इति धातुः । तव कीदृशस्य रक्षतः पालयतः । अत्र पङ्क्तिचतुष्टयेन लिखनम् अनुलोमविलोमाभ्यामुपर्य्यधो वर्णक्रमेण अध उपरि क्रमेण च पाठः । पुनरुक्तवदाभासालङ्कारमाह ।

पुनरुक्तेति । विभिन्नाकारशब्दगामिनी एकार्थतेवेत्यर्थः । स च शब्दस्यालङ्कार इत्यर्थः । मुखे आपाततः शब्दस्य इति व्याचष्टे स च शब्दस्येति अरिवधेति । अवनितलतिलको भवान् सदाऽनल्पा परनमनराहित्येन भातितरां स कीदृशः अरघिसूततुरगपादातः रथ्यादिरहितोऽपि सन् सहसाऽरिवधदा ईहा यस्य तादृशशरीरः स्वमिव सहसाऽविघातकत्वात् तथा स्थिरतरायामगः पर्वतः । तत्र देहशरीरसूतसारथिदानत्यागपदानि पुनरुक्तप्रायाणि ।

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं पुनरुक्तवदाभासः । स च,

शब्दस्य,

सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः । उदाहरणम्,

अरिवधदेहशरीरः, सहसा रथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥
चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः ॥

तथा शब्दार्थयोरयम् ॥ ९ ॥

उदाहरणम्,

तनुवपुरन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः ॥

---

सभङ्गाभङ्गशब्दयोः दर्शयित्वाऽभङ्गशब्देऽपि दर्शयति ।

चकासतीति । तस्य राज्ञः पार्श्ववर्त्तिनो विबुधाः पण्डिताश्चकासति दीप्यन्ते । कीदृशाः अङ्गने आरमन्ति तादृशाः सुखित्वादप्रवासिन इत्यर्थः । कौतुकस्य प्रहेलिकाद्यूतादेरानन्दस्य च हेतवः सुमनसः शोभनचित्ताः । अत्राङ्गनारामा-कौतुकानन्दसुमनोविबुधपदानि पुनरुक्तप्रायाणि । शब्दमात्रगतमेनमुक्त्वा शब्दतदर्थ-गतमप्येनमाह ।

तथा शब्दार्थयोरिति ।

तनुवपुरिति । असौ हरिः सिंहः तनुवपुरल्पशरीरोऽपि तेजोधाम तेज-सामाश्रयः । कीदृशः महःपृथुमनसां तेजःप्रफुल्लचित्तानां अग्री विलक्षण इन्द्रः प्रभुः जिष्णु र्जयशीलः करिकुञ्जराणां हस्तिश्रेष्ठानां रुधिरेण रक्तः शोणः खरः प्रचण्डो नखरो यस्य तादृशः ।

अत्रैकस्मिन् पदे परिवर्त्तिते नालङ्कार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्त्तितेऽपि स न हीयते इत्यर्थनिष्ठ इत्युभयालङ्कारोऽयम् ।

इति काव्यप्रकाशे शब्दालङ्कारनिर्णयो नाम नवमः उल्लासः ॥

---

## दशमः उल्लासः ।

अर्थालङ्कारानाह,

**साधर्म्यमुपमा भेदे,**

उपमानोपमेययोरेव न कार्य्यकारणादिकयोः साधर्म्यं भवतीति तयोरेव समानधर्मेण सम्बन्ध उपमा । भेदग्रहणमनन्वयव्यवच्छेदाय ।

---

अत्रैकस्मिन्निति । तनुकुञ्जरक्तधामहरिजिष्णुपदानि परिवृत्त्यसहानि वपुरादिपदानि तु परिवृत्तिसहानि यद्यपि अरि वध देहेत्यादावपि शरीरादिपदानि परिवृत्तिसहानीत्यविशेषस्तथापि दानत्यागपदयोरेकस्यापि परिवृत्त्यसहत्वात्तदंश एव शब्दमात्रालङ्कारोदाहरणं तदिति मन्तव्यम् ।

इति नवमः शब्दालङ्कारप्रतिबिम्बः ।

---

उपमालङ्कारमाह ।

साधर्म्यमिति । भेद इति । उपमानोपमेययोर्भेदसत्त्वे इत्यर्थः ।

उपमानोपमेयलाभश्च साधर्म्यपदार्थबलादिति व्याचष्टे ।

उपमानोपमेययोरेवेति । न कार्य्यकारणयोरिति उपमानोपमेयत्वेनाविवक्षितयोरिति शेषः । उपमानोपमेयत्वेन विवक्षितयोस्तु कार्य्यकारणयोरपि भवत्येवोपमा यथा पुत्रं सभ्यकालगुणानुरूपं भवन्तमीड्यो भवतः पितेव यथा वा भक्तितिरिव मातरित्यत्र वक्ष्यमाणे साधर्म्यपदार्थमाह तयोरेव समानेति । षष्ठ्यर्थः

पूर्णा लुप्ता च,

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा, एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता।

साऽग्रिमा।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥१॥

अग्रिमा पूर्णा।

यथेवादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते, तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रतिपादयन्तो तत्सद्भावे श्रौती उपमा।

---

चन्द्र इव मुखमित्यादौ चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमित्येव हि प्रतीतिस्तच्च चन्द्र प्रतियोगिकसादृश्यस्य इवशब्दार्थत्वेऽपि चन्द्रनिष्ठं यत् सादृश्यप्रतियोगित्वं सैवोपमा लाघवात् न तु सादृश्यांशोऽपीत्यभिप्रायेण सम्बन्धपर्य्यन्तानुधावनं एतच्चाये उपमायाः श्रौतार्थत्वविभागेन व्यक्तीभविष्यति।

न च सादृश्यमेव इवशब्दार्थः प्रतियोगितांशः सम्बन्धमर्य्यादयैव लभ्य इति वाच्यम्। अव्ययानामन्विताभिधायित्ववादिनामेषां मत चन्द्रप्रतियोगित्वविशिष्ट-सादृश्यस्यैव इवादिशब्दवाच्यत्वात्। एतच्चाग्रे व्यक्तीभविष्यति तथा च समानेन धर्मेण तयोरेव सम्बन्ध इति नान्वयः किन्तु तयोरेव समानेन धर्मेण उपमाननिष्ठसादृश्यप्रतियोगितार्थः सम्बन्ध उपमा इत्येवार्थः। अनन्वयेति। नितम्बिनीव इत्यादावुपमानोपमेययोरभेदेऽनन्वयनामालङ्कारो वक्ष्यते तद्व्यावर्त्तनायेत्यर्थः। अस्या द्वैविध्यमाह पूर्णा लुप्ता चेति लोप इति। अनुपादान इत्यर्थः। साऽग्रिमेति सूत्रैकदेशपूर्णालुप्तयोरग्रिमोक्ता पूर्णा इत्यर्थः। पूर्णेव द्विविधेत्याह श्रौत्यार्थीति। श्रौती शब्दवाच्या आर्थी तु शब्दवाच्यत्वेऽपि अर्थवशलभ्या द्विविधैव सा वाक्यसमासतद्धितगामित्वभेदात् षड्विधेत्याह भवेद्वाक्य इत्यादि। तत्र श्रौतीं ग्राहयति।

यथेवेत्यादि। यथेववादीत्येव पाठः। आदिशब्दाद्वशब्दपरिग्रहः क्वचित्तु यथेववाशब्दा इत्येव पाठस्तिष्ठति स च न रुचिरः तदा वाशब्दापरिग्रहापत्तेः एते

तथैव "तत्र तस्यैव" [५।१।११६ पा० सू०] इत्यनेनेवार्थे विहितस्य वतेरुपादाने ।

---

इवादयोऽव्ययशब्दा यत्परा यत्परभावेनैव स्वार्थान्वयानुभावका इत्यर्थः न तु यत्परा इति नियमः यथा शब्दे तथा नियमाभावात् यथा चन्द्रस्तथा सुखमित्येवमपि प्रयोगात् । अन्वयस्य तु चन्द्रप्रतियोगिकसादृश्याश्रयत्वरूपस्य चन्द्रपरभावेनैव बोधकाः उपमाने चन्द्रे या सादृश्यप्रतियोगिता सैवोपमानता उपमा चेति तयोरभेदादुपमानताप्रतीतिरित्यस्योपमाप्रतीतिरित्येवार्थः । अन्यथा उपमायाः श्रौतत्वसाधने उपमानताप्रतीतिकथनानुपयोगात् प्रतीतिरितीत्यस्य तत्सद्भावे श्रौतीत्यत्रेऽन्वयः ।

ननु तस्यैवोपमानताप्रतीतिरित्युक्त्याऽन्यस्योपमानता न प्रतीयत इत्येवार्थो लभ्यते तच्च कथमुपमायाः श्रौतत्वसाधकं तुल्यादिपदोपादाने यत्रार्थत्वमुपमाया वक्ष्यते तत्राप्यन्यस्योपमाप्रतीत्यभावेनाविशेषादिति चेन्न तस्योपमाप्रतीतिरेवेत्येवमेवकारयोजनया उपमाप्रतीत्ययोगव्यवच्छेदलाभात् तुल्यादिपदोपादाने च उपमाप्रतीत्ययोगोऽप्यग्रे दर्शयिष्यते । तथा च यच्छब्दोपादानेऽर्थान्वयबाधोपस्थितिं विना यत्प्रतीत्यवश्यम्भावरूपो यत्प्रतीत्ययोगव्यवच्छेदः सोऽर्थस्तद्वाच्य एवेति व्याप्तिप्रदर्शनमनेन कृत्वा उपमायाः शब्दवाच्यत्वं बाधितम् । अर्थान्तरबाधोपस्थित्या लक्ष्यार्थप्रतीत्ययोगव्यवच्छेदे सत्यपि तु लक्ष्यार्थो न वाच्यः । अत्र चन्द्र इव मुखमित्यत्र चन्द्रनिष्ठायाः सादृश्यप्रतियोगितारूपाया उपमाया इवादिशब्दवाच्यत्वं साधयितुं वाक्यमध्य एवानुपपत्तिमुद्भाव्य समाधातुमाह यद्यपीति । एते इवादयो यद्यप्युपमानविशेषणानि उपमानान्वितार्थका इत्यर्थः । यथाद्युक्तेत्विवाद्यर्थस्य सादृश्यस्योपमानचन्द्रादिप्रतियोगिकत्वादुपमानविशेष्यत्वेन तदीयविशेषणत्वासम्भवात् उपमानं विशेषणं येषामिति बहुव्रीहौ तूपमानविशेषणा एते इत्येवं निर्देशस्यैवापत्तेः । तथा च विशेषणविशेष्ययोश्चन्द्रसादृश्ययो र्नामार्थयोर्भेदे नान्वयो बोद्धुमेव न शक्यते चन्द्र इवेत्यत्र प्रथमासत्त्वेऽपि प्रकारीभूतविभक्त्यर्थानुपस्थितेः भेदेन नामार्थयोरन्वयबोधे च प्रकारीभूतविभक्त्यर्थोपस्थितेरावश्यकत्वादिति यद्यपीत्याशङ्कार्थः । समाधत्ते तथापीति। चन्द्रस्य सादृश्यमित्यत्र षष्ठीविभक्त्यर्थो या प्रतियोगिता सा चन्द्र इवेत्यत्र इवाद्यव्ययशब्दे नोच्यत इत्यतः प्रकारीभूतविभक्त्यर्थबोधक इवादिशब्दादिरस्त्येवेति शब्दशक्तीत्यादेरर्थः । शब्दस्य इवाद्यव्ययशब्दस्य शक्तिरभिधाख्या शक्तिस्तन्महिम्ना श्रुत्यैव श्रवणमात्रेणैव चन्द्रस्य सादृश्यमित्यत्र षष्ठीवत्सादृश्यप्रतियोगिताख्यं सम्बन्धमिवादयः

तेन तुल्यम् मुखमित्यादावुपमेय इव, तत्तुल्यमस्येत्यादौ चोपमान एव, इदञ्च तच्च तुल्यमित्युभयत्रापि तुल्यादिशब्दा-

---

प्रतिपादयन्तीत्यतस्तत्सद्भावे श्रौतीत्यर्थः तैस्तत्प्रतिपादने च तत्सद्भावे प्रतीत्ययोगव्यवच्छेदो हेतुर्दर्शितः। एवमेव घटो नेत्यादावपि घटप्रतियोगिकाभाव एव नञर्थ इत्यन्विताभिधानसिद्धान्तः। नैयायिकास्तु निपातितातिरिक्तनामार्थयो र्भेदान्वयबोध एव प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वमतोऽत्र तदुपस्थितिं विनाप्यन्वयबोध इत्याहुः। मीमांसकमतानुयायिन आलङ्कारिकास्तु तदुपेक्षन्ते न च किमत्र तदुपेक्षाबीजमिति वाच्यम्। निपाताव्ययातिरिक्तविशेषणदानगौरवमेव। अन्यच्च यदि सादृश्यं प्रतियोगिताऽभावप्रतियोगि तेन इवादिनञौ वाच्ये स्यातां तदा चन्द्रस्य सादृश्यं चन्द्रस्य साम्यं चन्द्रस्य सदृशश्चन्द्रस्य सम इत्यादय इव चन्द्रस्येव मुखमित्यादयोऽपि प्रयोगाः स्युः एवं घटस्याभाव इत्यादय इव घटस्य न इत्यादयोऽपि प्रयोगाः स्युः। इवादिनञादीनां सादृश्यमात्रमभावमात्रं प्रति च वाचकत्वे सादृश्यादिपदैरभावादिपदैश्च समानार्थत्वेन ततः षष्ठ्यर्थालाभेन सादृश्यादिपदयोग इव इवादिपदयोगेऽपि षष्ठीप्रसक्तेः। इवादेः षष्ठ्यर्थवाचकत्वे तु युक्त एव तत्र षष्ठ्यप्रयोगः। अव्ययशब्दानां व्युत्पत्तिवैलक्षण्यात्तद्योगे षष्ठी न भवतीति चेदेवं व्युत्पत्त्यन्तरकल्पने गौरवमिति रहस्यम्। एवञ्चाव्ययपदानामेवान्विताभिधायित्वं नानव्ययतुल्यादिपदानामिति स्थिते वाच्य एव वाक्यार्थ इति त्वन्विताभिधानवादिन इति यत् प्रागुक्तं तन्मीमांसकैकदेशिनामेव मतमिति बोध्यम्। इवार्थकस्य वतेरुपादानेऽपि उपमा श्रौतीत्याह तथैवेति तत्र तस्येवेति पाणिनिसूत्रं तत्रेव तस्येव धर्म इति तदर्थः सप्तम्यन्तात् षष्ठ्यन्ताद्वा विहितस्य वतेरुपादाने तद्वत् इवाद्युपादानवदित्यर्थः तथाच तदुपादानेऽपि श्रौतीत्यर्थः तुल्याद्यनव्ययपदानान्तु न वाच्या उपमा तत्सद्भावे सादृश्यप्रतियोगितारूपाया उपमायाः प्रतीत्ययोगस्यापि सत्त्वादिति दर्शयति।

तेन तुल्यमितीति। उपमेय एव तुल्यादिपदानां विश्रान्तिरित्यग्रिमेऽन्वयः। एवमपरद्वयेऽपि बोद्धव्यम्। विश्रान्ति र्विशेष्यतया प्रतीतिः। विशेष्यता चोपमेयस्यैव भवतीत्यतोऽपरत्रोपमानता प्रतीतिरिति भङ्ग्या उक्तम्। तथाच तुल्यादिपदोपादाने उपमेयताप्रतीतेरव्यवस्थितत्वमुखेनोपमानताप्रतीतेरव्यवस्थितत्वमेव दर्शितम्। यद्यप्यत्र उपमेय एव उपमेयता उपमान एव च उपमानतैव प्रतीयते तथापि अव्यव-

नां विश्रान्तिरिति साम्यपर्य्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी, तद्वत्, "तेन तुल्यम् क्रिया चेत् वतिः" [५।१।११५ पा० सू०] इत्यनेन विहितस्य वतेः स्थितौ।

'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति नित्यसमासे इवशब्दयोगे समासगा। क्रमेणोदाहरणम्,

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा॥ [वा० श्लो०]

---

स्थितत्वप्रदर्शनार्थमिदं दर्शितम्। तत्तुल्यमस्येतीति तच्चन्द्रबिम्बं पद्मं वाऽस्य मुखस्य तुल्यमित्यर्थः। नचेदृशप्रयोगे चन्द्रबिम्बमुपमेयमेव तत्कथमुपमाने उपमेयताप्रतीतिरित्युक्तमिति वाच्यम्। प्रसिद्ध्या यत्र तत्रैव उपमानतायां तात्पर्य्यं तत्राप्येवं प्रयोग इति भावात्। इदञ्चेति इदं हसस्थं पद्मं तच्च स्मर्य्यमाणं तस्या मुखमित्यर्थः। एवञ्चोपमेयतायाः प्रतीत्यव्यवस्थाप्रदर्शनेनैव उपमानतायाः क्वचिदुपमाने क्वचिदुपमेये क्वचित्तु न क्वापि प्रतीतिरिति दर्शयता तुल्यादिपदोपादाने उपमाप्रतीत्ययोगोऽपि दर्शितः। इत्युपमा तात्पर्य्यालोचनगम्यैव न वाच्या इत्याह साम्यपर्य्यालोचनयेति साम्यं समानेन धर्मेण सम्बन्धः सादृश्यप्रतियोगितारूपा उपमा तस्याः पर्य्यालोचनयैव तदनुयोगिन्यास्तुल्यतायाः प्रतीतिरित्यतः साधर्म्यस्य समानेन धर्मेण सह सम्बन्धरूपाया उपमाया आर्थत्वादित्यर्थः। एवं तुल्यार्थकवत्युपादानेऽपि आर्थीत्याह तद्वदिति तेन तुल्यमिति पाणिनिसूत्रम्। तेन विहितस्य वतेः स्थितौ उपादानेऽपि तद्वत्तुल्यादिपदोपादानवदार्थीत्यर्थः। अव्ययेन सह समासाभावात् श्रौत्याः समासगामित्वं दर्शयति इवेनेति इदं पाणिनिसूत्रं पूर्वपदेति असमासकाले य उदात्तादिस्वरः स समासकालेऽपि तादृशस्वरत्वञ्चेत्यर्थः। क्रमेणेति श्रौत्यार्थ्योर्वाक्यादिविषयगामित्वक्रमेणेत्यर्थः।

स्वप्नेऽपीति। स्वप्नो निद्रा निद्रितापि जयश्रीस्त्वामालिङ्गति पश्यतीत्यर्थः। चक्रवर्त्ती तु स्वप्नो निद्रादशायां विषयानुभवः स च राज्ञ एव स्वप्नदशायामपि राजा स्वविजयश्रियं पश्यतीत्यर्थ इत्याह तन्न निकृष्टस्यापि तादृशस्वप्नदर्शनसम्भवात्।

चकितहरिणलोललोचनायाः
क्रुधि तरुणारुणतारहारकान्ति ।
सरसिजमिदमाननञ्च तस्याः
सममिति चेतसि सम्मदं विधत्ते ॥ [वा॰ आ॰]
अत्यायतैर्नियमकारिभिरुद्धतानाम्,
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ [स॰ श्री॰]

---

तावता गात्र उत्कर्षाभावात् । स्वाधीनेति स्वाधीनत्वेन पत्युरप्रवासित्वं दर्शितम् । तेन सा यथा निद्रितापि कान्तं न मुञ्चतीत्यर्थः प्रभावः पौरुषं तस्य प्रभवं जनकं राजानं कान्तन्तु प्रकृष्टस्यानुरागस्य प्रभवम् । अत्र यथा शब्देन सह समासाभावाद्वाक्यगा श्रौती उपमेयादिचतुष्टयोपादानात् पूर्णा विजयश्रीस्वाधीनपतिकयोरुपमेयोपमानयोरमोचनं साधर्म्यं राजकान्तयोरुपमेयोपमानयोः प्रभावप्रभवत्वम् । वाक्यगामार्थीं पूर्णामाह ।

चकितेति । क्रुधि क्रोधे तस्या आननम् इदं हस्तस्थरक्तसरसिजञ्च सममिति अर्थात् मम चेतसि सम्मदं विधत्ते मुखपद्मयोर्द्वयोरपि विशेषणमाह तरुणेति तरुणस्यारुणस्य सूर्यसारथेरिव तारा उज्ज्वलाहारिणी कान्तिर्यस्य मुखं तादृशं सरसिजन्तु तरुणसूर्य्येण तादृशकान्तिकम् अत्र समशब्दाद्वाक्यगा आर्थी पूर्णा । समासे वाक्यगां श्रौतीं पूर्णामाह ।

अत्यायतैरिति । यो राजा चतुर्भिः सामदानविधिभेदरूपैरुपायैरदो भुवनं सदा बभार पालयामास । शौरिर्विष्णुश्चतुर्भिर्भुजैरिव उपायभुजयोर्विशेषणान्याह अत्यायतैरित्यादि उपायानां सततानुष्ठानसेवायतत्वं भुजानामाजानुलम्बितत्वम् उद्धतानामुद्दृत्तानां जनानाम् असुराणाञ्च नियमः शान्तिः उपायानामनुष्ठानप्रकर्ष एव प्रभा भुजानान्तु कान्तिस्ताभिर्दिव्यैरुत्कृष्टैः चित्रैः प्रभाभिरिति क्वचित्पाठः अनपायो विघ्नाभावः। तन्मयैस्तद्विशिष्टैः लक्ष्मीः सम्पत् करस्था लक्ष्मीः च तया विलासस्तस्या विलासश्च तस्य भवनैरुत्पादकैः । अत्र इवेन नित्यसमासात् समासगा श्रौती पूर्णा । समासगामार्थीं पूर्णामाह ।

अवितथमनोरथपथप्रथनेषु
प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवान्
अभिलषणीयः क्षितीश्वरो न कस्य ॥ [स० आ०]

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् । [त० श्रौ०]
दुरालोकः स समरे निदाघाम्बररत्नवत् [त० आ०]

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा, जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तवैचित्र्यं, वैचित्र्यश्चालङ्कारः, तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः, न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः, अपि तु वाच्यवैचित्र्यप्रतिभासादेव । रसादिस्तु व्यङ्ग्योऽर्थोऽलङ्कारान्तरञ्च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलङ्कारा उदाहृताः । तद्रहितत्वेन तु उदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम् ॥

---

अवितथेति । स प्रसिद्धः क्षितीश्वरो भवान् कस्यार्थिनो न अभिलषणीयः कीदृशः अवितथस्य मनोरथस्य यत्पथं विषयस्तत्प्रथनेषु तज्ज्ञानेषु सत्सु प्रकृष्टेन गुण-गरिम्णाऽर्थिभिरेव गीतश्रीः सुरतरुः कल्पतरुस्तत्समस्तस्याप्येतादृशविशेषणकत्वात् । अत्र समासस्थसदृशपदात् समासगा आर्थी पूर्णा तद्धिते श्रौतीमार्थीञ्च पूर्णामाह ।

गाम्भीर्येति । गङ्गाया भुजङ्गस्य कामुकस्य समुद्रस्येव सत्यं यस्य गाम्भीर्यगरिमा स राजा समरे दुरालोको निदाघीयेन अम्बररत्नेन सूर्येण तुल्यः । अत्र पूर्वार्द्धे षष्ठ्यन्तादिवार्थे वतिवति तद्धिते श्रौती गाम्भीर्यगरिमा साधारणधर्म इति पूर्णा परार्द्धे तु तुल्यार्थे वतिवति तद्धिते आर्थी पूर्णा । सालङ्कारस्य चित्रत्वाच्चित्रलक्षणे चाव्यङ्गत्वस्योक्तत्वादत्र व्यङ्ग्यसत्त्वेन कथमिदं चित्रमित्याशङ्कते ।

स्वाधीनेति प्रतीयमानेनेति । तादृशव्यङ्ग्येन विनेत्यर्थः । न हि शीलजातिनामिवेत्यर्थो वैचित्र्यविशेषानुभव इति भावः । वैचित्र्यञ्चालङ्कार इति तथाच

तद्वत् धर्मस्य लोपे स्यात्,
न श्रौती तद्धिते पुनः।

धर्मः साधारणः तद्धिते कल्पबादौ चार्थ्येव। तेन पञ्च।
उदाहरणम्,

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः।
करणीयं बचश्चेतः! सत्यं तस्यामृतं यथा॥ [वा० श्रौ०]

---

तादृशश्चैचित्र्यरूपालङ्कारध्वनिरेवायमित्याशङ्कार्थः समाधत्ते तथापीति। येन चारुताऽनुभूयते तेनैव व्यवहार इत्यत्रावाच्योपमालङ्कारवशादेव चारुताप्रतीत्या तादृशव्यवहार इत्यर्थः। नन्वत्र शृङ्गारानुभवादपि चारुता प्रतीयत इत्यादिरसध्वनिरेव किमयं न स्यादित्यत आह रसादीति तदपेक्षयाऽप्यत्र वाच्योपमयैव चारुताधिक्यप्रतीतिरिति भावः। इत्यगणयित्वैवेति व्यङ्ग्यसत्त्वमगणयित्वैवेत्यर्थः। व्यङ्ग्यसत्त्वमात्रं न ध्वनित्वप्रयोजकं किन्तु चारुताप्रयोजकपुरस्फूर्त्तिकत्वमेव तत्प्रयोजकमिति भावः। तदलङ्काराः काव्यालङ्काराः पूर्वापरेति पूर्वमव्यङ्ग्यमित्युक्तमिदानीं स व्यङ्ग्यमुदाहृतमित्येवं विरुद्धाभिधानं नाशङ्कनीयमित्यर्थः। स्फुटव्यङ्ग्यराहित्यस्यैव तत्र व्याख्यातत्वादिति भावः। इत्थं षड्विधां पूर्णामुक्त्वा ऊनविंशतिविधां लुप्तां वक्तुमादौ पञ्चविधां धर्मलुप्तामाह।

तद्वदिति। श्रौत्यार्थ्यौ पूर्णयोर्वाक्यादित्रयगामित्ववदित्यर्थः। एवञ्च तद्वत् षड्विधत्वप्रसक्तावाह न श्रौतीति न तु पुनस्तद्धिते श्रौतीत्यर्थः। धर्मलुप्तायां धर्मिनिष्ठसम्बन्धबोधिकायाः षष्ठ्याः सप्तम्या वाऽभावेन ततो विहित इवार्थे वति र्न सम्भवति इत्यतस्तद्धितान्तरे कल्पप्प्रत्ययादौ न श्रौतीत्याह तद्धिते कल्पबादाविति पाणिनिमते पकारानुबन्धः कल्पप्प्रत्ययः आदिना तुल्यार्थकवतेरपि परिग्रहः। तत्र वाक्यगां धर्मलुप्तां श्रौतीमाह।

धन्यस्येति। हे चेतः! अमृतमिव तस्य वचः करणीयं सत्यमवश्यं तस्य कीदृशस्य धन्यस्य अनन्यसाधारणं यत्सौजन्यं तदुत्कर्षशालिनः। अत्र मधुरत्वं धर्मो लुप्तः करणीयत्तु अमृते बाधान्न साधारणं यथाशब्देन सह समासाभावाद्वाक्यगा श्रौती। वाक्यगां धर्मलुप्तामार्थीमाह।

आकृष्टकरवालोऽसौ सम्पराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥ [वा० आ०]
करवाल इवाचारः [स० श्रौ०]
तस्य वागमृतोपमा । [स० आ०]
विषकल्पं मनो वेत्सि, [अ० आ०]
यदि जीवसि तत्सखे ! ॥

उपमानानुपादाने

वाक्यगाऽथ समासगा ॥ २ ॥ [२]

सअलकरणपरिवीसामसिरिवितरणं ण सरसकव्वस्स ।
दीसइ अह वा णिसम्मइ सरिसं अंसंसमेत्तेण ॥

---

आकृष्टेति । सम्पराये युद्धे अत्र मारकत्वधर्मो लुप्तः दृष्टत्वमतीन्द्रिये कृतान्ते बाधान्न साधारणम् असमासे समपदाद्वाक्यगा आर्थी । समासे श्रौतीमार्थीं तद्धिते त्वार्थीमेकत्वैव धर्मलुप्तामाह ।

करवाल इवेति । हे सखे ! यदि जीवसि तत्तदा इदं वेत्सि तत्किमित्याह करवाल इवेति अत्रैव नित्यसमासगा श्रौती छेदकत्वं धर्मो लुप्तः वागमृतेति अत्र समासगा आर्थी मधुरत्वं धर्मो लुप्तः विषकल्पमिति अत्र तद्धिते आर्थी तापकत्वं धर्मो लुप्तः एवं विषवदिति करणात्तुल्यार्थकवत्तावपि बोध्यम् । इति धर्मलुप्ताः पञ्च । द्विविधामुपमानलुप्तामाह ।

उपमानेति । याद्दशशब्देनोपमानस्योपादाने तदुत्तरवर्त्तिना इवादिना उपमानता प्रत्याययितुं शक्यते तादृशशब्देनोपमानानुपादाने इत्यर्थः । तेन समसदृशपदेनोपादानेऽप्यनुपादानमेव तदुत्तरमिवाद्यसम्भवात् ।

सअलेति ।

सकलकरणपरिविश्रामश्री वितरणं न सरसकाव्यस्य ।
दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेणेति ॥ संस्कृतम् ।

सकलकरणपरिविश्रामश्रीः सर्वेन्द्रियस्फीतता तद्वितरणं तज्ज्ञापकमशांशमात्रेणापि सरसकाव्यस्य सदृशं न दृश्यते नाथवा निशम्यत इत्यर्थः । अत्र सदृश-

कम्बसेत्यत्र कम्बसममिति सरिसमित्यत्र च णूणमिति पाठे एषैव समासगा ॥

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।**
**कर्मकर्त्रोर्णमुलि** [६]

वाशब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्, समासेन कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्त्तुः क्यङा कर्मकर्त्रोरुपपदयोर्णमुला च भवेत्। उदाहरणम्,

तत: कुमुदनाथेन कामिनीगण्डपाण्डुना।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ [इयो: स०]

---

पदं न तुल्यगुणपरं नापि किञ्चिन्न्यूनगुणोपमेयपरं तदधिकगुणोपमानदर्शनासम्भावनानिबन्धना सरसकाव्यप्रशंसानुपपत्तेः किन्तूपमानपरमेव तथा च समासकाव्यस्योपमानं न दृश्यते इत्यर्थलाभेन सरसकाव्यमनुपमेयमेव भवति तथा च सदृशपदेनोपमानोपादानेऽपि नोक्तरूपेण तदुपादानं तदुत्तरमिवाद्यसम्भवात्। न चैवमत्र सदृशशब्दस्योपमानपरत्वे सादृश्यार्थकपदाभावादिलुप्तत्वप्रसक्तिरिति वाच्यम्। उपमानत्वस्यैव सादृश्यप्रतियोगित्वरूपत्वेन तदर्थकसदृशपदस्यैव सत्त्वात् न चैवं सादृश्यप्रतियोगितारूपोपमाऽभिन्नस्योपमानत्वस्य सदृशपदादेव लाभे उपमायाः श्रौतत्वं स्यादिति वाच्यम्। उपमानस्य विशेष्यभूताया एव प्रतियोगिताया उपमानत्वात्सदृशपदेन प्रतिपादने तु पदार्थतावच्छेदकविधया उपमानविशेषणत्वादेव सदृशपदस्य उपमाने लाक्षणिकत्वेन श्रौतत्वाभावात् अत्र सकलेत्यादिकमुभयधर्मः सदृशपदेन सह समासस्याभावादार्थ्यका चार्थी कव्वसेत्यत्र समपदग्रहेपि सदृशपदपौनरुक्त्यं परिहरति सरिसमित्यत्रेति। इत्युपमानलुप्ते द्वे। षड्विधामिवादिलुप्तामाह।

वादेरिति। षट्कं व्याकुरुते समासेति। पाणिनिमते क्यच् क्यङौ कलापमते यिन्नायी। कर्मकर्त्रोरिति कर्मणि कर्त्तरि वा उपपदे इत्यर्थः पाणिनिमते णमुल् कलापमते णम्।

ततः कुमुदेति। अत्र गण्डेनेव पाण्डुनेति समासेति

तथा,

असितभुजगभीषणासिपत्रो
रुहरुहिकाहितचित्ततूर्णभावः ।
पुलकिततनुरुत्कपोलकान्तिः
प्रतिभटविक्रमदर्शनेऽयमासीत् ॥ [बहुव्रीहौ स०]

पौरं सुतीयति जनं, समरान्तरेऽसौ [क० क्यच्]
अन्तःपुरीयति विचित्रचरित्रचञ्चुः । [अ० क्यच्]
नारीयते समरसीम्नि कृपाणपाणिः [क्यङ्]
आलोक्य तस्य चरितानि सपत्नसेना ॥
मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे । [कर्म० णमुल्]
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः ॥ [कर्तृ० णमुल्]

एतद्-

द्विलोपे क्विप्समासगा ॥ ३ ॥ [२]

---

असितेत्यादिरासीदित्यर्थः । रुहरुहिका उत्साहपरम्परा तया आहिती जनितश्चित्ततूर्णभावो यस्येति विग्रहः उन्नता कपोले कान्तिरर्थाच्छोभिमा यस्य तादृशः अत्रासितभुजग उपमानं भीषणत्वं धर्मः असिपत्रमुपमेयं तैभिः समासे वादिलोपः । क्यज्द्वये क्यङि चैकमुदाहरणमाह ।

पौरमिति । असौ राजा पौरं जनं सुतमिवाचरति समरान्तरेऽन्तःपुर इव आचरति निर्भयत्वात् अनयोः कर्माधाराभ्यां क्यच् तथा समरसीम्नि कृपाणपाणेस्तस्य चरितान्यालोक्य सपत्नसेना नारीयते नारीवाचरति भीरुत्वात् अत्र कर्त्तुः क्यङ् आचारे क्यङ् । क्यङ्ङर्थः साधर्म्यम् इवादिस्तु लुप्तः न तु इवार्थविशिष्ट एवाचार-क्यच् क्यङ्ङर्थः तदर्थेऽननुशासनात् । णमुल्द्वयमेकत्रैवोदाहरति ।

मृधे इति । परे शत्रवः तं मृधे युद्धे निदाघघर्मांशुकर्मकदर्शनेनेव पश्यन्ति अत्र कर्मण्युपपदे णमुल् स पुनरवनीपतिः पार्थसञ्चारमर्जुनकर्तृकसञ्चारेणेव मृधे सञ्चरति अत्र कर्त्र्युपपदे णमुल् । इति इवादिलुप्ताः षट् ।

एवमेकलुप्तास्त्रयोदश । पञ्चविधां द्विलुप्तां विवक्षुरादौ धर्मेवादिलुप्तां द्विविधा-

एतयोर्धर्मवाद्योः। उदाहरणम्,

सविता विधवति, विधुरपि
सवितरति, तथा दिनन्ति यामिन्यः।
यामिनयन्ति दिनानि च
सुखदुःखवशीकृते मनसि॥  [क्विप्]

परिपन्थिमनोराज्यशतैरपि दुराक्रमः।
सम्परायप्रवृत्तोऽसौ राजते राजकुञ्जरः॥  [स०]

**धर्मोपमानयोर्लोपे**
**वृत्तौ वाक्ये च दृश्यते।**  [२]

---

माह एतद्द्विलोपे इति। मध्यौकमुपमानं विहायाव तात्पर्यवशात् पूर्वापरिकार्यो-र्मेवाद्यारेवैतत्पदेन परामर्शस्तद्व्याचष्टे धर्मवाद्योरिति लुप्ता या आर्थिः क्विप्परिभाषा क्विप्गा समासगा चेत्यर्थः।

सवितेति। अत्र सुखदुःखेति द्वन्द्वेन तयोः साहित्ये किन्तु तात्पर्यवशात्तयो-र्वशीकारणैकक्रियान्वयरूपसाहित्य एव तथा च सुखेन दुःखेन वशीकृते मनसी-त्येवार्थः तत्र सुखवशीकृते मनसि सवितेति दिनन्तीति च विधवति विधुरिवा-चरति दिनन्ति दिनानीव आचरन्तीति सन्तोषात् प्रकाशमयत्वेनोपलभ्यमानत्वात् दुःखवशीकृते मनसि तु विधुरपीति यामिनयन्तीति च सवितरति सवितेवाचरति तापकत्वात् यामिनयन्ति यामिन्य इवाचरन्ति तमोमयत्वेनोपलभ्यमानत्वात् अत्रा-चाररूपधर्मवाचकास्यार्थेरिवादेश्च लोपः। समासगामाह।

परिपन्थीति। मनोराज्यं मनोरथश्च सम्परायं युद्धम्। अत्र राजा कुञ्जर इवेति समासे इवादेर्बलवत्त्वधर्मस्य च लोपः। न चात्र राजा एव कुञ्जर इति रूपक-मेव नोपमेवेति वाच्यम्। उपमाभिप्रायेणैवोदाहृतत्वात् श्लेषार्थकत्वे तु वहिहाय राजा चन्द्रमा इत्युदाहार्य्यं चन्द्रेऽपि परिपन्थीत्यादेरन्वयेनोभयधर्मत्वाभावात्। अन्य-द्विविधां द्विलुप्तामाह।

धर्मोपमानयोरिति। वृत्तौ समासे उपमानलोपश्च पूर्ववत्तद्वाद्विपदेर्नोपमानो-पादाने बोध्यः। ढुण्ढु खन्तेति

टुण्टुण्णन्तो मरिहिसि कण्टअकलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर ! भमन्तो ण पाविहिसि ॥

कुसुमेण सममिति पाठे वाक्यगा ।

**क्वचि वाद्युपमेयासे,** [१]

आसे निरासे ।

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥

अत्रात्मा उपमेयः ।

**विलोपे च समासगा ॥ ४ ॥** [१]

त्रयाणाम् इवादिधर्मोपमानानाम् । उदाहरणम्,

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।
स्मरशरविसराचितान्तरा मृगनयना हरति मुनेर्मनः ॥

---

टुण्टुणायमानो मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृशं भ्रमर ! भ्रमन्नपि न प्राप्स्यसि ॥ इति ।

केतकीवनानि प्राप्येति शेषः । टुण्टुणित्यव्यक्तशब्दानुकरणम् । अत्रापि मालतीकुसुमत आधिक्यलाभाय सदृशपदमुपमानपरमेव तथात्वे चोपमानानुपादानमिवाद्यलोपश्च पूर्ववदेव बोध्यः सौरभश्च धर्मो लुप्तः । एकविधामन्यां द्विलुप्तामाह क्वचीति ।

अरातीति । स राजा अरातीत्यादिना कृपाणेत्यादिना च विशिष्टः सन् सहस्रायुधीयति सहस्रायुधमिवात्मानं मन्यत इत्यर्थः । तदाह अत्रात्मा उपमेय इति स च लुप्त इत्युपमेयस्य इवादेश्च लोपः । इति द्विलुप्ताः पञ्च । त्रिलुप्तामेकविधामाह ।

विलोपे चेति । तरुणिमनीति मृगनयना मुनेरपि मनो हरति नयते कीदृशी तरुणिमनि तारुण्ये सति कृतावलोकना अर्थात् यूनि ललितविलासेन विशेषेण प्राप्तशरीरा स्मरशरस्य विसरेण पातेनाचितमनस्का अत्र मृगनयनमिव नयनं यस्या

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदोदाहरणम्।

क्रूरस्य आचारस्यायःशूलतयाऽध्यवसायात्, अयःशूलेनान्विच्छतीत्यायःशूलिकः इत्यतिशयोक्तिः न तु क्रूराचारोपमेयतैक्ष्ण्यधर्मवादीनां लोपे विलोपेयमुपमा।

एवमेकोनविंशतिर्लुप्ताः पूर्णाभिः सह पञ्चविंशतिः॥

"अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता।
मम्लौ साथ विषादेन, पद्मिनीव हिमाम्भसा॥

इत्यभिन्ने साधारणे धर्मे,

ज्योत्स्नेव नयदानन्दः सुरेव मदकारणम्।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी॥

इति भिन्ने च तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा यथोत्तरमुपमेयस्योपमानत्वे, पूर्ववदभिन्नभिन्नधर्मत्वे

---

इति समासे सप्तम्युपमानलोपः। पूर्वपदप्रकृति स्वरत्वञ्चेति पाणिनिसूत्रेण उपमानीभूतनयनपदलोप एवं दैर्घ्यचापल्यादिधर्मस्येवादेर्लोप इति त्रिलुप्ता। अत्र च कलापमते मृगपदमेव तन्नयने लाक्षणिकं न तु विलोप इत्यतो मतभेदं सूचयन्नाह यदेति यन्मते इत्यर्थः।

अत्र मृगनयनेत्यत्र विलोपाभावपक्षे आयःशूलिक इत्यत्र विलोपं केचिदाहुस्तत्र चातिशयोक्तिरेवालङ्कारो नोपमेत्याह।

क्रूरस्येति। अयः शूलेनेति क्रूराचाररूपेणायः शूलेनेत्यर्थः। अतिशयोक्तिरिति उपमानेनायःशूलेन क्रूराचारस्याध्यवसानरूपा अत्र विलोपोपमां निरस्यति नत्विति एवमेकोनेति एकलुप्ताश्चयोदश द्विलुप्ताः पञ्च त्रिलुप्ता चैकेति (१९) सूत्रे मालोपमारसनोपमयोर्विशिष्यानुक्तेर्वीजं वक्तुं द्विविधां मालोपमां रसनोपमाञ्चाह।

अनयेनेति। अत्र सा उपमेया इत्यभिन्ने इति म्लानिरूपैकधर्मस्येव सर्वोपमानसाधारणत्वात्।

ज्योत्स्नेवेति। नयनानन्दतज्जनिका शुद्धसारोपा लक्षणा अत्र प्रत्युपमानं

अनवरतकनकवितरण-
जललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मति र्मतिरिव
चेष्टा चेष्टेव कीर्त्तिरतिविमला । [अभि० ध०]

मतिरिव मूर्त्ति र्मधुरा, मूर्त्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् । [भि० ध०]

इत्यादिका "रसनोपमा च" न लक्षिता, एवंविधवैचित्र्य-सहस्रसम्भवात्, उक्तभेदानतिक्रमाच्च ॥

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।**

**अनन्वयः,**

उपमानान्तरसम्बन्धाभावोऽनन्वयः । उदाहरणम्,

---

नयनानन्दत्वादयो विभिन्ना धर्मा इति माला तु न लक्षितेत्यर्थोऽन्वयः । रसनोपमामाह यथोत्तरमिति पूर्वोपमायां यदुपमेयम् उत्तरोपमायां तस्योपमानत्वं इत्यर्थः ।

अनवरतेति । तस्य भणितिरिव मतिरतिविमलेत्येवमुत्तरोत्तरमन्वयः । तस्य कीदृशस्य अनवरतं कनकवितरणार्थं भृतानां जलानां लवेन कणेन तरङ्गितास्तरला अर्थिततयो यस्य तादृशस्य । अत्रातिविमलत्वं प्रत्युपमानमभिन्नो धर्मः ।

मतिरेवेति । प्रभावेण चिता प्रभयाऽवचितेति च बोध्यम् । तस्य नृपस्य जयश्री र्जेतुं परेषां न शक्या एव । न लक्षितेति विशेष्य न लक्षितेत्यर्थः । त्रिष्वोपि च समासगेत्यत्रानुक्तमालोपमासमुच्चयपरेण चकारेण तु लक्षितैवेति भावः । अतएवाग्रे माला तु पूर्ववदिति मालोपमा तुल्यतया मालारूपकं सूत्र एव लक्ष्यते अन्यथा मालोपमाद्या वृत्तिकृद्दर्शितत्वेन तत्तुल्यतया सूत्रकृता कथनासम्भवात् उक्तभेदेति पूर्णोपमायामेवान्तर्भावात् । अनन्वयालङ्कारमाह ।

उपमानेति । एकवाक्यगे इत्यनेन दर्शितरसनोपमाया दर्शयिष्यमाणोपमानोपमेययोश्च व्यावृत्तिस्तत्र वाक्यद्वयगामित्वात्तद्द्वयस्य उपमानान्तरेति अलङ्कारस्यानान्तरज्ञानकथनमिदं नत्वन्वयलक्षणविवरणमिदम् अपदार्थत्वात् एवमुत्तरत्रापि बोध्यम् ।

न केवलं भाति नितान्तकान्ति र्नितम्बिनी सैव नितम्बिनीव।
यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः॥

विपर्य्यास उपमेयोपमा तयोः॥ ५॥

तयोरुपमानोपमेययोः, परिवृत्तिः अर्थात् वाक्यद्वये, इतरोपमानव्यवच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा।
उदाहरणम्,

कमलेव मतिर्मतिरिव कमला, तनुरिव विभा, विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति वत यस्य॥

सम्भावनमथोत्प्रेचा प्रकृतस्य समेन यत्।

समेन उपमानेन। उदाहरणम्,

---

न केवलमिति। नितान्तकान्ति र्नितम्बिनी न केवलं सैव नितम्बिनीव भाति अपि तु ते अनुभूतास्तद्विलासा अपि तद्विलासा इवेत्यर्थः। विलासाः कीदृशाः विलासायुधस्य कामस्य लासानां लीलानां वासा आश्रया अपि त्वित्यर्थे यावदिति। रूपके भेदेऽभेदारोप इवात्राभेदे भेदारोपस्तत इवार्थ उपपद्यते। उपमेयोपमालङ्कारमाह।

विपर्य्यास इति। परिवृत्तिरिति पूर्ववाक्योपात्तोपमानत्वोपमेयत्वयोः परवाक्ये वैपरीत्यमित्यर्थः। वाक्यान्तरं विना तदसम्भवादाह अर्थादिति।

कमलेवेति विभातीति सर्वत्रान्वयः। स एव च सर्वत्र साधारणो धर्मः। उत्प्रेचालङ्कारमाह सम्भावनमिति। तत्राहार्य्य उत्कटकोटिकः संशयः सम्भावनं प्रकृतस्योपमेयस्य समानोपमानेन प्रकृतत्वात् विविधं प्रकृतस्य कारणं कार्य्यं प्रकृतमेव च एवञ्च प्रकृतकारणसमेन प्रकृतकारणस्य प्रकृतकार्य्यसमेन तु प्रकृतकार्य्यस्य प्रकृतसमेन प्रकृतस्य च सम्भावनमित्यर्थः। तत्र प्रकृतकारणसमेन प्रकृतकारणस्य सम्भावनमाह उन्मेषमिति। जातिवैरी पद्मत्वजातीयस्यैव वैरीत्यर्थः। स्वभावे वैरीतिवार्थः। तस्येन्दोः सौन्दर्य्यदर्पोऽनया नायिकया वक्त्रकान्त्या प्रसभं बलात् भ्रान्तिं नीत इति हर्षाद्ग्रेति मन्ये इत्यर्थः। अत्र पादयोः पद्मलक्ष्मा पतनं प्रकृतं तत्कारणञ्च पादयोः पद्मतुल्यशोभाजनकः पुण्यविशेषः तत्समेन हर्षेण तस्य सम्भावनं पद्मलक्ष्मा;

उन्मेषं यो मम न सहते जातिवैरी निशायाम्,
इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्य्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षात्
लग्नां मन्ये ललिततनु ! ते पादयोः पद्मलक्ष्मीम् ॥

लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः । इत्यादौ व्यापनादिलेपनादिरूपतया सम्भावितम् ।

**स सन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ६ ॥**

भेदोक्तौ यथा,

अयं मार्त्तण्डः किं ? स खलु तुरगैः सप्तभिरितः,
कृशानुः किं ? सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं ? साक्षान्महिषवहनोऽसाविति चिरम्
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥

---

पादपतनकारित्वेन समता । प्रकृतसम्बन्धेन प्रकृतसम्भावनमाह लिम्पतीवेति अत्र तमसोऽङ्गव्यापनं प्रकृतं तत्समेन लेपेन सम्भावितम् आच्छादकत्वं लेपव्यापनयोः साम्यं द्वितीये तु तमसोऽधःसम्बन्धः प्रकृततत्समेनाञ्जनवर्षणेन सम्भावितः भूतलस्य नीलत्वदर्शकत्वं द्वयोः साम्यम् । काव्यौत्प्रेक्षायान्तु निर्ष्टलघुभि र्मेघैः सवितुस्तस्य चोभयोः । वर्द्धिष्णवो दिगाभोगाः प्रतापस्येव रोचिता ॥ इत्युदाहरणम् ।

अत्र हि मेघैर्दिगाभोगरोचनस्य कार्य्यं जगदुज्ज्वल्यं तत्समेन प्रतापेन सम्भावितं रोचनजन्यत्वेन धर्मेण समता । सम्बन्धेऽसंशयालङ्कारानाह स सन्देह इति भेदोक्ताविति संशयानन्तरं तद्व्यावर्त्तकधर्मोक्तावित्यर्थः ।

अयमिति । त्वामाजौ समालोक्य प्रतिभटाः शत्रुवीराश्चिरमिति विकल्पान् विदधति विकल्पानाह अयङ्किमिति स खल्विति । व्यावर्त्तकधर्मः इतो गतः युक्तो वा कृशानुरिति सर्वा इत्यादिस्तद्व्यावर्त्तको धर्मः एष कृशानुः ? सर्वा दिशो न प्रसरति वायुभिमुखदिङ्मात्रप्रसारित्वात् अयन्तु सर्वदिक्प्रसारी न स इत्यर्थः । कृतान्तः किमिति अत्र महिषवाहनत्वं व्यावर्त्तकम् । अत्र व्यावर्त्तकधर्मोक्त्या संशयितु-

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो, यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः। यथा,

इन्दुः किं ? क्व कलङ्कः ? सरसिजमेतत् किमम्बु, कुत्र गतम् ?।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि ! निश्चितं परतः॥

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टोद्भटेन। तदनुक्तौ यथा,

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ?
शृङ्गारैकरसः स्वयं नु मदनो ? मासो नु पुष्पाकरः ?।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ?॥

**तद्रूपकमभेदो य उपमानोपमेययोः।**

अतिसाम्यात् अनपह्नुतभेदयोः अभेदः।

---

निश्चयो व्यङ्ग्यः स चावाच्यत्वादस्फुटत्वेन गतीभूतस्तथा च तद्गर्भोऽयमिव वाच्यनिश्चयान्तोऽप्ययमलङ्कारः स्वीकृत इत्याह भेदोक्ताविति इति निश्चयान्तो वाच्यनिश्चयान्त इत्यर्थः।

इन्दुः किमिति। अत्र निश्चितमित्यनेनोक्तो निश्चय इति शेषः। तर्हि प्रामाणिकेन भट्टोद्भटेन कथमुपेक्षित इत्यत आह।

किन्त्विति। न प्रतीयमानो न व्यङ्ग्यः तथा त्वत्रैव वैचित्र्यानुभव इति तेषां भावः। भेदकधर्मानुक्तौ तु संशयालङ्कारमाह तदनुक्ताविति।

अस्या इति। नु भोः अस्याः सृजनविधौ त्वहं तर्कयामि किं चन्द्रः प्रजापतिः स्रष्टा अभूत् यतः कान्तिप्रदः कान्तिमत्त्वादेव तत्प्रदत्वं सम्भाव्येदमुक्तं शृङ्गारैकरस इति मदनपुष्पाकरमासयो र्द्वयोरपि विशेषणं मदनश्चैत्रमासो वा किं स्रष्टेत्यर्थः। ननु विधिरेव कथं नास्याः स्रष्टेत्यत आह वेदेति मुनिर्भजनशीलो यतः पुराणो जीर्णो न तु स नास इत्यर्थः। अत्र विधेः निर्वोढत्वव्याहतिरपि संशयितैवेत्यतो व्यावर्तकधर्मस्यानिश्चयात् संशयानुत्थापितेत्यतो न स सन्देहः। रूपकालङ्कारमाह।

तद्रूपकमिति। उपमानाभिन्नत्वेनोपमेयस्याहार्यनिश्चय इत्यर्थः। तत्र रूप्य-

**समस्तवस्तुविषयम्, श्रौता आरोपिता यदा ॥७॥**

आरोपविषया इव आरोप्यमाणा यदा शब्दोपात्ताः तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम्। आरोपिता इति बहुवचनमविवक्षितम्। यथा,

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥

अत्र पादत्रये अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्सङ्कराशङ्का न कार्य्या ॥

---

रूपकोभयनिर्देशे सति समस्तवस्तुविषयनाम भवेदित्याह समस्तेति श्रौताः शब्दोपात्ताः।

आरोपिता इत्यत्रारोपशब्दादिति च तेनारोपवन्तावारोप्यमाणारोपविषयौ द्वावपि तेनोक्तौ बहुवचनन्तु अविवक्षितमित्याह आरोपविषया इवेत्यादि। ज्योत्स्नेति इयं रात्रिरेव कापालिकी कपालव्रतधारिणी योगिनी अन्तर्धानव्यसनरसिका सती द्वीपात् द्वीपं भ्रमति अन्तर्धानमदृश्यत्वं तदर्थं व्यसनं व्यापारः तत्सामग्रीमाह दधतीति चन्द्रात्मके मुद्राकपाले भिक्षापात्रे लाञ्छनस्य छलेन न्यस्तं सिद्धाञ्जनस्य परिमलं चोदं दधती सिद्धाञ्जनमदृश्यत्वकारकमञ्जनं तस्याः कापालिकत्वोपयुक्तविशेषणद्वयमाह।

ज्योत्स्नेति बिभ्रतीति च ज्योत्स्नात्मकभस्मच्छुरणेन धवला तारकास्थीनि दधतीति च कापालिक्या भस्मास्थिधारणात् ननु रात्रिः कापालिकी वा ज्योत्स्ना भस्मेव तारका अस्थीनीव चन्द्रो मुद्रा कपालमिवेति च पुरुषव्याघ्रादिसमासेनोपमालङ्कार एवायं न रूपकमित्यत आह।

अत्रेति। आरोपितायाः कापालिक्या एवान्तर्धानव्यसनरसिकत्वं धर्मो नत्वचेतनयोः कापालिक्युपमितयो रात्रेरिति द्वितीयपादे रूपकसिद्धौ तद्वशात् प्रथमतृतीयपादयोरपि रूपकसिद्धिरित्यर्थः। रूपितायां कापालिक्यां भस्मतुल्य-

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत्।**

केचिदारोप्यमाणा शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेयाः इत्येकदेशविवर्त्तनात् एकदेशविवर्त्ति। यथा,

जस्स रणंतउरए करे कुणंतस्स मण्डलग्गलअं।
रससंमुही वि सहसा परंमुही होइ रिउसेणा॥

अत रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तं, मण्डलाग्रलताया नायिकात्वं, रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्यात् अवसीयते इत्येकदेशे विशेषेण वर्त्तनात् एकदेशविवर्त्ति।

**साङ्गमेतत्,**

उक्तद्विभेदं सावयवम्॥

---

ज्योत्स्नाया अस्थितुल्यतारकाणां कपालस्य मुद्रातुल्य चन्द्रस्य च बाधात्। एकदेशविवर्त्तिरूपकमाह।

श्रौता इति। अङ्गाङ्गिभावापन्नेष्वनेकेषु रूपकेषु केचिद्रूप्यमाणाः शब्दोपात्ताः केचिद्रूप्यमाणा अर्थबललभ्या इत्यर्थः। अत चाङ्गाङ्गिभावापन्नानेकरूपकाभिप्रायेणैव केचिदिति। वृत्तौ बहुवचनं यदि त्वेकमेव रूपकं तत्रापि तुल्यन्यायात् रूप्यमाणस्यार्थत्वे इदं बोध्यं यथा गुणसिन्धुरित्यत्र रूप्यमाणं गुणस्य जलत्वमार्थम्। जस्सेति

यस्य रणान्तःपुरे करे कुर्वती मण्डलाग्रलताम्।
रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥

यस्य रणान्तःपुरे करे कुर्वती मण्डलाग्रलताया नायिकाया अन्तःपुरे करग्रहणाद्रिपुसेनायाः परनायिकायाः शृङ्गाररससम्मुख्या अपि लज्जया पराङ्मुखत्वम्। एकदेशे अङ्गाङ्गिरूपकायाः शुद्धरूप्यरूपकयोश्चैकदेशो बोध्यः। तेन गुणसिन्धुरित्यस्यैकदेशोऽपि बोध्यः। विवर्त्तनं शाब्दत्वम् उक्तं द्विभेदमिति समस्तवस्तुविषयमेकदेशविवर्त्ति च इत्युक्तं द्विभेदमुक्तोदाहरणद्वये साङ्गमवयवविशिष्टमित्यर्थः। अवयवी धर्मः श्लोकद्वये रूपितकापालिकान्तःपुरयो भैक्षादिनायिकाप्रतिनायिकारूपकरूपधर्मवत्त्वात् उदाहरणान्तरे त्वनयो निरङ्गत्वमपि सम्भवतीत्याह।

**निरङ्गन्तु शुद्धम्,**

यथा,

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्,
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः स्वपिति, तदहो वेद्म्यभिनवाम्
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्॥

**माला तु पूर्ववत्॥ ८॥**

मालोपमायामिवैकस्मिन् बहव आरोपिताः। यथा,

सौन्दर्यस्य तरङ्गिणी, तरुणिमोत्कर्षस्य हर्षोद्गमः,
कान्तेः कार्मणकर्म, नर्मरहसामुल्लासनावासभूः।
विद्या वक्रगिरां, विधेरनवधिप्रावीण्यसाक्षात्क्रिया,
बाणाः पञ्चशिलीमुखस्य, ललनाचूड़ामणिः सा प्रिया॥

---

निरङ्गन्त्विति। निरङ्गन्त्विदं द्वयं शुद्धमित्यर्थः। नत्वेतद्द्वयभिन्नं तृतीयरूपं शुद्धमित्यर्थः। तत्र शुद्धं समस्तवस्तुविषयमुदाहरति।

कुरङ्गीति। अहो विस्मये तत्तस्मात् अहं वेद्मि जानामि अस्या हृदि नायकविषयप्रेमरूपां लतिकां सेक्तुं मनसिजः प्रवृत्तः यद्यस्मादियं गीतध्वनिषु अर्थान्नायकविषयेषु अङ्गानि स्तिमितयति निश्चलयति कान्तस्योदन्तं वार्त्तां श्रुतमपि पुनर्यत् प्रश्नयति अनिद्रमिति निद्रां विनापि भावनयाऽन्तर्निद्रातीत्यर्थः। यद्वा अन्तः गृहाभ्यन्तरेऽनिद्रं निद्रारहितं स्वपिति शेते इत्यर्थः विरहात्। अत्र रूप्यरूपके श्रौते इति समस्तवस्तुविषयं न तु साङ्गं तदङ्गपल्लवादिरूपलाभात् शुद्धमेव एकदेशविवर्त्तिनः शुद्धस्य गुणसिन्धुरित्यादिकमेवोदाहरणम्। मालारूपकमाह।

माला त्विति। पूर्ववदिति विलोपे च समास इत्यत्र चकारसमुच्चितमालोपमावदित्यर्थः।

सौन्दर्यस्येति। हर्षोद्गम उद्गतौ हर्षः क्वचिद्विहितभावत्वात् कार्मणकर्म मूलकर्म कान्तिजनकत्वात् नर्मरहसां रहस्यनर्मणां राजदन्तादिसमासात् पूर्वनिपातः। वक्रगिरां जनिका विद्या प्रावीण्यं प्रकर्षः तस्य साक्षात्क्रिया यस्यां तादृशी अवाङ्गे

**नियतारोपणोपायः स्यादारोपः परस्य यः।**
**तत् परम्परितं श्लिष्टे वाचके भेदभाजि वा॥९॥**

यथा,

विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते!
दुर्गामार्गणनीललोहित! समित्स्वीकारवैश्वानर!।
सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो!
साम्राज्यं वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥[श्लि॰प॰मा॰]

अत्र मानसमेव मानसम्, कमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणां मार्गणमेव दुर्गाया मार्गणं, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयः अर्जुनः एवमारोपणनिमित्तो हंसादेरारोपः।

---

रूपकं नास्ति अत्र च सौन्दर्यस्य त्यत्र जलस्यार्धत्वादेकदेशविवर्त्ति शुद्धं सर्वसन्यत् समस्तवस्तुविषयं शुद्धं मालास्वरूपम्। परम्परितरूपकमाह।

नियतेति। नियतं प्रकृतं प्रकृतरूपकनिर्वाहकं यदप्रकृतरूपकं श्लिष्टे रूप्यरूपकोभयवाचके पृथगुभयवाचके वा शब्दे दृश्यते तद्द्विविधं परम्परितरूपमित्यर्थः। तत्र श्लिष्टशब्दे उदाहरति।

विद्वन्मानसेति। प्रभो इत्यन्तं सर्वं सम्बोधनम् एवं वरवीरेति च हे तादृश! उच्चैः साम्राज्यं वैरिञ्चं विरिञ्चेर्ब्रह्मणो वत्सरशतं क्रियाः कुर्य्या इत्यर्थः। क्रिया इत्याशिषि रूपं सम्बोधनगणार्थस्तु वृत्तावेव स्पष्टः। तत्र दीप्तद्युतिः सूर्य्यः तत्र तात्पर्य्यवशात् समासावरुद्धयोरपि विद्वद्वैरिपदार्थयोस्त्यागेनैव मानससरसः कमलानामसङ्कोचस्य च श्लिष्टपदादुपस्थितौ तद्रूपणं दुर्गाणाममार्गणमिति दुर्गं विनैव बोद्धृत्वात् सत्यामप्रीतिरिति तत्पिता दक्षेण यज्ञे महेशस्य निन्दितत्वात् विजयोऽर्जुन इति विजयापरनामकत्वात्तस्य तथाच परपराभवस्य प्राग्भावः पूर्ववर्त्तिता कारणता सैवार्जुनात् पूर्वजन्म, तत्र भीमसेनस्तस्यार्जुनज्येष्ठत्वात्। एवमादीति एवमाद्यारोपणं निमित्तमुपायो यस्य प्रकृते हंसादेरारोपस्यादृश इत्यर्थः। मनसि हंसस्य

यद्यपि शब्दार्थालङ्कारोऽयमित्युक्तं वक्ष्यते च, तथापि प्रसिद्ध्यनुरोधादत्रोक्तः, एकदेशविवर्त्ति चेदमन्यैरभिधीयते।

भेदभाजि यथा,

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो, लीलोपधानं श्रियः।
सङ्ग्रामामृतसागरप्रमथनक्रीड़ाविधौ मन्दरो,
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः॥[अस्मा०प०मा०]

अत्र जयादेः भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्य आलानत्वाद्यारोपो युज्यते।

"अलौकिकमहालोकप्रकाशितजगत्त्रय!।
स्तूयते देव! सद्वंशमुक्तारत्नं न कैर्भवान्॥ [श्लि०प०के०]

---

कमलायाः सङ्कोचे सूर्य्यस्य दुर्गाणाममार्गणे नीललोहितस्य समितां युद्धानां स्वीकारे वैश्वानरस्य सत्यं प्रीतिविधाने दक्षप्रजापतेः समितां स्वीकारे वैश्वानरस्य परपराभवे भीमसेनस्य च न बाधस्तथापि तत्र तत्र तेषामुत्कटप्रसिद्धिबाधात् तात्पर्य्यविषयप्रसिद्ध्-तद्बाधौ बोध्यः। अत्रोक्त इति अर्थालङ्कारमध्ये उक्त इत्यर्थः। प्रसिद्धिं दर्शयति एकदेशेति। एकदेशः प्रकृतहंसादीरूप्यमाणस्तादृशार्थांशे विवर्त्तिपर्य्यवसिततात्पर्य्यकमित्यर्थः।

आलानमिति। हे राजन्! हे वीर! वैरिवनितावैधव्यदस्ते भुजो राजति भुजं रूपयन्नाह आलानमिति आलानं बन्धनस्तम्भः विपद्वारिधेस्तारकौ दृषदां सेतुः चण्डमहसः सूर्य्यस्य उपधानं शिरःस्थापनतूलराशिः अत्रांशे शुद्धरूपकमेव न परम्परितं भिन्नशब्दवाच्यस्येति रूप्यरूपकवाचकशब्दभेदात् युज्यत इति जयादौ कुञ्जराद्यारोपं विना जयादेरालानसम्बन्धानुपपत्तेरित्यर्थः। श्लिष्टाश्लिष्टवाचकद्वये मालापरम्परितद्वयमाह।

अलौकिकेति। निरवधीति च प्रकृतैकरूपकोपायरूपकाणामनेकत्वे मालापरम्परितरूपकं विद्वन्मानसेत्यादावाखानमित्यादौ च प्रकृतरूपकाणामेवानेकत्वं तत्तद्रूपकोपायरूपकाणान्त्वेकत्वमेव उपायता च साक्षात्परम्पराभ्यां विवक्षिता तत्र साक्षादुपाय[illegible]तत्तुल्यमेव सहेषु:

निरवधि च निराश्रयञ्च यस्य
स्थितमनिवर्त्तितकौतुकप्रपञ्चम्।
प्रथम इह भवान् स कूर्ममूर्त्ति-
र्जयति चतुर्दशलोकवल्लिकन्दः॥ [ अग्नि॰प॰के॰ ]

इति च श्रमालारूपकमपि परम्परितं द्रष्टव्यम्॥

किसलयकरै र्लतानां, करकमलैः कामिनां मनो जयति।
नलिनीनां कमलमुखैः, मुखेन्दुभि र्योषितां मदनः॥

इत्यादिरशनारूपकं न वैचित्र्यवदिति न लक्षितम्॥

---

हे देव! तव मुक्तारत्नं भवान् कै र्न सूयते अत्र प्रकृतमुक्तारत्नरूपकसाधकमेकं कुले वेणुरूपकं एवम् अलौकिक इत्यपि सम्बोधनान्तरं अलौकिकोऽन्यलोकसाधारणो यो महालोको महादृष्टिपातः स एवालौकिकमहाज्योतिस्तेन प्रकाशितजगत्त्रयः अत्र जगत्पदं मुक्तामण्डितजगत्परं मुक्ताज्योतिषा तस्यैव प्रकाशनात् जगत्त्रय इति स-विसर्गपाठस्तु प्रामादिक एव। मुक्तारत्ने लिङ्गभेदात्तदनन्वये परम्परितमालात्वानुपपत्तेः। अत्र कुले मुक्तारत्नबाधाद्राज्ञि तद्रूपणं बाधितमित्यतः सत्कुले सद्वंशारोप एकस्तदुपायः। दृष्टिपाते ज्योतिरारोपोऽपरस्तदुपायः। ज्योतिर्विना मुक्तारोपस्याचमत्कारित्वात् वंशालोकपदे श्लिष्टे वाचके। भिन्नवाचके तु साक्षात्परम्पराभ्यामुपाययो र्मालामाह।

निरवधीति। भवानिह जगति स प्रसिद्धः कूर्ममूर्त्ति र्जयति कीदृशः चतुर्दश-लोका एव उपर्य्यधोभावेन दीर्घत्वाद्वल्लि र्लता तस्याः कन्दो मूलं पालनेन यत्नेन च उद्धरणरक्षणाद्राज्ञ आधारत्वेन कूर्ममूर्त्तेश्च मूलत्वात् प्रतिलोके एकैककूर्मेण वत्तल्लोक-धरणात् साक्षात्परम्पराभ्यामेककूर्मेणैव वा यस्य कूर्ममूर्त्तिरूपस्य भवतः स्थितं स्थितिर्निरवधिराजत्वपदे स्थितेः पितृपितामहादिक्रमेणावधिशून्यत्वात् कूर्ममूर्त्ति-स्थितिस्तु विस्तारावधिशून्या तथा अनिवर्त्तितः कौतुकस्य नृत्यगीतद्यूतप्रहेलिकादेः प्रपञ्चो यत्र राज्ञः स्थितं तादृशं कूर्ममूर्त्तेस्तु अनिवर्त्तितकौतुकः प्रपञ्चो वपुर्विस्तारो यत्र तादृशम् अत्र कौतुकं विस्मयः। निराश्रयं परोपष्टम्भरहितं राज्ञः स्थितं कूर्ममूर्त्ते-स्त्वाधाररहितम्। अत्र राज्ञि कूर्ममूर्त्ते रूपणं प्रकृतं तत्र लोकाश्रयत्वे नैवोपपद्यते इत्यतस्तद्घटयितुं मूलार्थकस्य कन्दस्य रूपणं साक्षात्तदुपायः लोकानाञ्च कन्दाभावात् तेषु वल्ल्यारोपणमपरः परम्परया तदुपाय इति साक्षात्परम्पराभ्यामनेकोपायरूपक-

**प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।**

उपमेयमसत्यं कृत्वोपमानं सत्यतया यत् स्थाप्यते, सा त्वपह्नुतिः । उदाहरणम्,

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये !
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ [ वा०अप० ]

इत्थं वा,

बत सखि ! कियदेतत्पश्य वैरं स्मरस्य,
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ [ प्र०अप० ]

---

माला कूममूर्त्यारोपे कन्दारोपस्तत्र च वल्ल्यारोप उपाय इति परम्परामालारूपकमिति ज्यायान् पाठः । मालारूपकमपीति क्वचित्पाठे परम्परितमपि मालारूपकमित्येवमपिकारयोजना । रशनारूपकानुक्तिबीजं वक्तुं तद्दर्शयति किशलयेति एतैरेतैः कामिनां मानी जयति कैः कैरित्यत आह किशलयेति एषामुद्दीपकत्वादेतेजेयः करकमलैरित्यत्रापि योषितामित्यस्यान्वयः । अत्र किशलयेषु कराः करेषु कमलानि तेषु मुखानि तेषु इन्दवो रसनारीत्या रूपिताः । अपह्नुत्यलङ्कारमाह ।

प्रकृतमिति । स्थाप्यत इत्यत्र तत्स्थाने इति बोध्यम् । एवञ्च निषेधपूर्वकत्वमेव रूपकादस्य भेदः ।

अवाप्त इति । पूर्णचन्द्रे कलङ्कं दृष्ट्वा पार्वतीं प्रति महेशस्योक्तिरियम् । हे शैलतनये ! परिणतरुचः पूर्णद्योतस्य शशाङ्कस्य वपुषि प्रागल्भ्यमवाप्तो दृश्यमानोऽयं पदार्थो नैव कलङ्को विलसति तत्कोऽयमित्यत आह । अमुष्येति अहं मन्ये अमुष्य चन्द्रस्य रजनिरूपा रमणीयममुष्योरसि रतिश्रान्ता सती गाढं शेते तदुरःशयने हेतुमाह विगलदिति शिशिरे शीतले । निषेधस्यान्यथाप्रत्यायनेऽप्याह ।

इत्थं वेति बत सखीति । बत खेदे पश्य प्रियविरहकृशेऽस्मिन् कामिलोके

अत्र हि न सभृङ्गाणि सहकाराणि, अपितु सकालकूटाः शरा इति प्रतीतिः एवं वा,

अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः॥ [प्र० अप०]

अत्र न रोमावलिः, धूमशिखेयमिति प्रतिपत्तिः। एवमियं भङ्ग्यन्तरैरप्यूह्या॥

**श्लेषः स वाक्ये एकस्मिन् यत्रानेकार्थता भवेत्॥१०**

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः, स श्लेषः उदाहरणम्।

---

स्मरस्य कियद्दूरं विलक्षणमेव वैरमित्यर्थः। यत उपवनसहकारपुष्पेषु उल्लासिनां भृङ्गाणां छलेन तत् पुष्परूपं विशिखं प्रति अनेन स्मरेण कालकूटमुद्दङ्कितं दत्तम्। अत्र छलपदात् भृङ्गनिषेधप्रतीतिरित्याह।

अत्रेति। अन्यथापि निषेधप्रतीतावाह।

एवं वेति अमुष्मिन्निति। मृगदृशोऽमुष्मिन् लावण्यरूपा मृतस्य सरसि पृथुजघनभागे शर्वेण महेशेन प्लुष्टो दग्धः ज्वलदवस्थ एव निपतितः यस्य अङ्गाङ्गाराणां प्रशमस्य पिशुना सूचिका इयं धूमस्य शिखा नाभिरूपे कुहरे गर्त्ते रोमावलिरूपं वपुः परिणमति जलेन ज्वलदङ्गाराणां निर्वाणे धूमोद्गमात् जघने निर्वाणे च नाभिच्छिद्रेण तदूमोद्गमः। एवमिति।

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ॥

इत्यत्र एवकारादङ्कनिषेधप्रतीतिः। अर्थश्लेषालङ्कारमाह।

श्लेषः स इति। एकस्मिन्नर्थे वाच्ये सति लक्षणावशादन्यान्वितार्थान्तरेण यत्रानेकार्थता भवेदित्यर्थः। एकस्मिन् विशेष्ये वाच्यार्थोऽन्यस्मिन् विशेष्ये तु लक्ष्यार्थोऽन्वेतीत्यर्थः। यद्यपि स्तोकेनोन्नतिमायातीत्येवास्योदाहरणमुक्तं तथापि सौलभ्या

उदयमयते, दिङ्मालिन्यं निराकुरुतेतराम्,
नयति निधनं निद्रामुद्रां, प्रवर्त्तयति क्रियाः ।
रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनम्
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ ।

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः,**

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्य सामर्थ्यादपि यत् अप्रकृतस्यार्थस्याभिधानं, सा समासेन सङ्क्षेपेणार्थद्वयकथनात् समासोक्तिः ।

उदाहरणम्,

लहिऊण तुज्झ बाहुप्फसं जीए स कोवि उल्लासो
जअलच्छी तुह विरहे ण हु उज्जला दुब्बलाणं सा ॥

---

द्वयदप्युदाहरति उदयमयते इति विभाकरनामा राजा सूर्य्यश्च विभाति उभयविशेषणान्वयादिति ।

उदयमिति । उदयमुन्नतिमुदयगिरिञ्च अयते प्राप्नोति दिङ्मानां दिशाञ्च मालिन्यं दैन्यमन्धकारञ्च निद्रा निष्पन्दता निद्रैव च तद्रूपां मुद्रां परिपाटीं तच्चिह्नं चक्षुर्मीलनञ्च क्रियाः प्रजाभव्यव्यवहारान् आलोकसाध्यसमस्तक्रियाश्च स्वैराचारः शास्त्रोल्लङ्घनेन यथेष्टाचारः चौराभिसारिकाक्रियाश्च तेजः शौर्य्यं ज्योतिश्च । अत्र विशेष्यद्वयेऽन्विता वाच्यलक्ष्यार्थाः स्वयमवधेयाः । ननु प्रकरणवशादेकार्थबोधेऽन्यार्थे व्यञ्जनैव न लक्षणा इत्यत उपमाध्वनिरेवायमित्यताह । अत्रेति समासोक्त्यलङ्कारमाह ।

परोक्तिरप्रकृतव्यञ्जनं भेदकैर्विशेषणैः श्लिष्टैर्वाच्यव्यङ्ग्योभयान्वितैः ननु अनेकार्थैरेव एवञ्चोपमाध्वनावतिप्रसक्तावाह न तु विशेष्यस्येति । उल्लासेत्यादौ तु विशेष्यं दैवपदमप्युभयार्थकम् अभिधानमत्र व्यञ्जनं संज्ञाव्युत्पत्तिमाह समासेनेति । लहिऊणेति ।

लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।
जयलक्ष्मीस्तव विरहेण न खलूज्ज्वला दुर्बलानां सा इति ॥ संस्कृतम् ।

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति।

## निदर्शना।

**अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः॥ ११॥**

निदर्शनं दृष्टान्तकरणम्। उदाहरणम्,

क्व सूर्य्यप्रभवो वंशः, क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥ [ वा॰नि॰ ]

अत्र उडुपेन सागरतरणमिव मन्मत्या सूर्य्यवंशवर्णनमित्युपमायां पर्य्यवस्यति। यथा वा,

उदयति विततोर्ध्वरश्मिरज्जौ
अहिमरुचौ, हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम्॥ [ प॰नि॰ ]

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्य्यवसानम्।

---

दैवाद्दुर्बलजितं नृपतिं प्रति कस्यचिदुक्तिरियम्। अत्र निकृष्टहस्तगताया उत्तमनायकविरहिण्या नायिकायाः प्रतीति र्वाङ्गस्पर्शलाभादुभयान्वितविशेषणसामर्थ्यात्। अत्रोपमां निरस्यति अत्रेति। निदर्शनालङ्कारमाह अभवन्निति बाधितोऽन्वय इत्यर्थः। उपमापरिकल्पनञ्च क्वचिल्लक्षणया क्वचिद्व्यञ्जनयेति बोध्यम्।

निदर्शनमिति। तथाच अत्यर्थेऽच्प्रत्ययान्तनिदर्शनपदमिति वाच्यम्। तदंशे दृष्टत्वादेव तन्निदानस्य रघुवंशवर्णनसागरतरणयोरुपमानोपमेयभावकल्पनस्यैव प्रकृतोदाहरणत्वात्। रूपकासङ्कीर्णमप्युदाहरति। यथा वा

उदयतीति। प्रातःकाले रैवतकगिरिवर्णनमिदम्। अहिमरुचौ सूर्य्ये उदयति हिमधाम्नि चन्द्रे चास्तं याति सतीत्यन्वयः। विततेत्युभयविशेषणं गिरिः रैवतकः परिवारितो वेष्टितः अत्र लीलाव्यक्तिभेदात् तत्सदृशलीलालक्षणेत्यर्थः। मालानिदर्शनामपि रूपकसङ्कीर्णामाह।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गम्,
आदातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव !
यस्ते गुणान् गदितुमुद्यममातनोति ॥

इत्यादौ मालारूपाप्येषा द्रष्टव्या ॥

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।**

क्रिययैव स्वस्वरूपस्वकारणयोः सम्बन्धो यदवगम्यते, सा अपरा निदर्शना । यथा,

उन्नतं पदमवाप्य यो लघुः, हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥

अत्र पातक्रियया पतनस्य, लाघवे सति उन्नतपदप्राप्तिरूपस्य च सम्बन्धः ख्याप्यते ।

**अप्रस्तुतप्रशंसा सा, या सैव प्रस्तुताश्रया ॥ १२ ॥**

---

दोर्भ्यामिति । तरङ्गवत्या नद्या भुजङ्गं कामुकं समुद्रं हे देव ! यस्ते गुणान् गदितुमुद्यममातनोति स एवमेवं कुरुते इत्यर्थः । तत्करणञ्च बाधितमतो दोर्भ्यां सागरतितीर्षादिरिव गुणगणनोद्यम इत्युपमाकल्पनं व्यञ्जनया । तिङन्ते च न रूपकमिति तदसङ्करः । अन्यविधां निदर्शनामाह ।

स्वस्वेति । स्वकार्य्यं स्वहेतुस्तत्कारणं तयोः कार्य्यकारणभावरूपस्यान्वयस्य कार्य्यरूपक्रिययैवोक्तिः प्रत्यायनमित्यर्थः ।

उन्नतमिति । यो जनो लघुः स उन्नतं पदमवाप्य हेलयैव अयत्नेनैव पतेदित्यर्थं ब्रुवन् प्रतिपादयन् शैलशेखरगतो दृशत्कणो मारुतधुतः सन् चाधः पततीत्यर्थः ।

अत्रेति । पतनस्य कार्य्यस्य लाघवे सति उन्नतपदप्राप्तिरूपस्य तत्कारणस्य च सम्बन्धः कार्य्यकारणभावरूपः पातक्रियया ख्याप्यत इत्यर्थः । अप्रस्तुतप्रशंसाकथनं सैव तन्नामिकैव प्रस्तुताश्रया प्रस्तुतव्यञ्जिका आक्षेपः प्रत्यायनम् । अस्यालङ्कारस्य अन्यनाप्यपदेशसंज्ञा । अस्याः पञ्चविधत्वमाह ।

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा।

**कार्य्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा॥ १३॥**

तदन्यस्य कारणादेः। क्रमेणोदाहरणम्,

याताः किं न मिलन्ति सुन्दरि! पुनश्चिन्ता त्वया मत्कृते
नो कार्य्या, नितरां कृशासि. कथयत्येवं सवास्पे यथि।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां, हसितेन भाविमरणोत्साहस्तया सूचितः॥

अत्र प्रस्थानात् किमति निवृत्तोऽसीति कार्य्यं पृष्टे कारणमभिहितम्।

राजन्! राजसुता न पाठयति मां, देव्योऽपि तूष्णीं स्थिताः,
कुब्जे! भोजय मां, कुमारसचिवै र्नाद्यापि किं भुज्यते?।
इत्थं नाथ! शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते॥

---

कार्य्ये इति। कारणादेरिति कार्य्ये प्रस्तुते कारणस्य कारणे प्रस्तुते कार्य्यस्य सामान्ये प्रस्तुते विशेषस्य विशेषे प्रस्तुते सामान्यस्य तुल्ये प्रस्तुते तुल्यान्तरस्याभिधानमित्यर्थः। तत्र कार्य्ये प्रस्तुते कारणाभिधानमाह।

याता इति। प्रस्थानान्निवृत्तोऽसीति पृच्छन्तं प्रति प्रस्थानतो निवृत्तस्योक्तिरियम्। सवास्पे मयि एवं कथयति सति निपतदेव पीतं संवृतमश्रु, येन तादृशेन चक्षुषा मां दृष्ट्वा तया मत्प्रियया हसितेनैव भाविमरणे उत्साहो मरणहेतुश्रवणकाले चिन्ताकरणाभावात् हसितेन सूचित इत्यर्थः।

अत्रेति किमितीति। निवृत्तेरेव प्रश्नः न तु तत्कारणस्य तत्कार्य्यस्य वा तत्कारणमिति मरणोत्साहसूचनरूपं निवृत्तिकारणमित्यर्थः। कारणे प्रस्तुते कार्य्यकथनमाह।

राजन्निति। शत्रुजयोद्यतं राजानं प्रति शत्रु पलायने प्रतिपाद्ये तन्मन्त्रिण-

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्य्यमुक्तम् ।

एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जड़ः शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा ॥

अत्रास्थाने जड़ानां ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

सुहृद्वधूवाष्पजलप्रमार्जनम्
करोति वैरप्रतियातनेन यः ।

---

सत्कार्य्यकथनमिदम् । तत्रारिभवनेऽध्वगैः पञ्जरान्मुक्तौ राजशुकी राजपोषितः शुकः शून्यवडभौ चित्रस्थानवलोक्य एकैकमेवमाभाषत इत्यर्थः । शून्यपुरमध्ये वर्त्म-प्रवृत्त्याऽध्वगैः शुकमोचनं चित्रस्थकङ्कमालोक्य किं किमाभाषत इत्यवाह राजन्निति । कुब्जा भोजननियुक्ता काचित् । कुमारेति तत्काले तस्यापि भोजन-नियमात् अन्नेति । कार्य्यं पलायनस्य शुकाभाषणरूपम् । सामान्ये प्रस्तुते विशेषाभिधानमाह ।

एतत्तस्येति । जड़सामान्यप्रस्तावे जड़विशेषस्य कृत्यं कस्यचिन्मुखात् श्रुत्वा कथयन्तं प्रति तदधिकमपि तत्कृत्यं जानतः कस्यचिदुक्तिरियम् । स जड़ः कमलिनीपत्रे वारिणः कणं यन्मुक्तामणिरित्यमंस्त एतत् कथयतस्तस्य मुखादेतत्कियत् श्रुतमिति शेषः । अस्मादन्यदपि तत्कृत्यं शृणु स जड़ः तस्मिन् वारिणः कणे धरणार्थं प्रयुक्तयाऽङ्गुल्यग्रलघुक्रियया आदीयमाने सत्येव प्रविल-यिनि सति स मुक्तामणिर्मम स्थानादुड्डीय कुत्र इत्यार्त्तः शुचा निशि निद्रां नाप्नोतीत्यर्थः ।

अत्रेति । जड़सामान्यस्यैवास्थाने ममत्वसम्भावना भवतीत्येवं जड़सामान्य-प्रस्तावः विशेषस्ताहृशजड़विशेषः । विशेषे प्रस्तुते सामान्याभिधानमाह ।

सुहृदिति । श्रीकृष्णं हन्तुं कालयवनमुद्देजयतस्तन्मन्त्रिण उक्तिरियम् ।

स एव पूज्यः, स पुमान्, स नीतिमान्,
सुजीवनं तस्य, स भाजनं श्रियः ॥

अत्र कृष्णं निहत्य नरकासुरबधूनां यदि दुःखं प्रशमयसि तत् त्वमेव श्लाघ्य इति विशेषे प्रकृते सामान्यमभिहितम् ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः श्लेषः, समासोक्तिः, सादृश्यमात्रं वा तुल्यात् तुल्यस्य ह्याक्षेपे हेतुः । क्रमेणोदाहरणम्.

पुंस्त्वादपि प्रविचलेत् यदि, यद्यधोऽपि
यायात्, यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयम्
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥ [ श्लो० हे० ]

---

टीकार्थः स्पष्ट एव प्रतियातनं निर्यातनम् । अत्र श्रीकृष्णहनने वैरनिर्यातनात् धन्यतया प्रस्तुते धन्यविशेषे कालयवने यत्तद्भ्यां सामान्यमुक्तमित्याह ।

अत्रेति श्लेष इति । अप्रकृतवाचकशब्दश्लेष इत्यर्थः । समासोक्तिरिति समासोक्तिच्छायेत्यर्थः अप्रकृतकथनेनैवात्र प्रकृतप्रत्यायनादेतद्वैपरीत्यघटितायाः समासोक्तेरसम्भवात् छायैव तच्छाया । च प्रकृतान्वितविशेषणवत्त्वात्सादृश्यमात्रमिति । मात्रपदादुभयान्वितविशेषणवद्व्यवच्छेदः श्लेषे तदुदाहरति ।

पुंस्त्वादपीति । सपत्नापहृतं राज्यमुद्धर्तुं कश्चिन्नृपमुद्दिश्य जयतस्तन्मन्त्रिण उक्तिरियम् । पुंस्त्वात् पुरुषभावात् यदि प्रविचलेत् स्त्री यदि भवेदित्यर्थः । तथाऽधः पातालमपि यदि यायात् तथा प्रणयने याचने याचननिमित्तं यदि महान्न स्यात् खर्वः स्यात्तदपि विश्वं संसारमुद्धरेदितीदृशीयं दिक् अयं प्रकारः केनाप्यनिर्वचनीयेन पुरुषोत्तमेन सर्वपुरुषश्रेष्ठेन नारायणेन प्रकटिता दर्शिता असुरापहृतं विश्वमुद्धर्तुं नारायणेन मोहिनीरूपस्त्रीत्वप्राप्तिः जलप्लुतं विश्वमुद्धर्तुं वराहमूर्त्या पातालगमनात् वलिदैत्यापहृतं विश्वमुद्धर्तुं पादत्रयभूमियाचननिमित्तं वामनमूर्त्या खर्वत्वप्राप्तिः । अत्र प्रकृतनारायणकथनात् श्लिष्टविशेषणवशात् प्रकृतराजप्रत्यायनं तथाहि पुंस्त्वात् पौरुषात् यदि प्रविचलेत् यदि अधो नीचत्वमपि यायात् याचननिमित्तं यदि महिमशून्योऽपि स्यात् तदपि स्वयं सपत्ना-

येनास्यभ्युदितेन चन्द्र ! गमितः क्लान्तिं, रवौ तत्र ते
युज्येत प्रतिकर्त्तुमेव, न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि, ततः किं लज्जसे नो मनाक् ?
अस्त्वेवं जड़धामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ [स॰ हे॰]

आदाय वारि परितः सरितां मुखेभ्यः,
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतञ्च, वड़वादहने हुतञ्च
पातालकुक्षिकुहरे विनिवेशितञ्च ॥ [सा॰ हे॰]

---

पद्धतं विश्वमभ्युद्धरेदित्ययं प्रकारः केनाप्यन्येन पुरुषश्रेष्ठेन प्रकटितः तथाच भवतापि तादृशभावेन स्वराज्यमुद्भ्रियतामिति भावः। न चात्र समासोक्तिच्छायापीति वाच्यम्। विशेष्यवाचकपुरुषोत्तमपदस्याप्यत्र श्लिष्टत्वेन तच्छायाया अभावात् नाप्युपमाध्वनित्वं प्रकृतस्यैवात्र व्यङ्ग्यत्वादप्रकृतोपमान एव तत्त्वात्। समासोक्तिच्छायामाह।

येनासीति। हे चन्द्र ! अभ्युदितेन येन रविणा क्लान्तिं गमितोऽसि तत्र रवौ ते प्रतिकर्त्तुमेव युज्येत न पुनस्तस्यैव पादानां रश्मीनामिव चरणानां ग्रहः कृष्णपक्षे चन्द्रस्य सूर्य्यरश्मिप्रवेशात् यदि क्षीणेन त्वया एतदनुष्ठितं तत् किं मनागपि नो लज्जसे इदमप्यस्तु यद्व्योम्नि विस्फुर्ज्जसे निर्लज्जतया दीप्यसे इदन्तु तव जड़धामता शीततेजस्तैव वाच्यतासम्बन्धेन जड़पदाश्रयता। अत्र शत्रुपदसेविनो निर्लज्जतया देदीप्यमानस्य पुरुषस्याप्रकृतचन्द्रवर्णनात् प्रतीतिः तत्र चोभयान्विताभ्युदयादिविशेषणाद्विशेष्यचन्द्रपदस्याश्लिष्टत्वाच्च समासोक्तिच्छाया हेतुः पादग्रहांशे तु श्लेष एव। सादृश्यमात्रे त्वाह।

आदायेति। दुरर्णवेन दुर्वृत्तेनार्णवेन अत्र सर्वस्वाकृष्टधनस्य असद्व्ययिनः पुंसः प्रतीतिस्तत्र च वारिग्रहणादेरर्णव एवान्वयान्न समासोक्तिच्छाया हेतुः किन्तु तदाक्षिप्तं परत आकृष्टोपादेय वस्तुकत्वरूपविशेषणवत्त्वमेव। सादृश्यमात्रेण व्यञ्जनञ्च क्वचिद्वाच्यार्थे व्यङ्ग्यार्थाभेदानारोपात् क्वचिद्वाच्यार्थे व्यङ्ग्यार्थाभेदारोपात् क्वचित्तु विशेषणविशेष्यांशान्यतरारोपादित्याह इयञ्चेति। तत्र तदभेदानारोपे यद्यप्यादायेत्यादिकमेवोदाहरणं तथापि सौलभ्यादन्यदप्युदाहरति।

इयञ्च काचित् वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति।

यथा,

अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः

पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते।

आहो ! रिक्तः कथमपि भवेदेष दैवात्, तदानीम्

को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः॥

काचिदध्यारोपेणैव। यथा,

कस्त्वं भोः ? कथयामि दैवहतकं मां विद्धि शाकोटकम्,

वैराग्यादिव वक्षि ? साधु विदितं, कस्मादिदं ? कथ्यते।

वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते,

न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे॥

क्वचित्तु अंशेष्वध्यारोपेण। यथा,

---

अब्धेरिति। अम्भसा जलेन स्थगितावाच्छादितौ भुवनाभोगपातालकुक्षी येन तादृशस्याब्धेः लङ्घनेऽपि इह लोके पोतोपायात् बहन्नौकोपायात् बहवो जनाः क्षमन्ते आहो पक्षान्तरे अयमेष दैवात् कथमपि रिक्तो जलशून्यो भवेत् तदा नाम सम्भावनायाम् अस्यावटकुहरस्य गर्तगुहाया आलोकनेऽपि कः कल्पः समर्थः स्यात् अत्र सम्पत्काखेऽधिगम्यो विपत्कालेऽदृश्यश्च पुरुषः सादृश्यमावादाक्षः वाच्ये समुद्रे तस्य च लाभादारोपः। वाच्यार्थे व्यङ्ग्यार्थभेदारोपे लाह।

काचिदिति। पथिकशाकोटकयोरुक्तिप्रत्युक्ती इमे तत्र।

कस्त्वं भो इति। पथिकस्य कथयामित्यादि शाकोटकमित्यन्तं शाकोटकस्य वचोत्यन्तं पथिकस्य साधु विदितमिति शाकोटकस्य कस्मादिति पथिकस्य इदमित्यादि सर्वं शाकोटकस्योक्तिः न च्छायापीति भूतावासत्वात्। अत्र दित्सुरलब्धार्थिकः पुरुषः सादृश्यव्यङ्ग्यः शाकोटकेऽभेदेनारोप्यते तदारोपं विना शाकोटकस्य वक्तृत्वाप्रतीतेः न च व्यङ्ग्यप्रत्यायको वाच्यार्थः। प्रतीतव्यङ्ग्यार्थारोपेणैव च प्रत्यायक इत्यन्योन्याश्रय इति वाच्यम्। आदौ उक्तिप्रत्युक्तिमहिम्ना मनुष्यत्वे प्रतीतस्य व्यङ्ग्यार्थस्य वाच्यशाकोटके आरोपे दित्सुत्वादिना रूपेण पश्चाद्व्यञ्जनेऽन्योन्याश्रयाभावात्।

सोऽपूर्वो रसनाविपर्य्ययविधिस्तत्कर्णयोश्चापलम्,
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे ! यद्वारणोऽद्याप्यसौ
अन्तःशून्यकरो निषेव्यत इति भ्रातः ! क एष ग्रहः ? ॥

अत्र रसनाविपर्य्यासः शून्यकरत्वञ्च भ्रमरस्यासेवने न हेतुः, कर्णचापलन्तु हेतुः, मदः प्रत्युत सेवने निमित्तम् ॥

**निगीर्य्याध्यवसानन्तु प्रकृतस्य परेण यत् ।**
**प्रस्तुतस्य यदन्यत्वं, यद्यर्थोक्तौ च कल्पनम् ॥१३॥**
**कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्य्ययः ।**
**विज्ञेयातिशयोक्तिः सा,**

उपमानेनान्तर्निगीर्णस्य उपमेयस्य यदध्यवसानं सैका ।

यथा,

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

---

सोऽपूर्व इति । अग्निशापाद्वा वनस्य रसनापरावृत्तिः मदेन विस्मृत स्वपरप्रकारा अस्य दिक् । अत्र कर्णचापलांशमात्रे भ्रमरस्य वारणसेवनानौचित्योक्तिसम्भवा-त्तदंशे व्यङ्ग्यपुरुषौ भ्रमरवारणयो र्नारोप्येते अन्यत्रांशे तु भ्रमरस्य वारणसेवनानौ-चित्यौक्त्यनुपपत्तेस्तदंशे सेवकसेव्यपुरुषौ भ्रमरवारणयोरारोप्येते तत्र रसनाविपर्य्ययांशे दुर्मुखः कर्णचापलांशे कर्णकथास्वपराग्राही दृश्यांशेऽविवेचकः शून्यकरत्वांशे निर्धनः पुरुषो वारणे सेवकपुरुषश्च भ्रमर आरोप्यते । चतुर्विधमतिशयोक्त्यलङ्कार-माह ।

निगीर्य्येति । तत्र निगीर्य्यादिरूपामेकामतिशयोक्तिं व्याचष्टे ।

उपमानेनेति । उपमानं परपदार्थः उपमेयं प्रकृतपदार्थः । तस्योपमानेनान्त-र्निगरणं तदुक्तिमहिम्नैव उपमेयस्य लाभे स्वशब्देनानुक्तिः ।

कमलमनम्भसीति । कुवलये नीलोत्पलद्वयं तानि कमलनीलोत्पलद्वयानि ।

अत्र सुखादि कमलादिरूपतया अध्यवसितम्।

यच्च तदेवान्यत्वेनाध्यवसीयते, सा अपरा। यथा,

अस्सं लडहत्तणअं अस्सव्व अ काइ वत्तणच्छाआ।
सामा सामस्सपआवइणो रेहव्वि अ ण होइ॥

'यद्यर्थस्य' यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम् अर्थात् असम्भविनोऽर्थस्य, सा तृतीया। यथा,

राकायामकलङ्कञ्चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥

कारणस्य शीघ्रकारितां वक्तुं कार्य्यस्य पूर्वमुक्तौ चतुर्थी। यथा,

हृदयमधिष्ठितमादौ मालव्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभ! लोचनविषयं त्वया भजता॥

---

अत्रोपमानीभूतकमलादेरुक्तौ वा अनुक्तौ मुखादेस्तदभेदेन प्रतीतिः साध्यवसाये तु विरोधालङ्कार एव। प्रस्तुतेत्यादिद्वितीयामतिशयोक्तिं व्याचष्टे यच्चेति। अन्यमिति।

अन्यल्लावण्यमन्येव कापि वर्त्तनच्छाया।
श्यामा सामान्यप्रजापते रेखैवच न भवतीति॥ संस्कृतम्।

लडहत्तणअं लावण्ये देशी वर्त्ततेऽनेनेति वर्त्तनं शरीरं श्यामा शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला। सर्वावयवशोभाढ्या सा श्यामा परिकीर्त्तिता इति परिभाषितो नायिकाविशेषः। रेखा शिल्पं अत्र लावण्यादौ तदन्यत्वेनाध्यासः। तृतीयामतिशयोक्तिमाह।

यद्यर्थस्येति। राका पौर्णमासी तत्रामृतांशोश्चन्द्रस्य वपुर्यदि अकलङ्कं भवेदित्यर्थः। साम्यं स्वसमानान्तरसत्त्वं स एव पराभवः। कार्य्यकारणयोरित्यादि चतुर्थीमतिशयोक्तिमाह।

कारणस्येति पूर्वमुक्तौ पूर्वोत्पन्नत्वेनोक्तौ नतूक्तौ पूर्वत्वम्।

हृदयमित्यादि। अग्निमित्रे राजनि दूत्या उक्तिरियम्। मालव्या मालवराजपुत्र्या लोचनविषयं तस्या लोचनविषयतां भजता त्वया चरमं हृदयमधिष्ठितमित्यन्वयः। अत्र राजानं दृष्ट्वा मालवी कामबाणभिन्नहृदया जाता इत्यतो राज्ञा तदीय-

प्रतिवस्तूपमा तु सा ॥ १५ ॥

सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

साधारणो धर्म उपमेयवाक्ये, उपमानवाक्ये च कथितपदस्य दुष्टतयाऽभिहितत्वात् शब्दभेदेन यत् उपादीयते, सा वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा । यथा,

देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥

यदि दहत्यनलोऽत्र किमद्भुतम् यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः, प्रकृतिरेव सतामविषादिता ॥

इत्यादि मालाप्रतिवस्तूपमा द्रष्टव्या । एवमन्यत्रापि अनुसर्त्तव्यम् ।

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥१६॥

---

हृदयाधिष्ठानं कारणं कामबाणेन हृदयाधिष्ठानं कार्यं तयोः पौर्वापर्यविपर्ययेणोत्पन्नत्वं नोक्तं बोधितार्थोप्यहार्य्यज्ञानं जनयति कारणस्य शीघ्रकारित्वं तद्व्यङ्ग्यम् । अत्र चक्रवर्त्ती कार्यकारणयोः समकालत्वे नोक्तावपि पौर्वापर्यविपर्ययादयमलङ्कारः यथा ।

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम् ॥

इत्यत्रेत्याह तन्न । समकालोत्पत्तिकत्वं धुनोति चासिं तनुते च कीर्त्तिमित्यादाविव समुच्चयालङ्कारस्यैव वक्ष्यमाणत्वात् । प्रतिवस्तूपमालङ्कारमाह । प्रतिवस्त्विति सामान्यस्य साधारणधर्मस्य द्विधा शब्दभेदेन वाक्यार्थस्य उपमानवाक्यार्थस्य ।

देवीभावमिति । देविन्दीभावं प्राप्नुवन्तीं द्रौपदीं शोचतां पाण्डवानामियमुक्तिः देवी कृताभिषेका परिवारपदं परिचारिकाव्यवसायं परिभोग उपभोगः स्वकृत्यार्थे तदुपयोगः दैवतरूपं देवताप्रतिमा तदङ्कितं माल्यादिरत्नम् । अत्र देवी उपमेया [illegible] कथमित्यादि ।

एतेषां साधारणधर्मादीनां दृष्टोऽन्तः निश्चयो यत्र स दृष्टान्तः।

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः॥

एष साधर्म्येण। वैधर्म्येण तु

तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः।
भटाः परेषां विशरारुतामगुः दधत्यवाते स्थिरतां हि पांशवः॥

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्॥१७**

---

खल्वित्यादिशब्दभेदेनोपात्तम्। मालारूपामिमामाह दृष्टान्त इति। एतेषां सर्वेषां साधारणधर्मोपमेयोपमानानां प्रतिबिम्बनं प्रणिधानेनैव गम्यत्वम्।

त्वयि दृष्ट एवेति। निर्वाति ज्वालाशून्यं भवति तत्र दृष्टान्तमाह।

आलोके हीति। आलोके दर्शने हिमांशो दृष्टे सतीत्यर्थः। कुमुद्वतीनायिकाया हिमांशुनायकस्य कुमुदं मनस उपमानं निर्वाणविकासौ भावाभावरूपो नापातती मनःकुमुदयोः साधर्म्यतया भासते ततश्च मनःकुमुदयोर्नायिकाकुमुद्वत्योस्तद्‍दृष्टयोर्नायकहिमांशोरुपमेयोपमानभावो नापातती भासते प्रणिधानेन तु निर्वाणविकासाभ्यां तयोः स्फीतत्वेन लब्धे सर्वषामेवोपमानभावः प्रतीयत इति भवति प्रतिबिम्बनम्। प्रतिवस्तूपमायान्तु उपभोगयोग्यत्वमविरुद्धमुपात्ताभ्यां शब्दाभ्यामापातत एव प्रतीयत इत्यतो न तत्र प्रणिधानगम्यत्वम्। एष साधर्म्येणेति। दर्शितोदाहरणे द्वयोः स्फीततारूपतया पर्य्यवसितेन साधर्म्येणायमलङ्कारः प्रदर्शितः वैधर्म्येण चायं भवतीत्याह वैधर्म्येण चेति तदुदाहरति।

तवाहव इति। साहसकर्मणा शर्म यस्य तादृशस्य तवाहवे युद्धे परेषां शत्रूणां भटा वीरा विशरारुतां दिशि विक्षिप्तत्वमगुः प्रापुः तत्र दृष्टान्तमाह दधतीति। अत्र स्थिरताविशरारुते परस्परवैधर्म्ये सति पांशूनामतिविशरारुता प्रणिधानेनैव गम्या इत्यतः पांशुभटयोरुपमानोपमेयभावप्रतिबिम्बनम्। दीपकालङ्कारमाह।

सकृदिति। वृत्तिरुपादानं प्रकृताप्रकृतात्मनामुपमानोपमेयानां धर्मस्य साधा-

प्राकरणिकाप्राकरणिकानाम् अर्थात् उपमानोपमेयानां धर्मः क्रियादिः, एकवारमेव यदुपादीयते, तत् एकस्थस्यैव समस्तवाक्यदीपनात् दीपकम्। यथा,

किवणाणं धणं णाआणं फणमणी केसराइं सीहाणम्।
कुलवालिआणं अत्थणा कुतो च्छिप्पन्ति अमुआणं॥

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम्। यथा,

खिद्यति कूणति वेल्लति विचलति,
निमिषति विलोकयति तिर्य्यक्।
अन्तर्नन्दति चुम्बितुमिच्छति
नवपरिणया वधूः शयने॥

**मालादीपकमाद्यञ्चेद् यथोत्तरगुणावहम्।**

पूर्वेण पूर्वेण वस्तुना उत्तरमुत्तरं चेदुपक्रियते, तत् मालादीपकम्। यथा,

---

रणधर्मस्य सकृदुपादानमित्यर्थः। अत्रोपमाप्रतिपादकेवाद्यनुपादानेऽसमासे च सतीति बोध्यम्। तेन चन्द्र इवाह्लादनं मुखं चन्द्रमुखोत्यत्र च नातिव्याप्तिः। किवणाणेति।

कृपणानां धनं नागानां फणमणिः केशरशिखाः सिंहानाम्।
कुलपालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥ इति संस्कृतम्।

अमृतानां मरणमप्राप्तानाम्। तत्र कृपणधनमुपमेयं नागफणमण्यादय उपमानानि अशक्यस्पर्शत्वं साधर्म्यं सकृदुपात्तम् एवं कृपणादीनामप्यमृतत्वम्। सैव क्रियास्विति बह्वीषु क्रियासु कारकस्य सैव सकृद्वृत्तिरेवेत्यर्थः तदुदाह रति।

खिद्यतीति। कूणति सङ्कुचति वेल्लति कम्पते विचलति शय्यातो बहिर्भवति निमिषति चक्षुर्मुद्रयति विलोकयतीत्यादित्रयं किञ्चिदुद्भिन्नयौवनात् अत्र बह्वीषु क्रियासु वधूः कर्तृकारकमेकम्। मालादीपकालङ्कारमाह।

मालेति। आद्यमित्यत्र आद्याद्यमित्यर्थः आद्यं प्रथमोपात्तं वस्तु यद्युत्तरस्य गुणावहमुत्तरस्य क्रियाजनकमित्यर्थः। उपकारो हि क्रियाजननम्।

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते,
देवाकर्णय येन येन सहसा यत् यत् समासादितम् ।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलम्,
तेन त्वं भवता च कीर्त्तिरतुला, कीर्त्त्या च लोकत्रयम् ॥

**नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥१८॥**

नियतानां प्राकरणिकानामेव, अप्राकरणिकानामेव वा ।

क्रमेणोदाहरणम्,

पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसञ्च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥ [प्रा०]

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥ [अप्रा०]

---

सङ्ग्रामाङ्गणेति । अत्राद्येन कोदण्डरूपवस्तुना उत्तरेषां शराणां साम्मुख्यासादनक्रियाजननं एवं शरैररिशिर इत्यादि रीतिः । अत्र चाभवन्मतयोगदोषपरिहाराय द्वितीयचरणपराहतिः आकर्णनक्रियानुपादानात्तदीयकर्माकाङ्क्षाविरहेण साम्मुख्यासादनान्वयस्य निराबाधत्वात् । तुल्ययोगितालङ्कारमाह ।

नियतानामिति । प्राकरणिकत्वेनैवाप्राकरणिकत्वेनैव वा नियतानामित्यर्थः । तेन प्राकरणिकाप्राकरणिकमिश्रणे दीपकमेव पर्य्यवस्यति ।

पाण्डुक्षाममिति । मालतीं प्रति लवङ्गिकाया उक्तिरियम् । क्षामं क्षीणं हे सखि ! तव पाण्डुक्षामवदनादिकं कर्त्तृ तव हृदन्तः क्षेत्रियरोगमस्मिन् क्षेत्रे शरीरेऽचिकित्स्यं रोगमावेदयति ज्ञापयति सरसं सस्वेदद्रवम् । अत्र प्रकृतमालतीविप्रलम्भानुभावत्वेन प्रकृतानां पाण्डुक्षामवदनादीनाम् आवेदयतीत्येकक्रियान्वयः ।

कुमुदकमलेति । कुमुदादीनामालिः श्रेणी ललितविलासजुषोऽस्या दृशः पुरः का निकृष्टेवेत्यर्थः । अत्राप्रकृतानामेव कुमुदादीनां का इत्येकधर्मान्वयः । अमृतमिति तदाननस्य उपमानीकरणरूपे एकव्यवसायेऽमृतादिकं प्रतिहतम् अयुक्ततया बहिष्कृतम् । अत्राप्यप्रकृतानामेव अमृतादीनां प्रतिहतमित्येकक्रियान्वयः । व्यतिरेकालङ्कारमाह ।

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।**

अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते सत्यम् ।
विरम प्रसीद सुन्दरि ! यौवनमनिवर्त्ति यातन्तु ॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केनचिदुक्तम् तदयुक्तम् अत्र यौवनगतास्थैर्याधिक्यं हि विवक्षितम् ।

**हेत्वोरुक्तावनुक्तीनां त्रये, साम्ये निवेदिते ॥ ९९ ॥**

**शब्दार्थाभ्यामथाक्षिप्ते, श्लिष्टे तद्वत्त्रिरष्टधा ।**

व्यतिरेकस्य हेतुः उपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणं, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते आर्थेन च क्रमेणोक्ताश्चत्वार एव भेदाः, आक्षिप्ते

---

उपमानादिति । उपमानादन्यस्योपमेयस्य व्यतिरेक आधिक्यमित्यर्थः । स एव व्यतिरेकनामैव स इत्यर्थः । क्षीणः क्षीण इत्यादावुपमानस्य चन्द्रस्य उपमेययौवनापेक्षया आधिक्यमस्मादुपमेयापेक्षया उपमानस्याधिक्येऽप्ययमलङ्कार इति केषाञ्चिन्मतं निराकरोति ।

क्षीण इति विरमेति । मानादिरमेत्यर्थः । यातं गतं यौवनन्तु अनिवर्त्तीत्यर्थः । अत्र चन्द्रस्योपमानस्य पुनः पुनर्वृद्ध्या अतादृशादुपमेयाद्यौवनादाधिक्यमिति तेषां मतः । वस्तुतस्तूपमेयस्य यौवनस्यैवाधिक्यमत्रापि घटयति अत्रेति विवक्षितम् अत्रास्थैर्यं तत्र पुनः पुनर्वृद्धिमच्चन्द्रमपेक्ष्यानिवर्त्तिनो यौवनस्यैवाधिक्यमित्यर्थः । अस्य त्रिगुणाष्टरूपं चतुर्विंशतिप्रभेदत्वमाह ।

हेत्वोरिति । उपमानेऽपकर्षस्य उपमेये उत्कर्षस्य यौ हेतू ज्ञापकौ तयोर्द्वयोरप्युक्तिरेकतरस्यानुक्तिर्द्वयोर्युगपदनुक्तिश्च इत्यनुक्तित्रयं तच्चतुष्टयस्य एकैकस्मिन् साम्ये समानधर्मसम्बन्धरूपे औपम्ये शब्देनार्थेन वा निवेदिते प्रतिपादिते इत्यर्थः । उपमालङ्कारोक्तरीत्या उपमायाः श्रौतत्वे आर्थत्वे वा इत्यर्थः । अथ समुच्चये उपमानोपमेयभावे आक्षिप्ते च इत्यर्थः । इत्थं हेतुद्वयोक्तानुक्तित्रयाभ्यां चतुर्विधस्योप-

चौपम्ये तावन्त एव, एवं द्वादश। एते श्लेषेऽपि भवन्तीति चतुर्विंशति र्भेदाः। क्रमेणोदाहरणम्,

असिमात्रसहायस्य प्रभूतारिपराभवे।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः॥ [अस्म० शा०]

अत्रेव तुच्छेति महाधृतेरित्यनयोः पर्य्यायेण युगपद्वाऽनुपादानेऽन्यत् भेदद्वयम्, एवमन्येष्वपि द्रष्टव्यम्। अत्रेवशब्दस्य सद्भावाच्छाब्दमौपम्यम्।

असिमात्रसहायोऽपि प्रभूतारिपराभवे।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः॥ [अस्म० शा०]

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम्।

इयं सुनयना दासीकृततामरसश्रिया।

---

सामीपमेयभावस्य श्रौतत्वार्थत्वाक्षिप्तत्वैस्त्रैगुण्ये द्वादशविधत्वमुक्तम् अतएव द्वादश श्लेषेऽपि भवन्तीत्यतस्त्रिगुणाष्टरूपचतुर्विंशतिरित्याह निरष्टघेति तत्तद्भात् श्लेषः क्वचित्साधर्म्यांशे क्वचिच्च व्यतिरेकप्रतियोग्यंशे बोध्यः। एवमेव व्याचष्टे व्यतिरेकस्येति एकतरस्येति अनेनानुक्तिद्वयमुक्तं द्वयोरनुक्त्यैकेत्यनुक्तित्रयं क्रमेणोक्ताविति इत्थं युक्तौ सत्यां क्रमेण चत्वारश्चत्वार इत्यर्थः। चत्वार इत्यत्र वीप्सार्थस्य विवक्षितत्वात् तेनाष्टावित्यर्थः। तावन्त इति चत्वार इत्यर्थः। तेन द्वादशक्रमेणेति हेतुद्वयोक्त्यनुक्तित्रयक्रमेण शब्दार्थाक्षिप्तौपम्यक्रमेणेत्यर्थः।

असिमात्रेति। प्रभूतानामरीणां पराभवे कृते सतीत्यर्थः स्मयो गर्वः। अत्र अन्यतुच्छजन उपमानं राजा उपमेयः उत्कर्षनिकर्षहेतो र्महाधृतित्वतुच्छतयो-रुक्तिः इवकाराच्च साम्यं श्रौतम्।

अत्रैवानुक्तित्रयं दर्शयति। अत्रेति एवमिति एवं रीत्या आर्थौपम्याक्षिप्तौपम्ययोः श्लेषस्थलीययोश्च हेतुद्वयोक्त्युदाहरणमेव दातव्यं तस्यैवानुक्तित्रयमूह्यमित्यर्थः। हेत्वोरुक्तावार्थौपम्यमाह।

असिमात्रेति। एवमिति अत्र साधारणधर्मविशिष्यकत्वाभावात्तन्निष्ठसम्बन्धबोधिकायाः षष्ठ्याः सप्तम्या वाऽसम्भवेन तदन्ताद्वतेरनुत्पत्त्या इवार्थे वतेरभावादर्थमेवौपम्यम् अनुक्तित्रयञ्चात्रापि पूर्ववद्बोध्यम्। हेत्वोरुक्तावाक्षिप्तौपम्ये उदाहरति।

आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ [अश्ले॰आक्षि॰]

अत्रेवादितुल्यादिपदविरहेण आक्षिप्तैवोपमा।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः।

अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥ [श्ले॰श्रा॰]

अत्र वार्थे वतिः, गुणशब्दः श्लिष्टः, शाब्दमौपम्यम्।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः।

न निशाकरवज्जातु कलावैकल्यमागतः॥ [श्ले॰श्रा॰]

अत्र तुल्यार्थे वतिः, कलाशब्दः श्लिष्टः। मालाप्रतिवस्तूपमावन्मालाव्यतिरेकोऽपि सम्भवति, तस्यापि भेदा एवमूह्याः- दिङ्मात्रन्त्वोदाह्रियते, यथा,

---

इयमिति। दासीकृता तामरसस्य पद्मस्य श्रीर्येन तादृशेनाकलङ्केनाननेन कलङ्किनमिन्दुमियं सुनयना जयतीत्यर्थः। श्रियेति बहुव्रीहौ भासितपुंस्कत्वात् पुम्वद्भावः अत्राकलङ्कित्वयो र्हेत्वोरुक्तिः अनुक्तिद्वयमत्रापि पूर्ववद्बोध्यम्। एतान् द्वादश श्लेषेऽप्याह।

जितेन्द्रियतयेति। सम्यग्विद्यावृद्धिनिषेवित्वे जितेन्द्रियत्वं हेतुः जितेन्द्रियत्वे चातिगाढगुणत्वं हेतुः भङ्गुरा नश्वराः।

अत्रेवार्थ इति। षष्ठ्यन्तादुत्पन्नत्वात् गुणशब्द इति अब्जपक्षे गुणस्तन्तुः पुरुषपक्षे विनयादिः गुणवत्त्वरूपसाधर्म्यांशेऽत्र श्लेषः गुणगतातिगाढत्वभङ्गुरत्वे उत्कर्षनिकर्षहेतू हेत्वनुक्तिद्वयं पूर्ववद्बोध्यम्। हेत्वीकृतार्थौपम्ये श्लेषे आह।

अखण्डेति। मण्डलं राज्यं विम्बञ्च कला वैदग्ध्यं चन्द्रषोडशांशश्च। तुल्यार्थ इति धर्मविशिष्यकलाभावात् षष्ठ्यन्तात्तदनुत्पत्त्या तेन तुल्यमित्यर्थे तदुत्पत्तेः श्लिष्ट इति कलावत्त्वसाधर्म्यांशे श्लेषः कलावैकल्याखण्डमण्डलवत्त्वे निकर्षोत्कर्षे हेतू तयोरनुक्तिद्वयमेवमूह्यम्। इत्यमार्थौपम्यं समाप्य तत्रैव मालासम्भवं दृष्ट्वा तदुदाहर्त्तुमाह।

अत्रेति। मालाव्यतिरेकोऽपीति आर्थौपम्यमालाव्यतिरेकोऽपीत्यर्थः। अयमेवोदाहरणक्रमः व्युत्क्रमलिखनन्तु क्वचित्पुस्तके हेयमेव आर्थौपम्यं समाप्यैव तन्मालाया दर्शयितुमौचित्यात्।

हरवन्न विषमदृष्टिर्हरिवन्न विभो! विधूतविततवृषः।
रविवन्न चातिदुःसह करतापितभूः कदाचिदसि॥

अत्र तुल्यार्थे वतिः, विषमादयश्च शब्दाः श्लिष्टाः। [श्ले० श्रा० मा०]

नित्योदितप्रतापेन त्रियामामीलितप्रभः।
भास्वतानेन भूपेन भास्वानेष विनिर्जितः॥ [श्ले० आक्षि०]

अत्र इवाक्षिप्तैवोपमा, भास्वतेति श्लिष्टः। यथा वा

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बम्
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम्।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाननमङ्गनानाम्॥ [श्ले० अ। क्षि०]

---

हरवदिति। विषमदृष्टिरयुग्मदृष्टिस्त्रिलोचनः त्वं न तादृशः सानुरागं विना रागस्वरूपविषमदृष्टिविरहात् विभो इति सम्बोधनं हरिः कम्पितवृषासुरः त्वं तादृशो न विततस्य विस्तृतस्य वृषस्य सुकृतस्य त्वयाऽचालितत्वात् रविर्दुःसहकरतापितभूतलः त्वं न तादृशो दुःसहेन करेण राजग्राह्यभागेन त्वया भूमिष्ठलोकस्यातापितत्वात्।

अत्र व्यतिरेकप्रतियोगिविषमाद्यंशे श्लेषः। अत्र निकर्षहेतोर्विषमदृष्टित्वस्य श्लेषादेरभावः उत्कर्षहेतुस्तु समदृष्टित्वमनुक्तं तदुक्तौ तु हेतुद्वयोक्तिः निकर्षहेत्वनुपादानन्तु अत्र न सम्भवति तदाश्लेषासम्भवात् एवमिति अनया हेतुद्वयोक्त्यनुक्तिचयरीत्या। श्लेषे हेतुद्वयोक्तावाक्षिप्तौपम्ये आह।

नित्योदितेति। भास्वता दीप्यमानेनानेन भूपेन भास्वान् रविरेव निर्जित इत्यर्थः। निर्जये हेतुमाह त्रियामेति। अत्र हेतुद्वयोक्तिः एवं जातीयस्येति पृथगुपादाने उभयत्रोपादाने भास्वत्पदस्योभयत्रोपात्तत्वात् श्लिष्टपदमन्यत्रैकत्रैव प्रयुज्यते तथाच तद्भ्यादपि प्रभेदान्तरसम्भवो बोध्यः।

स्वच्छात्मतागुणेति। यत्र पुरे रजनीषु अतीव पिबतां यूनां तृष्णां मधु कर्तृ जहार अङ्गनानामाननन्तु कर्तृ न जहार युवानो मधुपाने वितृष्णा बभूवुर्नत्वङ्गनाधरपाने इत्यर्थः। मध्वाननयोर्द्वयोर्विशेषणान्याह स्वच्छात्मेति। स्वच्छस्वभावतागुणेन मधुनेन्दुप्रतिबिम्बोल्लासः आननन्तु स्वच्छस्वभावतागुणेनोल्लसितेन्दुसच्छ-

अत्रेवादीनां तुल्यादीनाञ्च पदानामभावेऽपि श्लिष्टविशेषणाक्षिप्तैवोपमा प्रतीयते। एवं जातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथक् उपादानेऽन्येऽपि भेदाः सम्भवन्ति, तेऽपि अनयैव दिशा द्रष्टव्याः।

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥२०॥**

**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः।**

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीयकार्य्यस्य अशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव यः, स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेपः। क्रमेणोदाहरणम्,

> ए! एहि किं वि कीए वि कए
> णिक्किव! भणामि अलमह वा।
> अविआरिअकज्जारम्भ-
> आरिणी मरउ ण भणिस्सम् ॥ [ व० अ० ]

---

स्वरूपमिति रूपकम्। बिम्बस्येन्दुप्रतिबिम्बस्य प्रभाधारि मधु आननन्तु बिम्बफलप्रभोष्ठम् अक्रबिमित्याद्युभयत्र समानम्।

अत्रेति। उपमानमध्याननयोः। अत्र यदुपभोगे विरसत्वाविरसत्वे निकर्षोत्कर्षौ हेतू अनुक्तौ तद्द्वयोरुक्तावुभयोस्तिः एकतरमात्रोक्तावनुक्तिद्वयम्। आक्षेपालङ्कारमाह।

निषेध इति। वक्तुमिष्टस्यार्थस्यानुक्तस्यैव वा विशेषाभिधित्सया उक्तिनिषेध इत्यर्थः। तदाह वक्ष्यमाणोक्तेति वक्तुमिष्टताया बीजमाह अनुपसर्जनीयकार्य्यस्येति अनुपेक्षणीयप्रतिपादनस्येत्यर्थः। निषेधबीजभूतां विशेषाभिधित्सां व्याचष्टे अशक्येति निषेध इवेति तत्प्रतिपादनस्यानुपेक्षणीयत्वेन निषेधे तात्पर्य्याभावात्। वक्ष्यमाणनिषेधमुदाहरति। ए एहीति।

> ए! एहि किमपि कस्या अपि कृते निष्कृप! भणामि अलमथवा।
> अविचारितकार्य्यारम्भकारिणी म्रियतां न भणिष्यामि ॥ इति।

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनी पल्लवाः।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त! किमनेनोक्तेन न ब्रूमहे॥ [उ० अति०]

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥२१॥**

हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना। यथा,

कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि।
परिवर्त्तते स्म नलिनीलहरीभिरलोलिताप्यघूर्णत सा॥

**विशेषोक्तिरखण्डेषु कारणेषु फलावचः।**

मिलितेष्वपि कारणेषु कार्य्यस्याकथनं विशेषोक्तिः, अनुक्त-

---

ए इति प्राकृते सचिवसम्बोधने अविचारितकार्य्ये त्वयि प्रेमानुबन्धास्थैर्य्या-विचार्य प्रेमानुबन्धकरणम्। अत्र विरहेण तस्या मरणस्याशक्यवक्तव्यत्वाभि-धित्सा। उक्तं निषेधमाह।

ज्योत्स्नेति। शीतांशुकान्तः चन्द्र इति विषादे अन्तर्मानसं मानसस्यान्तः प्रभ-वता सता त्वया कारणभूतेन एते ज्योत्स्नादयः तस्याः स्फुलिङ्गोत्करस्य व्यापाराय दाहाय भवन्तीत्यर्थः। अत्र तस्यास्तापवत्त्वस्यातिप्रसिद्धत्वाभिधित्सा। विभावना-लङ्कारमाह।

क्रियाया इति। अत्रापदीर्पोज्ज्वलं गृहमित्यादेः सङ्ग्रहाय क्रियापदं कारण-मात्रपरम् अतएव सौहृदसानसाङ्गी इत्यत्र अभिलाषकारणस्य रतिपूर्वकालस्याभावे-ऽप्ययमलङ्कारः प्राग्दर्शितः।

कुसुमितलतेति। सा विरहिणी कुसुमितलताभिः रुजं दुःखमधत्त ताभिरह-तापि अत्र कारणस्य हननस्य प्रतिषेधः अलिकुलैः परिवर्त्तते स्म तैरदष्टापि अत्र कारणस्य दंशनस्य प्रतिषेधः। नलिनीसम्बन्धिनीभिर्लहरीभिरघूर्णत ताभिरलोलि-तापि अनान्दोलितापि अत्र कारणस्यान्दोलनस्य प्रतिषेधः। विशेषोक्त्यलङ्कारमा-

विशेषोक्तिरिति अखण्डेष्विति अखण्डितेषु विभावनायामिवानिषिद्धेषु कारणे-

निमित्ता, उक्तनिमित्ता अचिन्त्यनिमित्ता च। क्रमेणोदाहरणम्,

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा॥

[अनु०नि०]

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे।

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न बलं हृतम्॥ [अचि०नि०]

**यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः॥ २२॥**

---

ष्वित्यर्थः। बहुवचनस्याविवक्षितबहुत्वं एककारणोक्तावपि दृष्टत्वाद्वक्ष्यमाणत्वाच्च। फलावच इति फलाभाववच इत्येवं योजना फलाभावकथनमित्यर्थः। इत्तावपि कार्यस्याकथनमित्यत्र कार्यस्याभावकथनमित्येवार्थः। अन्यथाऽनुक्तफलके सर्वत्रैवातिप्रसङ्गापत्तेः उदाहरणेष्वभावप्रतियोगितया फलकथनादव्याप्त्यापत्तेश्च। अनुक्तनिमित्तेति अनुक्ताचिन्त्यनिमित्तेत्यर्थः अचिन्त्यस्य तु सुतरामनुक्तिः निमित्तस्य फलाभावस्य।

निद्रेति। भुजङ्गः कामुकः अत्र निद्रानिवृत्त्यादीनि कारणानि उक्तानि आलिङ्गनतश्चलनस्य फलस्याभावः कथितः तन्निमित्तञ्च रागातिशयश्चिन्त्योऽप्यनुक्तः। उक्तनिमित्तामाह।

कर्पूर इवेति। दग्धोऽपि यो मकरकेतुः जने जने शक्तिमान् दग्धः कर्पूर इव दग्धस्यापि कर्पूरस्य गन्धरसरूपाशक्तिमत्त्वात् तस्मै मकरकेतवे नमोऽस्त्वित्यर्थः। अत्र दाहः कारणं तत्फलस्य शक्त्यभावस्याभावः। शक्तिमत्त्वमुक्तं तन्निमित्तमवार्यवीर्यत्वमुक्तम् अत्रैककारणोक्तावप्युदाहृतत्वात् कारणेष्वित्यत्र बहुत्वविवक्षा बोध्या एवमुत्तरत्रापि अचिन्त्यनिमित्ता।

स एक इति। त्रीणि जगन्ति जयतीत्यन्वयः। अत्र तनुहरणं तत्फलस्य बलहरणस्याभाव उक्तस्तन्निमित्तञ्चाचिन्त्यम्। यथासङ्ख्यालङ्कारमाह।

यथा,

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव ! द्विषाञ्च विदुषाञ्च मृगीदृशाञ्च।
तापञ्च सम्मदभरञ्च रतिञ्च पुष्णन्
शौर्य्योष्मणा च विनयेन च लीलया च॥

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**
**यत्र सोऽर्थान्तरन्यास: साधर्म्येणेतरेण वा॥२३॥**

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत्समर्थ्यते विशेषो वा सामान्येन, सोऽर्थान्तरन्यास:। क्रमेणोदाहरणम्,

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।
पश्यति पित्तोपहत: शशिशुभ्रं शङ्खमपि पीतम्॥ [सा॰सा॰वि॰]

---

यथासङ्ख्यमिति। क्रमेण प्रथमद्वितीयादिक्रमेण क्रमिकाणां तत्क्रमेणैव परेषामप्युक्तानाम्।

एक इति। हे देव! अत्र लोके इदं चित्रं किन्तदित्यवाह। एक इति एकस्त्वं द्विषां चेतसि शौर्य्योष्मणा तापं तन्वन् विदुषां चेतसि विनयेन सम्मदरसं तन्वन् मृगीदृशां चेतसि लीलया रतिञ्च तन्वन् एवं त्रिधा वससि अत्र यथोक्तक्रमेणैव क्रमिकाणां तत्क्रमेणैव कर्मकरणं चेत:सम्बन्धिनां द्विड़ादीनामन्वय:। अर्थान्तरन्यासालङ्कारमाह।

सामान्यं वेति। अन्येन सामान्यप्रतियोगिना इतरेण वैधर्म्येण समर्थ्यते सत्यत्वेन प्रतिपाद्यते साधर्म्यवैधर्म्ये समर्थनीयसमर्थकयो:। तथाच किञ्चिद्धर्मवत्तया उक्तस्य सामान्यस्य तत्सधर्मवता विशेषेण तद्धर्मवत्ताया: सत्यत्वेन प्रतिपादनम् एवं रीत्या विशेषस्यापि सामान्येन तथा प्रतिपादनं तत्त्वमित्यर्थ:। तत्र यथोक्तसामान्यस्य तत्साधर्म्यवता विशेषेण समर्थनमाह।

निजदोषेति। एवकारोऽवाप्यर्थे तथाचातिसुन्दरमपि वस्तु निजदोषावृतमनसां जनानां स्थाने विपरीतं भाति तत्रार्थान्तरं न्यस्यति पश्यतीति। अत्र विपरीतदर्शित्वधर्मवत्तया उक्तं दोषावृतमनस्कसामान्यं दोषवत्वसाधर्म्यवता शङ्खे

सुसितवसनालङ्कारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः।
तदनु भवतः कीर्त्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः॥ [सा॰वि॰सा॰]

गुणानामेव दौरात्म्यात् धुरि धुर्य्यो नियुज्यते।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः॥ [वै॰सा॰वि॰]

अहो हि मे बह्वपराद्धमायुषा,
यदप्रियं वाच्यमिदं मयेदृशम्।
त एव धन्याः सुहृदः पराभवम्
जगत्यदृष्ट्वैव हि ये क्षयं गताः॥ [वै॰वि॰सा॰]

---

पीतत्वदर्शिना पित्तोपहतेन विशेषेण समर्थितं दोषवद्विशेषस्य पित्तोपहतस्य वैधर्म्येण तत्सामान्यमिवद्भूतमिति सत्यप्रतीतेः उक्तरूपस्य विशेषस्य तत्साधर्म्यवता सामान्येन समर्थनमाह।

सुसितेति व्याख्यातमिदम्। दोषोल्लासे अत्र राजदीयमानसुखाधिकरणतया उक्तस्य रात्रिरूपकालविशेषस्य तद्दीयमानसुखाधिकरणतया क्वनासीत्यनेनोक्तेन सुखाधिकरणत्वसाधर्म्यवता कालसामान्येन समर्थनं सर्वदा सुखदातृत्वेन रात्रौ सुखदातृत्वं सत्यमिति प्रतीतेः यथोक्तस्य सामान्यस्य तद्वैधर्म्यवता विशेषेण समर्थनमाह।

गुणानामिति। धुर्य्यो भारवहनसमर्थो जनो धुरि भारवहने नियुज्यते तत्र गुणानामेव दौरात्म्यात् दुःखप्रयोजकत्वमेव दौरात्म्यं तदर्थान्तरं न्यस्यति असञ्जातेति असञ्जातो किणो व्रणचिह्नं यस्य तादृशः स्कन्धः सन् सुखं वहनदुःखरहितं यथा स्यात्तथा स्वपितीत्यर्थः। अत्र धुरि नियुज्यमानत्ववर्ण्यतया उक्तस्य प्राणिसामान्यस्य धुर्य्यत्वविरोध्यात्मकगडित्वरूपवैधर्म्यवता गडिना गवा समर्थनं गडे धुरि नियोगाभावाधीनसुखस्वापिनः गडित्वविधर्मिणो धुर्य्यप्राणिसामान्यस्य धुरि नियोगः सत्य इति प्रतीतेः। यथोक्तस्य विशेषस्य तद्वैधर्म्यवता सामान्येन समर्थनमाह।

अहो हि मे इति। अभिमन्युमरणवार्त्तामर्जुने कथयिष्यतो युधिष्ठिरस्य विषादोक्तिरियम्। [illegible] सुहृत्पराभवदर्शनं

विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः।

वस्तुवृत्तेन अविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः।

जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः २४
क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश।

अभिनवनलिनीकिसलय-
मृणालवलयादि दवदहनराशिः।
[सुभग! कुरङ्गदृशोऽस्याः
विधिवशतस्त्वद्वियोगपविपाते॥ [जा०जा०]

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः।

---

लभ्यते तल्लभ्याधन्यत्ववत्तया प्रतिपादितो वक्त्रा विशेषस्तद्धर्म्यधन्यत्ववता जनसामान्येन समर्थितः अदृष्टसुहृत्पराभवस्य धन्यत्वेन दृष्टतत्कस्याधन्यत्वं सत्यमिति तत्प्रतीतेः। विरोधालङ्कारमाह।

विरोध इति। विरोधो विरोधाभासः यद्वचो यस्योक्तिः अविरोधेऽपि विरुद्धत्वेनोच्यमानोऽर्थ इत्यर्थः। वस्तुवृत्तेनेति वस्तुगत्या इत्यर्थः। तस्य जातिगुणक्रियाद्रव्यविरोधेन दशविधत्वमाह।

जातिश्चतुर्भिरिति। जात्याद्यैश्चतुर्भिरित्यन्वयः। त्रिभिर्गुणादिभिः द्वाभ्यां क्रियाद्रव्याभ्याम्। अत्रोत्तरस्य पूर्वपूर्वेण सह विरोधस्तु न गणितः येन सहजस्य विरोधस्तेनापि तस्य विरोधरूपत्वेन तस्य पृथग्गणनीयत्वेन दर्शनानौचित्यात्। अत्र जाते र्जात्या सह विरोधमाह।

अभिनवेति। हे सुभग! विधिवशतस्त्वद्वियोगस्य पविपाते उपस्थिते कुरङ्गदृशोऽस्या अभिनवेत्यादिकं दवदहनराशिः। अत्र नलिनीदलत्वादिजातीनां दवदहनत्वजात्या सह विरोधभानं दवदहनत्वस्यारोप्यमाणत्वेनावास्तवत्वादविरोधः न चात्र रूपकमेवेति वाच्यम्। नलिनीदलादिशीतलवस्तुषु उष्णदवदहनाभेदस्य विरुद्धतयैव प्रतिभासात्। जाते र्गुणविरोधमाह।

गिरयोऽपीति। जातिक्रियाभिन्नधर्ममात्रमसाधारणमेव गुणो न तु वैशेषिकोक्त

विश्वम्भराप्यतिलघुर्नरनाथ ! तवान्तिके नियतम् ॥ [जा॰गु॰]

येषां कण्ठपरिग्रहप्रणयितां सम्प्राप्य धाराधरः
तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां सङ्गररङ्गसक्तमनसां राज्ञां त्वया भूपते !
पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ [जा॰क्रि॰]

सृजति च जगदिदमवति च
संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो
जनार्दनः सोऽपि चित्रमिदम् । [जा॰द्र॰]

---

एव हे नरनाथ ! तवान्तिके गिर्य्यादयोऽपि नियतमुन्नत्याद्यभाववन्त इत्यर्थः । त्वं गिर्य्यादितोऽप्युन्नत्याद्याधिक्यवानित्यर्थः । उन्नतिश्चोच्चता शौर्य्यसम्पद्विद्यावत्त्वञ्च तत् तवाधिकमित्यर्थः । गाम्भीर्य्यमगाधत्वं सुधीरत्वञ्च लघुत्वममहत्त्वं त्वन्महत्त्वापेक्षया-ऽमहत्त्ववतीत्यर्थः । अत्र गिरित्वादिजातेरुन्नत्याद्यभावे गुणे विरोधभानम् उन्नत्याद्यभावस्यारोप्यमाणत्वेन न विरोधः । जातेः क्रियाविरोधमाह ।

येषामिति । हे भूपते ! येषां राज्ञां कण्ठपरिग्रहणप्रणयितां सम्प्राप्य स प्रसिद्धस्तीक्ष्णो धाराधरः खड्गोऽनुरज्यते रुधिररक्तो भवति कमपि स्नेहं रुधिर-स्निग्धत्वं प्राप्नोति सङ्गररूपरङ्गासक्तमनसां तेषां राज्ञां त्वया पांशूनां पटलैः प्रसाधनविधिर्मण्डनविधानं निर्वर्त्यते इतीदं कौतुकमित्यर्थः । कौतुकञ्च स्नेहलभ्यार्थे-मादायैव । तथाहि यत्सङ्गात्तीक्ष्णस्य परुषस्यापि अनुरागिता सस्नेहता च नित्यप्रस-क्तानां तेषामनुरागः स्नेहोचितव्यवहारस्यैवौचित्येन पांशुभिः प्रसाधनात् कौतुक-मित्यर्थः । छिन्नानां भूमिपातेन पांशुलिप्तत्वात् । अत्र राजत्वजातेः पांशुप्रसाधन-क्रियया विरोधभानं मृतानां तथात्वेन चाविरोधः । अत्र परुषत्वगुणस्नेहप्राप्त्योश्च विरोधः । जाते र्द्रव्यविरोधमाह ।

सृजतीति । यत्र द्रव्ये जात्यसम्भवस्तत्र द्रव्यस्य जात्यादिना तादात्म्येन विरोधो बोध्यः । यो जनार्दनो हेलयैव अयत्नेनैव इदं जगत् सृजति इत्यादि सोऽप्यवसरवशतः शफरः प्रोष्ठीमत्स्यरूप इत्यर्थः । शफराकारत्वेन रोहित-मत्स्याभावस्यैवात्र शफरत्वेनोक्तिस्ततो हरिः रोहितमत्स्यरूपोऽपि हरिवंशे रोहित-

सन्ततं मुसलसङ्गा
बहुतरगृहकर्मघटनया नृपते !।
द्विजपत्नीनां कठिनाः
सति भवति करा सरोजसुकुमाराः॥ [गु॰गु॰]

पेशलमपि खलवचनं दहतितरां मानसं सुतत्त्वविदाम्।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति॥ [गु॰क्रि॰]

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽयं यन्मार्गणानर्गलशातपाते।
अभूत्नवाम्भोजदलाभिजातः, स भार्गवः सत्यमपूर्वसर्गः॥ [गु॰द्र॰]

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।

---

मव्यक्तेनोक्तत्वात्। अनेकव्यक्तित्वेन जनार्दनत्वं न जातिरतो द्रव्येणैव जनार्दनेन सह तादात्म्येन प्रकारत्वजातेर्विरोधभानम् उपमानोपमेयभावान्न रूपकं ईश्वरस्य नानाशरीरपरिग्रहाच्चाविरोधः। गुणस्य गुणविरोधमाह।

सन्ततेति। सन्ततेत्यादि हेतुभिः पूर्वं कठिना द्विजपत्नीनां कराः सति वर्त्तमाने भवति त्वयि राज्ञि सरोजसुकुमाराः त्वया चैषामर्थदानाद् दासीभिरेव कर्मकरणात्तत्पत्नीनां करकाठिन्योपशमात् सौकुमार्य्यम्। अत्र कठिनत्वसुकुमारत्वगुणयोर्विरोधभानं कालभेदान्न विरोधः। गुणस्य क्रियाविरोधमाह।

पेशलमपीति। तत्त्वसुतत्त्वयोः पर्य्यायः तत्त्वविदामित्यर्थः। पेशलं कोमलम् अत्र पेशलत्वगुणदाहक्रिययोः परुषत्वगुणप्रमोदनक्रिययोश्च विरोधभानं दुर्जनसुजनवचनस्वभावाच्चाविरोधः। गुणस्य द्रव्यविरोधमाह।

क्रौञ्चाद्रिरिति। अनर्गलो निराबाधः। शातश्छेदनं यस्मात् यन्मार्गणानां ताढृशे पाते सति असौ क्रौञ्चाद्रिर्नवाम्भोजदलवदभिजातः कोमलोऽभूत्तस्य स भार्गवो विधेरपूर्वसर्गः विलक्षणसृष्टिः पातशात इति पाठे यन्मार्गणानामनर्गलपाताधीनशातनिमित्तं नवाम्भोजेत्यादिरर्थः। अत्र क्रौञ्चाद्रित्वमेकव्यक्तिमात्रवृत्तित्वात् न जातिः अतः क्रौञ्चाद्रिणा द्रव्येणैव सहाभिजातत्वगुणस्य विरोधभानं अभिजातत्वस्यारोपान्न विरोधः। क्रियायाः क्रियाविरोधमाह।

विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जड़यति च तापञ्च कुरुते ॥ [क्रि०क्रि०]
अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतम्
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ [क्रि०द्र०]

समदमतङ्गज मदजल-
निस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक ! त्वयि तटजुषि
शङ्करचूड़ापगापि कालिन्दी ॥ [ द्र०द्र० ]

---

परिच्छेदेति । व्याख्यातमिदं प्राक् । अत्र जड़नतापनक्रिययोरेकत्र विकारे विरोधभानं विकारविशेषस्वभावान्न विरोधः । क्रियाया द्रव्यविरोधमाह ।

अयं वारामिति । अयं निधिर्वारामेको निलय इति रत्नाकर इति च ज्ञात्वा तृष्णा तरलितमनोभिरस्माभिः श्रितः तृष्णा च वारिषु पिपासा रत्नेषु च लिप्सा मिजेत्यादिकं ताम्यदित्यादिकञ्च पानक्रियाविशेषणं करपुटी करकोषः सैव कोटरं गर्त्तः मुनिरगस्त्यः । अत्र जलनिधेर्द्रव्यस्य कर्मतासम्बन्धेन पानक्रियया विरोधभानं मुनिप्रभावादविरोधः । न च जलनिधीनामनेकत्वात्तद्वृत्तिजलनिधित्वं जातिरेवेति वाच्यम् । समुद्रत्वस्य तथात्वेऽपि योगार्थघटितस्य जलनिधित्वस्यातथात्वात् गिरयोऽप्यनुन्नतियुजः इत्यत्र तु जातिगुणविरोधोदाहरणत्वमव्यय इत्याद्यंशमपहा येव अद्रित्वस्याजातित्वात् । द्रव्यस्य द्रव्यविरोधमाह ।

समदेति । हे क्षितिपालक ! त्वयि तटजुषि सति श्यामलानां हस्तिमदजलानां निस्यन्दो धारा सैव तरङ्गिणी तत्सङ्गात् गङ्गापि कालिन्दीत्यर्थः श्यामत्वात् । अत्र गङ्गायमुनयोर्द्रव्ययोस्तादात्म्येन विरोधभानम् आरोपान्न विरोधः । युक्तं श्यामत्वारोपादपिकारेण विरोधस्फोरणाच्च न रूपकम् । अत्रापि शीतालक-नन्दाद्यनेकवृत्तित्वेऽपि शङ्करचूड़ापगात्वं न जातिः गङ्गात्वस्यैव तथात्वात् । स्वभावोक्त्यलङ्कारमाह ।

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥ २५ ॥**

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानञ्च । उदाहरणम्,

पश्चादङ्घ्री प्रसार्य्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैः,
आसज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥ [क्रि०]

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढ़िरन्यथा ।**

व्याजरूपा व्याजेन वा स्तुतिः । क्रमेणोदाहरणम्,

हित्वा त्वामुपरोधशून्यमनसां मन्ये न मौलिः परः,
लज्जामज्जनमन्तरेण न रमामन्यत्र सन्दृश्यते ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः,
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ [स्तु०]

---

स्वभावेति । डिम्भः शिशुः आदिना प्रकृष्टज्ञानरहितः पश्वादिपरिग्रहः स्वपदं स्वीयमात्रपरतया व्याचष्टे स्वयोरिति । स्वभावोययोः क्रियारूपयोरित्यर्थः रूपपदं व्याचष्टे रूपमिति तत्र पशुक्रियावर्णनामाह ।

पश्चादिति । शयनादुत्थितस्तुरङ्गः खुरेण क्ष्मां विलिखति किं कृत्वेत्यत आह पश्चादिति । त्रिकं पृष्ठवंशाधरम् अङ्गञ्चातिविततं यथा स्यात्तथा द्राघयित्वा इत्येवं चकारार्थो बोध्यः पृष्ठवंशाधरे त्रिकमिति कोषः । आभुग्नकण्ठः सन्नुरसि मुखमासज्येत्यन्वयः प्रोथतुण्डावोष्ठाधरौ हेषाऽश्वशब्दः । अत्र क्रियावर्णनं वर्णसंस्थानयो-स्त्वन्यत्रानुसन्धेयम् । व्याजस्तुत्यलङ्कारमाह ।

व्याजेति । मुखे आपाततः अन्यथा रूढिस्तद्विपरीता पर्य्याप्तिः ननु निन्दा-मुखेन स्तुतिर्भवत्येव निन्दाव्याजेन स्तुतिः स्तुतिमुखेन निन्दा तु स्तुतिव्याजनिन्दैव सा कथं व्याजस्तुतिरित्यत उभयसङ्ग्रहाय द्विधा समासमाह ।

व्याजरूपेति । स्तुतिमुखेन निन्दा व्याजरूपा स्तुतिः अन्या तु व्याजेन स्तुति-रित्यर्थः । तत्र निन्दामुखेन स्तुतिमाह ।

हित्वा त्वामिति । अहं मन्ये त्वां हित्वा त्वां विना उपरोधशून्यमनसां निरूप-

हे हेलाजितबोधिसत्त्व ! वचसां किं विस्तरैस्तोयधे !
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ [ नि० ]

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥२६**

एकार्थाभिधायकमपि सहार्थबलात् यद् उभयस्यावगमकं सा सहोक्तिः। यथा,

सह दिअसणिसाहिं दीहरा सासदण्डाः,
सह मणिवलएहिं वाप्पधारा गलन्ति।
तुह सुहअ ! विओए तीअ उव्वेअणीए
सह अ तणुलदाए दुब्बला जीविदासा ॥

---

रोधचित्तानां मौलिः श्रेष्ठो न परस्त्वमेव तादृश इत्यर्थः। एवं लज्जायां मज्जनं विषयो निर्लज्जत्वं रमां लक्ष्मीं विना नान्यत्र सन्दृश्यते तस्या एवातिनिर्लज्जत्वमित्यर्थः। यत्त्वं सुखशतैरेवाश्रितायाः श्रियस्त्यागं तनुतितरां तथा त्यागकृतावसाननं प्राप्यापि त्वय्येव यस्या रमायाः स्थितिरित्यर्थः। अत्र निरुपरोधत्वेन राज्ञो निन्दा राज्ञो लक्ष्मीदाढर्त्यापरिच्छिन्नं शोभनत्वपर्य्यासया स्तुतिः। स्तुतिमुखेन निन्दामाह।

हे हेलेति। बोधिसत्त्वं बुद्धिमत्प्राणी हे हेलाजिततत्क ! हे तोयधे ! वचसां विस्तरैः किं सङ्क्षिप्तमेव वच्मीत्यर्थः। परहितस्याधाने जनने गृहीतव्रतस्त्वत्सदृशः परो जनो नास्ति त्वमेव तादृश इत्यर्थः। यद्यस्मात् तृष्यतां पान्थजनानां पिपासोपशमनरूपोपकारघटनायां यद्वैमुख्यं तेन लब्धस्यायशोभारस्य प्रोद्वहने मरो र्निर्जलदेशस्य साहायकं सहायतां कृपया करोषि निर्जलत्वेन मरुभूम्या क्षारजलत्वेन त्वया च तृष्यतामुपकारस्याकरणादयशोभारवहनात् एको ह्यमानस्य भारस्यान्येनापि वहनात् सहायता। अत्र स्तुत्यपरा उपकारकनिन्दा पर्य्यासिः। सहोक्त्यलङ्कारमाह।

सा सहोक्तिरिति। एकार्थाभिधायकमिति शाब्दव्युत्पत्तिबलादेकार्थ एव सान्वयानुभावकमित्यर्थः। सह दिअसेति।

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम्, दिवसनिशादिगतं तु सहार्थसामर्थ्यात् प्रतिपद्यते।

**विनोक्तिः सा विनान्येन, यत्रान्यः सन्न, नेतरः।**

क्वचिदशोभनः, क्वचिच्छोभनः। क्रमेणोदाहरणम्,

अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः॥ [अ]

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः॥ [शो]

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः॥२७॥**

परिवृत्तिरलङ्कारः उदाहरणम्,

लतानामेतासामुदितकुसुमानां मरुदयम्
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम्।

---

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति।
तव सुभग! वियोगे तस्या उद्वेगिन्याः सह तनुलतया दुर्बला जीविताशा॥

इति संस्कृतम्। दीर्घश्वासस्य दण्डाकारत्वेन दण्डत्वम्।

अत्रेति। शाब्दं शब्दव्युत्पत्तिसिद्धं समानविभक्त्यन्तपदार्थयोः कर्त्रा स्यात-कर्तृपदार्थयोश्चाभेदान्वयस्य व्युत्पत्तिसिद्धत्वादित्यर्थः। विनोक्त्यलङ्कारमाह।

विनोक्तिरिति। अन्येन विनाऽन्यः सन् न शोभनो न अनशोभन इत्यर्थः। एवमन्येन विनाऽन्यः इतरोऽशोभनो न शोभन इत्यर्थः। तदाह क्वचिदशोभन इत्यादि द्वयम्।

अरुचिरिति। महत्तमो महान्धकाररूपा अत्र चन्द्रादिरशोभन उक्तः।

मृगलोचनयेति। अयं नरेन्द्रसूनुः मृगलोचनया विनैव विचित्रव्यवहार-प्रतिभाप्रभाप्रगल्भः तदासङ्गात्तु न तादृश इत्यर्थः। तथा तेनाधार्दसदुपदेशकेन सुहृदा विनैव अमृतेत्यादिः। तदा सङ्गात्तु नैतादृश इत्यर्थः। परिवृत्त्यलङ्कारमाह। परिवृत्तिरिति।

लतानामिति। लतानां स्थाने इत्यर्थः मतं लतानामेव सम्मतं लास्यं नृत्यम्

लतास्वध्यन्यानामहह ! दृशमादाय सहसा
ददात्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥

अत्र, प्रथमेऽर्द्धे समेन समस्य, द्वितीये उत्तमेन न्यूनस्य ।

नानाविधप्रहरणैर्नृप ! सम्प्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयम्
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥

अत्र न्यूनेनोत्तमस्य ।

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।**
**तद्भाविकम्,**

भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायोऽस्तीति भाविकम् । उदाहरणम्,

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥

---

असमं समानरहितम् अत्युत्तममित्यर्थः । दृशमादायेति अध्वन्येर्दृश्यमानत्वात् आधि मानसी व्यथा ।

अत्रेति । लतासमानोदयो ह्युपादेयत्वेन साम्यम् उत्तमेनेति उपादेयत्वेन ह्युत्तमा हेयत्वेनाध्यादयो न्यूनाः ।

नानाविधेति । हे नृप ! सम्प्रहारे युद्धे तव दृप्तारिवीराणां विसरेण समूहेन दारुणनिनादवतो नानाविधप्रहरणैः प्रहारान् स्वीकृत्य इयं वसुन्धरा तुभ्यं वितीर्णा कीदृशी निर्गतोऽपास्तस्त्वया सह विप्रलम्भो वियोगो यस्य तादृशपरिरम्भविधिः सम्बन्धविधानं यस्यास्तादृशी त्वया सह तद्वियोगो न भविष्यतीत्यर्थः । अत्र प्रहारा अनुपादेयत्वेन न्यूनाः । भाविकालङ्कारमाह ।

प्रत्यक्षा इवेति । क्रियन्ते शब्देन प्रतिपाद्यन्ते कवेरभिप्राय इति प्रत्यक्षप्रायत्वजीवनवशात्तादृशपदार्थाश्रयस्तोत्कर्षे कवेरभिप्राय इत्यर्थः ।

अत्राद्ये भूतस्य, द्वितीये भाविनो दर्शनम्।

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ २८ ॥**

वाक्यार्थता यथा,

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिभाक्,
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥

अनेकपदार्थता यथा,

प्रणयसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥

---

आसीदिति। अङ्गनाभावेऽपि तज्जन्यशोभाया दृश्यमानत्वात् भाविभूषणेति सम्भारः शोभा भूषणजन्या शोभारम्भा तद्भाविता साक्षात्कारः। काव्यलिङ्गालङ्कारमाह।

काव्यलिङ्गमिति। अयमेव काव्यहेतु हेत्वलङ्कारश्चोच्यते वाक्येति वाक्यार्थता पदार्थता चेत्यर्थः। क्रियान्वयेन समाप्तं वाक्यं क्रियासाकाङ्क्षं कारकपदन्तु पदम्।

वपुरिति। हे पुरारे ! प्राय उत्प्रेक्षायाम् अहं क्वचिदपि जन्मनि भवन्तं न प्रणतवान् वपुषः प्रादुर्भावादिदमनुमितं यदि हि प्रणतवान् तदा वपुःप्रादुर्भावो न स्यान्मुक्तत्वादिति भावः। सम्प्रति च नमन्नेवमुक्तः सन्नहमतनुरशरीरोऽग्रे भाविकालेऽप्यनतिभाक् नतेः शरीरसाध्यत्वात् तदिदं पूर्वापरकालयोरनमनादपराधद्वयमपि हे महेश ! क्षन्तव्यम्। अत्र च शान्तिकारणताज्ञता ज्ञानविषयत्वमेवापराधः। मुक्तस्य पापरूपापराधाभावात् अनमनन्त्वपराधहेतुरेवेति व्याख्यास्यते। अत्र प्रणतवानिति अनतिभागिति च क्रियान्वयेन समाप्तं वाक्यद्वयं तदर्थश्च अनमनमपराधद्वयहेतुः। पदार्थतायां दर्शयितव्यायां पदस्यानेकत्वैकत्वभेदेन द्वैविध्यादाह अनेकेति प्रणयसखीति अघोरघण्टेन छेत्तुमुद्यमितशस्त्रां मालतीं बलादाकृष्य तं प्रति माधवस्योक्तिरियम्। प्रणयिनीनां सखीनां सलीलपरिहासरसेनाधिगतैः प्राप्तैर्ललित-

एकपदार्थता यथा,

भस्मोद्धूलन ! भद्रमस्तु भवते रुद्राक्षमाले ! शुभम्,
हा ! सोपानपरम्परां गिरिसुताकान्तालयालङ्कृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्य्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥

एषु अपराधद्वये पूर्वापरजन्मनोरनमनं भुजपाते शस्त्रोपक्षेपः महामोहे सुखालोकोच्छेदित्वञ्च यथाक्रममुक्तरूपो हेतुः ।

## पर्य्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत् प्रत्या-

---

शिरीषपुष्पहननैरपि यद्दुःखास्यति तत्र वपुषि वधाय शस्त्रमुपक्षिपतस्तव शिरसि आकस्मिकयमदण्ड इव ममैष भुजः पतत्वित्यन्वयः। अत्र वपुषि वधाय तव शस्त्रमुपक्षिपत इति कारकपदानि क्रियासाकाङ्क्षत्वेनावाक्यमनेकेषां तेषामर्थो भुजपाते हेतुः। एकपदे तु समासैकपदार्थतेत्यर्थः।

भस्मोद्धूलनेति। शिवसेवया आसन्नमुक्तेस्तत्त्वज्ञस्योक्तिरियम्। गात्रे भस्मना उद्धूतधूलीकरणं भस्मोद्धूलनं हे तादृश ! तवात्र भद्रमस्तु इति त्यागोक्तिः। एवमपरद्वयेऽपि हा शोचामि गिरिसुताकान्तस्य महेशस्यालयेऽलङ्कृतिभूतां सोपानपरम्परां निश्रेणीम् एषां त्यागे हेतुमाह अद्येति। आराधनतोषितेन विभुना महेशेन मोक्षनामनि मोक्षसंज्ञके महामोहे वयं निधीयामहे पात्यामहे इत्यर्थः। मोक्षस्य महामोहत्वं कुत इत्यत आह युष्मदिति। युष्माकं भस्मोद्धूलनादीनां सपर्य्याऽनुशीलनं तज्जन्यसुखस्यालोकोऽनुभवस्तदुच्छेदिनीत्यर्थः। मोक्षविशेषणमिदम् अत्र मोक्षस्य महामोहत्वे सपर्य्यासुखालोकोच्छेदित्वं समासैकपदार्थो हेतुः दर्शितोदाहरणत्रये जनकज्ञापकहेतून् दर्शयति एष्विति। पूर्वद्वये जनको हेतुः भस्मोद्धूलनेत्यत्र तु ज्ञापकः मोक्षस्य महामोहतायाः अलीकत्वेन तज्जनकत्वासम्भवात् उक्तरूप इति वाक्यविविधपदैकपदार्थरूप इत्यर्थः। पर्य्यायोक्तमलङ्कारमाह।

पर्य्यायोक्तमिति। व्याचष्टे वाच्यवाचकेति अवगमनव्यापारो व्यञ्जना यद्वच इत्यस्य विवरणं यत्प्रत्यायनमिति यस्य प्रत्यायनमित्यर्थः। यादृशप्रकारकोक्तप्रकारेण

थनं तत् पर्य्यायेण भङ्ग्यन्तरेण कथनात् पर्य्यायोक्तम्। उदाहरणम्,

यं प्रेक्ष्य चिररूढ़ापि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः॥

अत्र ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते तेन यदेवोच्यते, तदेव व्यङ्ग्यं, यथा तु व्यङ्ग्यं न तथोच्यते, यथा गवि शुक्ले चलति दृष्टे, गौः शुक्लश्चलतीति विकल्पः, यदेव दृष्टं तदेव विकल्पयति, न तु यथा दृष्टं तथा, यतोऽभिन्नासंसृष्टत्वेन दृष्टम्, भेदसंसर्गाभ्यां विकल्पयति।

---

वाच्यवाचकभावाभाववत्तादृशप्रकारेण अतात्पर्य्यात् प्रकारान्तरेण तस्यैव व्यञ्जनया प्रत्यायनमित्यर्थः। तेनानेकार्थशब्दस्य प्रकरणवारितद्वितीयार्थे व्यङ्ग्ये नातिव्याप्तिः तत्रोक्तप्रकारेणैव व्यङ्ग्यत्वात् संज्ञाव्युत्पत्तिमाह। तत्पर्य्यायेणेति।

यं प्रेक्ष्येति। यं राजानं प्रेक्ष्य ऐरावणस्य मुखे मदेन हरेरिन्द्रस्य हृदये मानेनाभिमानेन चिररूढ़ापि निवासप्रीतिरुज्झिता वासेन मदशोषात् पराजितत्वेनाभिमानत्यागाच्च अत्र मदमानयोः प्रेक्षणाभावात् प्रीत्यभावाच्च उक्तकारकप्रकारेण तात्पर्य्याभावाद्वाच्यानामेव मदमाने वारणहरीणां कारकान्तरप्रकारेण व्यङ्ग्यतां दर्शयति।

अत्रैरावणशक्राविति। अत्र हि न प्रीतिकर्मकता मदमानकर्तृकता च किन्तु ऐरावणशक्रकर्तृकता मदमानकता च मदमानौ मुक्तौ याभ्यामित्यर्थात् क्वचिद्विशेषणस्यापि परनिपातात् न तु मदमानाभ्यां मुक्तावित्यर्थः। तदा तयोः प्रेक्षणानुपपत्तेः ततः कारकान्तरेण तेषां व्यञ्जनाव्यङ्ग्यमपीति भङ्ग्यन्तरं विभिन्नकारकतया प्रत्यायनं एवमेकस्मिन्नेव विषये उत्तरज्ञानासमानप्रकारकं पूर्वज्ञानमुक्त्वा तत्र दृष्टान्तयति यथा गवीति। दृष्टे निर्विकल्पेन गृहीतविकल्पः सविकल्पकज्ञानं यदेवेति। सामान्योक्त्या नपुंसकत्वं य एव गौर्दृष्टो निर्विकल्पेन गृहीत इत्यर्थः। विकल्पयति सविकल्पकेन गृह्णाति न तु यथा दृष्टमिति। अत्र यथा प्रत्ययार्थः प्रकारोऽविवक्षितः निर्विकल्पस्य निष्प्रकारकत्वात् किन्तु यादृशे निष्प्रकारकज्ञानेन गृहीतमित्यर्थः। निर्विकल्पकगृहीतस्य सविकल्पकेन ग्रहे

**उदात्तं वस्तुनः सम्पत्,**

सम्पत् समृद्धियोगः। यथा,

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद्दाड़िमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम्॥

**महतां चोपलक्षणम्॥ २९॥**

उपलक्षणमङ्गभावः। अर्थादुपलक्षणीयेऽर्थे। उदाहरणम्,

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी।

---

विशदयित्वा दर्शयति अभिन्नासंसृष्टत्वेनेति। अत्र यथाश्रुतार्थो न घटते निर्विकल्पकेनाभिन्नासंसृष्टत्वाग्रहात् किन्तु अभिन्नेत्यत्र नञर्थकोऽशब्दः आङुपसर्गेण चासंसृष्टत्वेनादृष्टमित्यर्थः। अशब्दस्य दृष्टमित्यत्रान्वयात् तथाच निर्विकल्पेन भिन्नत्वेनासंसृष्टत्वेन चागृहीतमित्यर्थः। भेदसंसर्गाभ्यामिति विशेषणविशेष्यभेदोऽपि विशिष्टज्ञानविषय इति मतेनेदं संसर्गमात्रं गृह्यते इति तु सर्वमतसिद्धं तदा भेदपदं विशेषणपरम्। उदात्तालङ्कारमाह।

उदात्तमिति। वस्तुसमृद्धियोगव्यञ्जकोऽर्थः मुक्ता इति विद्वद्भवनेषु केली विसूत्रात् छिन्नसूत्रात् हारात् गलिता मुक्ताः प्रातः प्राङ्गणसीम्नि सम्मार्जनीभिः हृताः पतितानन्तरञ्च मन्थरमशीघ्रं चलन्तीनां बालानां नवयौवनानाम् अङ्घ्रि-लाक्षाभिररुणाः ततश्च शुक्लारुणत्वेन दाड़िमबीजत्वेन शङ्कितविषयः केलीशुका यत्कर्षन्ति तद्भोजनृपतेस्त्यागलीलायितं लीलैवेत्यर्थः। तेन बहुमुक्तादानात् मुक्तानामीदृशोऽनादर इत्यर्थः। अत्रावज्ञया विदुषाञ्च मुक्तासमृद्धिव्यञ्जको-ऽयमर्थः। अन्यविधमुदात्तालङ्कारमाह।

महताञ्चेति। महतामिति कर्त्तरि षष्ठी महाजनकर्त्तृकमुपलक्षणं प्रकर्षणं तद्रूपोऽङ्गभाव इत्यर्थः। तथाच स्वसम्बन्धेन महता प्रकृष्टीकृतोऽर्थ इत्यर्थः।

तदिदमरण्यमिति। अरण्यं दण्डकाह्वयं व्यसनं व्यापारः रक्षांसि खरदूषणादयः। अत्र महापुरुषरामसम्बन्धात् प्रकृष्टत्वेन व्यङ्ग्योऽरण्यरूपोऽर्थः। अत्र वीर-

निवसन् बाहुसहायश्चकार रक्षः क्षयं रामः॥

न चात्र वीरो रसः तस्येहाङ्गत्वात्।

**तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत्।**

**समुच्चयोऽसौ**

तस्य प्रस्तुतस्य कार्य्यस्य एकस्मिन् साधके स्थिते साधकान्तराणि यत्र सम्भवन्ति, स समुच्चयः। उदाहरणम्,

दुर्वाराः स्मरमार्गणाः, प्रियतमो दूरे, मनोऽत्युत्सुकम्,
गाढ़म् प्रेम, नवं वयोऽतिकठिनाः प्राणाः, कुलं निर्मलम्।
स्त्रीत्वं धैर्य्यविरोधि, मन्मथसुहृत्कालः कृतान्तोऽक्षमी,
नो सख्यश्चतुराः, कथं नु विरहः सोढ़व्य इत्थं शठः॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तदुपरि प्रियतमदूरस्थित्यादि उपात्तम्। एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्य्यवस्यतीति न पृथक् लक्ष्यते। तथाहि

---

रसध्वनित्वमाशङ्क्यते नचात्रेति। अङ्गत्वात् उदात्तालङ्कारत्वघटकस्वीयस्थायिभावाश्रयरामव्यवधानेनाङ्गत्वादित्यर्थः। वीरोत्साहेन हि रामप्रकर्षस्तेन सम्बन्धेनारण्यप्रकर्षः रसपदस्य स्थायिभावपरत्वात् प्रकर्षकस्य च रसत्वाभावात् व्यवधानेन प्रकर्षकत्वाच्च नापराङ्गत्वम्। समुच्चयालङ्कारमाह।

तत्सिद्धीति। प्रस्तुतस्येति प्रस्तुतकार्य्यस्येत्यर्थः।

दुर्वारा इति। इत्थम् असहत्वानेकहेतुसत्त्वात् दुःखदायित्वेन शठः खलो विरहः कथं सोढ़व्यः तान् हेतून् दर्शयति दुर्वारा इति तत्सत्त्वेऽपि पतिसान्निध्ये स्मरमार्गणाः सोढ़व्या एवेत्यत आह प्रियतम इति। तर्हि मर्त्तुमेव चेष्टतामित्यत आह अतिकठिना इति तर्हि विषभक्षणादिना म्रियतां व्यभिचारी वा क्रियतामित्यत आह कुलमिति आत्महत्यया व्यभिचारेण वा कुलकलङ्कः स्यादित्यर्थः। तर्हि धैर्य्यमेवालम्ब्यतामित्यत्राह स्त्रीत्वमिति कालविशेषे स्त्रीणामपि धैर्य्यं स्यादित्यत्राह मन्मथेति वसन्त इत्यर्थः। दैवानुकूल्ये सर्वमिदमकिञ्चित्करमित्यत्राह कृतान्त इति

कुलममलिनं भद्रा मूर्त्तिर्मतिः श्रुतशालिनी,
भुजबलमलं, स्फीता लक्ष्मीः, प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावाः, अमीभिरयं जनो
व्रजति सुतरां दर्पं, राजन्! त एव तवाङ्कुशाः॥

अत्र सतां योगः। उक्तोदाहरणे त्वसतां योगः।

शशी दिवसधूसरो, गलितयौवना कामिनी,
सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः, सततदुर्गतः सज्जनो,
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः।

## स त्वन्यो युगपद्या गुणक्रियाः॥ ३०॥

---

कृतान्तो दैवं कृतान्तो यमसिद्धान्तदैवाकुशलकर्मस्विति कोषः। अक्षमः क्षमारहितो नित्यमुद्वेजक इत्यर्थः। सखीप्रयुक्तोपचारे विरहदुःखमुपशमय इत्यत्राह नो सख्य इति। सद्योग इति साधकानां सतां शोभनानां मिश्रितानां तेषाञ्च योग इत्यर्थः।

कुलममलिनमिति। अयं संसारी यो जनः दर्पमहङ्कारं अङ्कुशा अहङ्कारनिवारकाः।

अत्र सतामिति। उपादेयत्वात् उक्तोदाहरणं दुर्वारा इत्यादिकं तेषामसत्त्वं दुःखदायकत्वेनानुपादेयत्वात्। सदसद्योगे त्वाह।

शशीति। गलितयौवनायां कामिनीत्वं विधेयम् अनक्षरं विद्यारहितं प्रभौ धनपरायणत्वं विधेयं सज्जने सततदुर्गतत्वं विधेयं नृपाङ्गणगते खलत्वं विधेयं शोभनाशोभनेति स्वदोषेण शोच्यावस्था अशोभनाः दैवदोषेण शोच्यावस्थास्तु शोभना अत्र गलितयौवना कामिनी धनपरायणः प्रभुर्नृपाङ्गणगतः खलश्च स्वदोषेण शोच्यत्वान्न शोभनाः अन्ये तु दैवदोषेण शोच्याः शोभनाः। अन्यविधसमुच्चयालङ्कारमाह।

स त्वन्य इति। अन्यः समुच्चय इत्यर्थः। युगपदित्येककालवृत्तित्वेन प्रतीयन्त

गुणौ च क्रिये च, गुणक्रिये च गुणक्रिया:। क्रमेणोदाहरणम्,

विदलितसकलारिकुलम्
तव बलमिदमभवदाशु विमलञ्च।
प्रखलमुखानि नराधिप !
मलिनानि च तानि जातानि ॥ [गु०गु०]

अयमेकपदे तया वियोग:
प्रियया चोपनत: सुदु:सहो मे।
नववारिधरोदयादहोभि-
र्भवितव्यञ्च निरातपत्वरम्यै: ॥ [क्रि०क्रि०]

कलुषञ्च तवाहितेष्वकस्मात्
सितपङ्केरुहसोदरश्रि चक्षु:।
पतितञ्च महीपतीन्द्र ! तेषाम्
वपुषि प्रस्फुटमापदां कटाक्षै: ॥ [गु० क्रि०]

---

इत्यर्थ:। गुणौ चेति युगपत्ताबोधकयोश्चकारयो: गुणद्वयान्वितत्वे गुणयो र्यौगपद्यं क्रियाद्वयान्वितत्वे क्रिययो: गुणक्रियान्वितत्वे गुणयो र्यौगपद्यं क्रियाद्वयान्वितत्वे क्रिययो: गुणक्रियान्वितत्वे च तयो र्यौगपद्यम्।

विदलितेति। अत्र विमलत्वयो र्यौगपद्यं चकारद्वयस्य तदन्वितत्वात् न तु भवनजननक्रिययो:। क्रियाद्वययौगपद्यमाह।

अयमेक इति। अयं प्रियया सह एकपदे एककालरूपे स्थाने वियोग इत्यन्वय:। निरातपत्वेनातपराहित्येन रम्यै र्भवितव्यं भूतमित्यर्थ:। अवाचकत्वदोषस्तु अत्रास्त्येव अत्र भवितव्यञ्चोपनतं चेत्यन्वय:। क्रियाया: समुच्चयस्य विवक्षितत्वात् तथाच क्रियाद्वयान्वितचकाराभ्यां तद्द्वयस्यैव यौगपद्यं एकपदे इत्यनेनापि तद्बोधनन्तु सम्भेदेनान्यतरवैयर्थ्यमिति न्यायात् युगपत्प्रयोगबाहुल्यं हि सम्भेद: द्वावितिवत् गुणक्रियायौगपद्यमाह।

कलुषञ्चेति। अहितेषु शत्रुषु विषयेषु श्रि इति बहुव्रीहौ नपुंसकत्वात् ह्रस्व: अत्र कालुष्यगुणपातक्रिययो र्यौगपद्यं तदन्वितत्वाच्चकारयो:। अत्र यौगपद्ये एकदेशविवक्षा नास्तीत्याह।

धुनोति चासिं तनुते च कीर्त्तिम् इत्यादेः, कृपाणपाणिश्च भवान् रणक्षितौ ससाधुवादाश्च सुराः सुरालये इत्यादेश्च दर्शनात् व्यधिकरणे इति, एकस्मिन् देशे इति च न वाच्यम् ।

**एकं क्रमेणानेकस्मिन् पर्य्यायः**

एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा स पर्य्यायः । क्रमेणोदाहरणम्

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये, वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ [भ०]

यथा वा,

बिम्बौष्ठ एव रागस्ते तन्वि ! पूर्वमदृश्यत ।

---

धुनोति चेति । पर्य्यायालङ्कारमाह ।

एकमिति । भवति क्रियते वेति परेण करणे क्रियत इति अतथात्वेन भवतीति ।

नन्वाश्रयेति । ननु भोः कालकूट ! तव उत्तरोत्तरविशिष्टपदा उत्तरोत्तरोन्नपदा आश्रयस्थितिः केनोपदिष्टा यतः प्राक् अर्णवस्य हृदयेऽथानन्तरं वृषलक्ष्मणः कण्ठेऽधुना पुनः खलानां वाचि वससीत्यर्थः । हृदयात् कण्ठे कण्ठात् सुखस्थित्या वाच उच्चत्वात् कलिकाल एव खलसत्त्वादधुनेत्युक्तम् अत्र क्रमेणानेकत्र स्थितेः पारक्रियसाध्यत्वाभावाद्भवनमात्रं तापकत्वेनारोपानारोपाभ्यामेकस्य स्थितिभुक्ताश्लिष्टैकपदार्थत्वेन एकतयाऽध्यासितस्याप्याह ।

बिम्बौष्ठ एवेति । रागो रक्तिमाऽनुरागश्च श्लेषादेकतयाऽध्यासितः । अत्रापि परक्रियसाध्यत्वेनानुक्त्या भवनमात्रम् । परक्रियासाध्यत्वे उदाहरति श्रोणीबन्ध इति अस्या गात्राणां गुणविनिमय एकेन त्यक्तस्यान्येन ग्रहणरूपो विनिमयो यौवनेन कल्पितः तद्दर्शयति श्रोणीबन्ध इति । बन्धः संस्थानं संस्थानविशिष्टा श्रोणीत्यर्थः । यौवने श्रोणीस्थौल्यात् मध्यभागचैण्याच्च पङ्गुमिति यौवने हंसकुञ्जरगत्यवलम्बनात्

अधुना हृदयेऽप्येष मृगशावाक्षि ! लक्ष्यते ॥ [भ०]

रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् ।

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयञ्च वक्त्रम्
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ [क्रि०]

तत्ताणं सिरिसहोअररअणाहरणम्मि हिअअमेकरसं ।
विंबाहरे पिआआ णिवेसियं कुसुमवाणेण ॥ [क्रि०]

## अन्यस्ततोऽन्यथा ।

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा सोऽन्यः । क्रमेणोदाहरणम्,

---

नयनतारल्याच्च धत्त इति वक्षसः कुचसचिवत्वं कुचसद्वितीयत्वं तद् ग्रहणाद् द्वितीयत्वयोगो लभ्यते तदेव हि अद्वितीयत्वमास्यं कर्त्तृ धत्ते इत्यर्थः । यद्यपि वक्षसा स्वाधेयद्वितीयराहित्यस्यैव योगः आस्येन तु स्वतुल्यद्वितीयराहित्यधरणमित्यतो न विनिमयो न वैकस्यानेकत्र स्थितिस्तथाप्यद्वितीयत्वपदश्लेषादीदृशाद्वितीयत्वस्यैकत्वाध्यासान्नानुपपत्तिः पूर्वश्लोके रागद्वयस्येव । अत्र गात्रसामान्यगुणविनिमयस्य परक्रियमाणत्वोक्त्यैव गात्रविशेषश्रोणीबन्धादीनां गुणस्य तथात्वलाभः सामान्यस्य परक्रियमाणोक्तिं विनापि विशिष्यैव तथात्वमुदाहरति । तत्ताणेति ॥

तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
विम्बाधरे प्रियाया निवेशितं कुसुमवाणेनेति ॥ संस्कृतम् ।

श्रीसहोदररत्नमम्रतं कौस्तुभञ्च तदाकर्षणोद्यतानां तेषामसुराणाम् एकरसं मोहिनीरूपप्रियाया विम्बाधरे कुसुमवाणेन निवेशितमित्यर्थः रत्नाहरणमुपेक्ष्य तद्गतहृदया बभूवुरित्यर्थः । अन्यविधं पर्य्यायमाह ।

अन्यस्ततोऽन्यथा इति । ततोऽन्यथा विपरीत इत्यर्थः । वैपरीत्यमेव व्याचष्टे अनेकमिति । अत्रापि क्रमेण इति पूर्वोक्तमनुषञ्जनीयम् ।

मधुरिमरुचिरं वचः खलानाम्
अमृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालाहलं विषं तदेव ॥ [अ०]

तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती, नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुशलध्वनिः, कलमिदं सङ्गीतकं योषिताम्
आश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ [क्रि०]

---

मधुरिमेति । खलानां वचः कर्तृ प्रथमं पृथु अमृतं व्यनक्ति यतो मधुरिम्णा माधुर्य्येण रुचिरम् अथानन्तरं मोहहेतुस्तदेव वचः खलस्यान्तर्गतं हालाहलसंज्ञकं विषं व्यनक्तीत्यन्वयः । अत्रैकत्रैव खलेऽमृतविषयोः परिक्रियमाणत्वानुक्त्या भवन-मात्रम् । परिक्रियमाणत्वे त्वाह ।

तद्गेहमिति । दरिद्रदामोदरस्य सम्पत्तिं दृष्ट्वा कस्यचिदुक्तिरियम् । अत्र नतभित्ति गेहं जरद्गु नु क्षुद्रमुशलध्वनीनां दारिद्र्यकालीनानां स्मरणं तत्स्थाने मन्दिरादीनान्त्वनुभूयमानत्वं नतभित्ति नीचपिण्डिकं दिवो लब्धावकाशं स्वर्गप्रविष्ट-चूडं मुशलध्वनिः क्षुद्रत्वमवहत्य दौर्बल्यादवहन्तव्याल्पत्वाच्च इयतीं भूमिं इयतीमवस्थां दिवसैरर्थात् कतिपयैः समारोपितोऽर्थात् विधात्रा । अत्र नतभित्तिमन्दिरादीना-मनेकेषामेकत्रैव द्विजे स्वामित्वसम्बन्धेन विधात्रा क्रियमाणत्वम् आरोपित इति कर्मणि प्रत्ययेन कर्तुं विधातुराक्षेपात् । अत्र पर्य्यायद्वये परिवृत्त्यलङ्कारत्वप्रसक्तिं निवारयति ।

अत्रेति । पर्य्यायद्वयमेदादेकस्येत्यस्य विभिन्नोऽन्वयः । तथाहि परिवृत्त्यलङ्कारे एकस्य धर्मिणः किञ्चिद्वस्तु हानं किञ्चिद्वस्तु उपादानम् एकं क्रमेणेत्यादि । पर्य्याये तु नैकस्य धर्म्मिणस्तथात्वं तत्रैकेन धर्मिणाऽर्णवादिना त्यक्तस्य विशिष्यस्यान्येन धर्मिणा वृषलत्वादिना ग्रहणात् तथाच तत्पक्षे एकस्य धर्मिण इत्यर्थः । अन्यस्तत इत्यादि-पर्य्याये तु एकस्य धर्मस्य हानमेव नतूपादानम् अन्यस्य धर्मस्योपादानमेव न तु हानं परिवृत्तौ तु एकस्य धर्मस्य एकेन धर्मिणा हानमन्येन धर्मिणोऽप्रदानमित्यतोऽत्र तथा अविवक्षणान्न परिवृत्तित्वमित्यर्थः । अनुमानालङ्कारमाह ।

**अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ॥ ३१ ॥**

पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनं, धर्मिणि अयोगव्यवच्छेदो व्यापकस्य, साध्यत्वम् । यथा,

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवम्,
यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥

साध्यसाधनयोः पौर्वापर्यविकल्पे न किञ्चिद्वैचित्र्यमिति न तथा दर्शितम् ।

**विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।**

अर्थाद्विशेष्यस्य । उदाहरणम्,

---

अनुमानमिति पक्षधर्मेति । द्वन्द्वात्परस्य भावप्रत्ययस्य सर्वत्रान्वयः । तेन पक्षधर्मत्वेनान्वयव्यतिरेकित्वेन च त्रिरूप इत्यर्थः । धर्मिणीति हेतुरूपधर्मवतीत्यर्थः । अयोगव्यवच्छेदस्तन्निष्ठाभावाप्रतियोगित्वं व्यापकस्येति तेनाव्यापकत्वं यत्र साध्यते तत्र नेदृशं साध्यत्वमित्यर्थः । तत्रानुमानाभास इति भावः ।

यत्रैता इति । एतास्तरङ्गवच्चञ्चलीपाङ्गनयना यत्र दिशि भ्रुवं व्यापारयन्ति तत्रैव दिशि यदमी मर्मस्पृशोऽर्थान्मदनस्य मार्गणाः सन्ततमविरतं पतन्ति तत्तस्मादासां शासनधरः आज्ञाकारी स्मरोऽग्रत एव धावति । कीदृशः चक्रीकृतचापं यथा स्यात्तथाऽञ्चितशरश्चालितबाणः प्रेङ्खत्करी वर्द्धमानपाणिः क्रोधनश्चाद्यात् कामिषु । अत्र दिक्पक्षः उक्तविशेषणविशिष्टस्मरधावनवत्त्वं साध्यं मर्मस्पर्शिशरपातः साधनं प्रयोगस्त्वेवम् आसां भ्रूव्यापारविशिष्टादिक उक्तविशेषणविशिष्टस्मरधावनवती तदीयमर्मस्पृङ्मार्गणपातात् स्मरेषु मर्मस्पृक्त्वविशेषणात् क्रोधनत्वाद्यविशिष्टेन स्मरेण शरपातनेन व्यभिचारः पौर्वापर्यविपर्ययः क्वचित् साध्यस्यापि प्राङ्निर्देशः । परिकरालङ्कारमाह ।

विशेषणैरिति । साकूतैर्विशेष्यप्रकर्षे साभिप्रायैः अर्थाद्विशेष्यस्येति । प्रकर्षाधायकैरिति शेषः ।

महौजसो मानधना धनार्च्चिता
धनुर्भृतः संयति लब्धकीर्त्तयः ।
न संहतास्तस्य न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥

यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामिवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः ।

**व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ३२ ॥**

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते, सा व्याजोक्तिः । न चैषा अपह्नुतिः, प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात् । उदाहरणम्,

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।

---

महौजस इति । युधिष्ठिरे चरवाक्यमिदम् । तस्य दुर्योधनस्य धनुर्भृतो वीरा असुभिः प्राणैरपि तस्य प्रियाणि समीहितुं घटयितुं वाञ्छन्ति प्राणव्ययेनापि तस्य प्रियाणि कर्त्तुमिच्छन्तीत्यर्थः । तेषां युद्धेऽकिञ्चित्करत्वं निरस्यति महौजस इति मानधनत्वेन रणादपलायित्वं धनार्चितत्वेन तत्कार्य्यानुपेक्षकत्वं संयतीत्यादिना रणे कृतकर्मत्वं न संहता इत्यनेन एकैकस्य कार्य्यकरणे सामर्थ्यं न भेदेत्यादिना परस्परवैमत्येन कार्य्यविघातकत्वाभावः सूचितः । तेन धनुर्भृतां प्रकर्षः तथाप्येक इति विशेषणैरित्यत्र बहुत्वस्य विवक्षितत्वादिति भावः । व्याजोक्त्यलङ्कारमाह ।

व्याजोक्तिरिति । व्याचष्टे निगूढमपीति उद्भिन्नपदसामर्थ्यान्निगूढत्वलाभः प्रभिन्नं केनापीति छद्मनेत्यस्य व्याख्या साम्यस्याभावादिति साम्यमूलकोऽपह्नव एवापह्नुत्यलङ्कारात् ।

शैलेन्द्रेति । उपगूढेत्यत्र भावे क्तः तथाच शैलेन्द्रेण प्रतिपाद्यमानाया उत्सृज्य दीयमानाया गिरिजाया हस्तस्योपगूढेन ईषत्स्पर्शेन उल्लसता रोमाञ्चादिना रोमाञ्चवेपथुभ्यां विसंष्ठुलस्य व्यस्तस्याखिलवैवाहिकविधेर्व्यासङ्गस्यानुष्ठानस्य

आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्, सस्मितम्
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः।

**किञ्चित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते।**
**तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता॥२३॥**

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्य्यवस्यति, सा भवेत्परिसङ्ख्या अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टं, तथा उभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारो भेदाः। क्रमेणोदाहरणम्,

किमासेव्यं पुंसां ? सविधमनवद्यं द्युसरितः,
किमेकान्ते ध्येयं ? चरणयुगलं कौस्तुभभृतः।

---

भावितया सम्भावितेन भङ्गेनाकुलः शिवो वोऽवतात्। कीदृशः तुहिनवतोऽचलस्य करयोः शैत्यम् आः! आश्चर्य्यमित्यूचिवान् सन् सस्मितं यथा स्यात्तथा शैलान्तःपुरेषु तत् स्त्रीगणेन गौर्य्यादिमातृमण्डलेन स्त्रीयगणैश्च दृष्टः रोमाञ्चादि इत्यादिपदप्राप्तत्वादाह। वेपथू इति। सात्त्विकतयेति सत्त्वगुणोद्रेकेनैव कामभावात्। परिसङ्ख्यालङ्कारमाह।

किञ्चिदिति। कथितं यत् तादृगन्यव्यपोहाय प्रकल्पत इत्यर्थः तत्कल्पनबीजमाह।

प्रमाणान्तरेति। उदाहरणेषु दृष्टत्वात् सूत्रानुक्तमपि प्रभेदद्वयमाह तथोभयत्रापीति चत्वार इति प्रश्नपरिसङ्ख्ययोर्द्वयोर्व्यपोह्यमानवाच्यत्वावाच्यत्वाभ्यां द्वैगुण्येन चतुष्टम्।

किमासेव्यमिति। किमित्यादिः प्रश्नः सविधमित्याद्युत्तरं द्युसरितः सविधं सान्निध्यं तटम्। अत्र गङ्गातटसेवनस्य पुराणादित एव प्राप्तत्वादन्यासेवने

किमाराध्यं ? पुण्यं, किमभिलषणीयञ्च ? करुणा,
यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति ॥ [प्र०प्र०]

किं भूषणं ? सुदृढमत्र यशो, न रत्नम्
किं कार्य्यमार्य्यचरितं सुकृतं, न दोषः ।
किं चक्षुरप्रतिहतं धिषणा, न नेत्रम्,
जानाति कस्त्वदपरः सदसद्विवेकम् ॥ [प्र०वा]

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ [अ०प्र०]

भक्तिर्भवे, न विभवे, व्यसनं शास्त्रे, न युवतिकामास्त्रे ।
चिन्ता यशसि, न वपुषि प्रायः परिदृश्यते महताम् ॥ [अ०वा०]

**यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ।**
**तदा कारणमाला स्यात्**

---

पर्य्याप्तिः किमेकान्त इति एकान्ते मरणसमये अत्रापि तथैव पर्य्याप्तिः एवमुत्तरद्वयेऽपि एषु हेतुमाह यदा सक्तेति निरवधिमुक्तिरात्यन्तिकी मुक्तिः सालोक्या दिव्या वृत्ता मुक्तिरित्यर्थः । अत्रान्यव्यपोहः व्यङ्ग्यः । वाच्यव्यपोह्यमाह ।

किम्भूषणमिति । अत्र व्यपोह्यो वाच्यः आर्य्यैं र्वसिष्ठादिभिश्चरितमाचरितं किं कर्म कार्य्यं कर्त्तव्यं सुकृतं वेदाविरुद्धमित्याद्युत्तरं न दोषाः चाण्डालीगमनादिदोषाः अत्र दोषो व्यपोह्यो वाच्यः । अप्रतिहतं व्यवधानेऽपि ग्राहकं कीदृशं चक्षुरिति प्रश्नः उत्तरमाह धिषणेति धिषणा बुद्धिः नेत्रं व्यपोह्यं वाच्यम् । जानातीति तदपर इति पाठे धिषणातोऽपर इत्यर्थः । त्वदपर इति पाठे तु उत्तरपरितुष्टस्य प्रष्टुरुत्तरयितृप्रशंसावाक्यमिदम् । अप्रश्नपरिसङ्ख्यां प्रतीयमानव्यपोह्यामाह ।

कौटिल्यमिति । करादावेव रागो न हृदीत्यर्थः तथाच कौटिल्यादिदोषास्तवैव हृदये न सन्ति मयि तु तथापि नानुराग इत्यर्थः । मानिनीं प्रतीयमुक्तिः । अत्र हृदयं व्यपोह्यं व्यङ्ग्यम् । वाच्यव्यपोह्यामप्रश्नपरिसङ्ख्यामाह ।

भक्तिरिति । भवे महेशे युवतिरूपे कामस्यास्त्रे इत्यर्थः । अत्र विभवादी व्यपोह्या वाच्या । कारणमालालङ्कारमाह ।

उत्तरम् उत्तरं प्रति यथोत्तरम्। उदाहरणम्,

जितेन्द्रियत्वं विनयस्य कारणम्,
गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते,
जनानुरागप्रभवा हि सम्पदः॥

हेतुमता सह हेतोरभिधानमभेदतो हेतुः इति हेत्वलङ्कारो न लक्षितः आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति वैचित्र्याभावात्।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।
रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः॥

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलङ्कारकल्पनयेति पूर्वोक्तकाव्यलिङ्गमेव हेतुः।

---

यथोत्तरञ्चेदिति। मालादीपके पूर्वपूर्वस्यार्थस्य उत्तरोत्तरक्रियां प्रति हेतुत्वेऽपि सर्वेषामेकक्रियान्वयः अत्र तु न तथेति भेदः।

जितेन्द्रियत्वमिति। स्पष्टोऽर्थः। कारणमालापदेन स्मारितस्य हेत्वलङ्कारस्यानुक्तबीजं वक्तुमाह।

हेतुमतेति। हेतुमता कार्येण सहाभेदेन हेतोरभिधानमित्यर्थः। न भूषणतां नालङ्कारतां तदुदाहरणमाह।

अविरलेति। अविरलकमलविकासादिभिः कार्यैः सह कारणस्य वसन्तकालस्याभेदेनाभिधानं परमते स्वमते तु कमलविकासादिहेतुरित्यर्थः। आयुर्घृतमित्यादाविव सारोपा लक्षणा इदमप्युपलक्षणमेव अविरलः कमलविकासो यत्रेति बहुव्रीहिणापि विवक्षितार्थसिद्ध्या नायं हेत्वलङ्कार इति मन्तव्यम्। नन्वत्र निर्दिष्टो न कश्चिदलङ्कारोऽस्ति वैचित्र्यमलङ्कार इति सामान्यलक्षणाक्रान्तौ वैचित्र्यविशेषोऽपि कश्चिदिह नास्ति तत्कथमिदं काव्यमित्यत आह।

कोमलेति। माधुर्यौजःप्रकाशकभिन्नानां लकाराणामनुप्रासोऽत्र कोमलानुप्रासः कोमलापरैरित्युक्तत्वात् समाम्नासिषुः जगुः कोमलानुप्राससत्त्वादेवात्र

क्रियया तु परस्परम् ॥ ३४ ॥

वस्तुनोर्जननेऽन्योन्यम्,

अर्थयोरेकक्रियामुखेन परस्परं कारणत्वे सति अन्योन्य-नामा अलङ्कारः। उदाहरणम्,

हंसाणं सरोहिं सिरी सारिज्जइ अह सराणं हंसेहिं।

अस्सोस्सं विअ एए अप्पाणं णवरं गरुअन्ति ॥

अत्र उभयेषामपि परस्परजनकता मिथः श्रीसारतासम्पा-दनद्वारेण।

उत्तरश्रुतिमात्रतः।

प्रश्नस्योन्नयनं यत्र क्रियते, तत्र वा सति ॥ ३५ ॥

असकृद् यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम्।

---

तन्महिम्नेत्युक्तं तदसत्त्वेऽपि प्रधानतयावस्थित्यैव सालङ्कारत्वं प्रागुक्तमेव बोध्यम्। अन्योन्यसंज्ञकमलङ्कारमाह।

क्रियया त्विति व्याचष्टे अर्थयोरिति। एकजातीययोः परस्परक्रिययोः परस्परेण जननात् परस्परेण जनोपचार इत्यर्थः। हंसाणमिति।

हंसानां सरोभिः श्रीः सार्य्यतेऽथ सरसां हंसैः।

अन्योन्यमिव एते आत्मानं केवलं गरयन्तीति ॥ संस्कृतम्।

सार्य्यते सारा क्रियते सारशब्दात् तत्क्रियते इत्यर्थे नामकारिते सति ततः कर्मख्यातं अथ समुच्चये सरसामपि श्रीः हंसैः सारा क्रियते इत्यर्थः। णवरशब्दः केवले देशी गरयन्ति गुरु कुर्वन्ति गुरुशब्दात्करोत्यर्थे नामकारिते सति प्रियस्थिरे-त्यादिना गरादेशे रूपमिदम्।

अत्र श्रीसारताकरणक्रियाजननद्वारा परस्परस्य परस्परेण जननं दर्शयति अत्रेति। द्विविधमुत्तरालङ्कारमाह।

उत्तरेति। उत्तरपदार्थं व्याचक्षाणो व्याचष्टे प्रतिवचनेति पूर्ववाक्यं प्रश्न-वाक्यम्। वाणिअए इति।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते, तदेकं तावदुत्तरम्। उदाहरणम्,

वाणिअअ ! हत्थिदन्ता कुतो अह्माणं वग्घकत्तीअ।

जाव लुलिआलअमुही घरम्मि परिसक्कइ सोण्हा॥

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, ताः मूल्येन प्रयच्छेति-क्रेतुर्वचनम् अमुना वाक्येन समुन्नीयते। नचैतत् काव्यलिङ्गम् उत्तरस्य ताद्रूप्यानुपपत्तेः। न हि प्रश्नस्य प्रतिवचनं जनको हेतुः, नापीदमनुमानम्, एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलङ्कारान्तरमेवोत्तरं साधीयः।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यत् असम्भाव्यरूपं प्रतिवचनं स्यात् तत् अपरमुत्तरम्। अनयोश्च सकृदुपादाने

---

वाणिजिक ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावल्लुलितालकमुखी गृहे परिष्वक्कति स्नुषेति॥ संस्कृतम्।

परिष्वक्कति दीप्यते स्नुषा पुत्त्रबधूः हस्तिव्याघ्रमारकः मम पुत्त्रस्तादृशवधूसमासक्तो हत्यादिमारणार्थं न गच्छतीति भावार्थः। अनेनोन्नीयमानं प्रश्नवाक्यं दर्शयति।

हस्तिदन्तेति। अर्थीत्यनन्तरं ताः किं सन्तीति वाक्यशेषः। तदेव प्रश्नरूपता स्यात् ताद्रूप्यं जनकत्वरूपहेतुत्वं तदेव दर्शयति न हि प्रश्नस्येति। न च जनकहेतुत्वाभावेऽपि ज्ञापकहेतुत्वादेव हेत्वलङ्कारः स्यात् कथमन्यथा भस्मोद्धूलनेत्यादौ महामोहत्वज्ञापकस्य सपर्य्यासुखालीकच्छेदित्वस्य हेत्वलङ्कारत्वं प्राग्दर्शितमिति वाच्यम्। ज्ञापकहेतौ हेत्वलङ्कारत्वेऽपि उन्नीयमानप्रश्नातिरिक्तं ज्ञाप्यं प्रत्येव तथात्वात् उन्नीयमानप्रश्नस्य ज्ञाप्यत्वे हेतूत्तरालङ्कारत्वेनैवाघ्रातत्वात् न हेत्वलङ्कारत्वमिति भावात् ज्ञाप्यस्य निर्दिश्यमानत्वे तु प्रश्नाप्रश्नसाधारणमेव हेत्वलङ्कारत्वम्।

आगतोऽसि यतस्तस्मात् किं कार्य्यं तव विद्यते।

इत्यत्र निर्दिष्टप्रश्नज्ञापकस्यानमनस्याप्यत एव हेत्वलङ्कारत्वमेव प्रश्नस्य निर्दिश्यमानत्वात् एकधर्मी पक्षः प्रकृते तु प्रश्नस्य तु धर्मी क्रेता प्रतिवचनस्य धर्मी विक्रेतेति

न चारुताप्रतीतिरित्यसकृदित्युक्तम्। उदाहरणम्,

का विसमा ? दिव्वगई, किं दुल्लहं ? जं जनो गुणग्गाही।
किं सोक्खं ? सुकलत्तं, किं दुःखं ? जं खलो लोओ॥

प्रश्नपरिसङ्ख्यायामन्यव्यपोह एव तात्पर्य्यम्, इह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः।

**कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ३६
धर्मेण केनचिद्यत्र तत् सूक्ष्मं परिचक्षते।**

कुतोऽपि आकारादिङ्गिताद्वा सूक्ष्मस्तीक्ष्णमतिसंवेद्यः। उदाहरणम्,

वक्त्रस्यन्दिस्वेदविन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख॥ [आ०]

---

भेदः। तत्र वा सतीत्यादिद्वितीयमुत्तरालङ्कारं व्याचष्टे प्रश्नानन्तरमिति। असम्भाव्यतायां हेतुमाह लोकातीति सूत्रे सकृदित्यस्य प्रश्नोत्तरयोर्द्वयोरप्यन्वयमभिप्रेत्य व्याचष्टे अनयोरिति प्रश्नोत्तरयोरित्यर्थः। का विषमेति।

का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुर्ग्रहं खलो लोक इति॥ संस्कृतम्।

सौख्यं सुखोपयुक्तं दुर्ग्रहमवशस्वभावम्। प्रश्नपरिसङ्ख्यातोऽस्य भेदमाह। प्रश्नेति अत्र सहृदयानामनुभव एव प्रमाणम्। सूक्ष्मालङ्कारमाह। कुतोऽपीति केनचिद्धर्मेणेति प्रकाश्यत इत्यन्वयः कुतोऽपीत्यस्यार्थमाह। आकारादिति। आकारात् गात्रचिह्नात् इङ्गितं क्रिया।

वक्त्रस्यन्दीति। कयापि विपरीतरतौ कृतायां तस्याः कण्ठे स्वेदविधाकृतं कुङ्कुमं दृष्ट्वा तस्या अपि हस्ते कयापि लिखितायाः खड्गलेखायाः पुरुषायितसूचिकाया वर्णनमिदम्। प्रकृतरतौ उत्तानाया नायिकाया वक्त्रे गलितस्वेदानां

अत्राकृतिमालोक्य कयापि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्याद‌भिव्यक्तिमुपनीतं, पुंसामिव कृपाणपाणिता, योग्यत्वात्। यथा वा

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥ [इ०]

अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः।

**उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः॥ ३७॥**

परः पर्य्यन्तभागः अवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः। उदाहरणम्,

राज्ये सारं वसुधा वसुधायाँ पुरं, पुरे सौधम्।
सौधे तल्पं, तल्पे वराङ्गनाऽनङ्गसर्वस्वम्॥

---

पृष्ठ एव गमनं तद्गमनन्तु विपरीतरतावेति वक्रस्यन्दोत्यादेरयमभिप्रायः। भिन्नं द्विधाकृतं पुंस्त्वं पुरुषोचितक्रियाकारित्वेन पुरुषत्वं वयस्या सखो स्मित्वा हसित्वा भवेति। आकृतिं कण्ठे कुङ्कुमभेदम्। इङ्गितेन तर्केण दर्शयति सङ्केतकालेति। ज्ञातव्ये सङ्केतकाले मनो यस्य विटं धूर्त्तमुपनायकं तादृशं ज्ञात्वा इत्यर्थः। हसता नेत्रेणार्पितं ज्ञापितमाकूतं भावो यत्र तादृशं यथा स्यात्तथा लीलेत्यादि।

अत्रेति। इङ्गितमत्राशब्दमपि नायिकाक्रिययैवाचिप्तम्। सारालङ्कारमाह।

उत्तरोत्तरमिति। परावधिः श्लोकसमापनपर्य्यन्तः। तदेव वैचित्र्यानुभव इति भावः।

राज्ये इति। अनङ्गसर्वस्वं वराङ्गना सारमित्यन्वयः सारशब्दो जहल्लिङ्गोऽजहल्लिङ्गश्च बोध्यः। तत्किं त्रिभुवनसारा नाराधिता भवतीत्यागमे जहल्लिङ्गः नन्वत्र सप्तमी नाधिकरणार्थे राज्यस्य वसुधाधिकरणत्वानुपपत्तेः अधिकरणनिर्देशानुपयोगाच्च निर्द्धारणसप्तमीत्वे तु आधाराधेययोः पुरसौधयोः सौधतल्पयोस्तल्पवराङ्-

भिन्नदेशतयाऽत्यन्तं कार्य्यकारणभूतयोः ।
युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ॥३८॥

इह यद्देशं कारणं, तद्देशमेव कार्य्यमुत्पद्यमानं दृष्टम्, यथा धूमादि, यत्र हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनं सा तयोः स्वभावोपपन्नपरस्परसङ्गतित्यागादसङ्गतिः । उदाहरणम्,

जस्से अ वणो तस्से अ वेअणा भणइ जणो तं अलिअं ।
दन्तक्खअं कवोले बहुए वेअणा सवत्तीणं ॥

एषा च विरोधबाधिनी न विरोधः भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात्, विरोधे तु विरोधित्वमेकाश्रयनिष्ठमनुक्तमपि पर्य्यवसितम्, अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः, तथा चैवं निदर्शितम् ।

---

नयोः सामान्यविशेषभावाभावान्निर्द्धारणानुपपत्तिः । न हि घटेषु पटः सुन्दर इति भवति । उच्यते राज्ये राजत्वविषये यद्यद्वस्तु तत्र वसुधासारं वसुधायां यद्यद्वस्तु तत्र पुरं सारमित्यादिरीत्या यद्यद्वस्तु तत्रेत्यध्याहारादन्वयः । तथाच राज्य इत्यत्र विषयसप्तमी वसुधायामित्यादिष्वधिकरणसप्तमी । अध्याहृते तत्रेत्यत्र निर्द्धारणसप्तमीति बोध्यम् । असङ्गत्यलङ्कारमाह ।

भिन्नदेशतयेति । एकत्रैव देशेऽवच्छेदभेदेन भिन्नदेशताव्यावर्त्तनायात्यन्तमिति तेन दष्टो भुजङ्गेन पदेऽक्षिणा घूर्णते इत्यत्र वास्तवकथनेनातिव्याप्तिः । तत्र देशैकत्वात् केनाप्यतिशयो नातिव्यङ्ग्येनेति शेषः । संज्ञाव्युत्पत्तिमाह सा तयोरिति । जस्से य इति ।

यस्यैव व्रणस्तस्यैव वेदना भणति तदलीकं जनः ।
दन्तक्षतं कपोले बध्वाः वेदना सपत्नीनामिति ॥ संस्कृतम् ।

वेदना इति । द्वितीयाबहुवचनान्तं भणतीत्यस्य कर्मपदम् । अत्र सपत्नीनामीर्ष्यारूपोऽतिशयो व्यङ्ग्यः । अत्र विरोधालङ्कारत्वप्रसक्तिं निरस्यति एषेति । बाधिनी बाधिका एकाश्रयत्व इव भिन्नाश्रयत्वेऽपि विरोधप्रसक्तिरिति भावः ।

**समाधिः सुकरं कार्य्यं कारणान्तरयोगतः।**

साधनान्तरोपकृतेन कर्त्रा तदक्लेशेन कार्य्यम् आरब्धं समाधीयते, स समाधिर्नाम। उदाहरणम्,

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥

**समं योग्यतया योगो यदि सम्भावितः क्वचित्** ३९

इदमनयोः श्लाघ्यमिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानं चेत्तदा समम्। तत् सद्योगेऽसद्योगे च। उदाहरणम्,

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी,
रूपे देवोऽप्ययमनुपमो दत्तपादो स्मरस्य।
जातं दैवात् सदृशमनयोः सङ्गतं यत्, तदेतत्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्॥ [स०]

---

अनुक्तमपीति एकाश्रयत्व एव विरोधी न भिन्नाश्रयत्वे इत्यनुक्तमपीत्यर्थः। अपवादेति विशेषविधिरपवादः सामान्यविधिरुत्सर्गः अयमेव गोवृषन्यायः तथा चैवेति सर्वस्मिन्नेव विरोधोदाहरणे एकाश्रय एव विरोधो दर्शित इत्यर्थः। समाध्यलङ्कारमाह।

समाधिरिति। मानमस्या इति अत्र माननिराकरणं कार्य्यं पादपतनेन तदारब्धं घनगर्जितेन सुकरं तस्योद्दीपकत्वेन मानभङ्गहेतुत्वात्। समसंज्ञकमलङ्कारमाह।

सममिति। सद्योग इति उत्तमयोर्योगे योग्यतासम्भावनमित्यर्थः। एवमपरत्रापि।

धातुरिति। निकषस्थानं परीक्षास्थानम् अयं देव एतस्या भर्त्ता राजा रूपे विषये स्मरस्योपरि दत्तपादो दत्तपदो वा पाठभेदात् पदं पदावलम्बनं स्मराधिकरूप इत्यर्थः। यदयमादनयोरेतत् सङ्गतं योगो दैवाज्जातं तत्तस्मात् शृङ्गाररसस्य

चित्रं चित्रं वत वत महच्चित्रमेतद्विचित्रम्।
जातो दैवादुचितरचना संविधाता विधाता।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया,
यच्चैतस्याः कवलनकलाकोविदः काकलोकः॥ [अस०]

**क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्।**
**कर्त्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्॥४०॥**
**गुणक्रियाभ्यां कार्य्यस्य कारणस्य गुणक्रिये।**
**क्रमेण च विरुद्धे यत् स एष विषमो मतः॥२१॥**

द्वयोरत्यन्तविलक्षणतया यत् अनुपपद्यमानतयैव योगः प्रतीयते [१], यच्च किञ्चिदारभमाणः कर्त्ता क्रियायाः प्रणाशात् न केवलमभीष्टं यत् फलं न लभेत, यावदप्रार्थितमप्यनर्थं विषयमासादयेत् [२], तथा सत्यपि कार्य्यस्य कारणरूपानुकारे यत् तयो र्गुणौ क्रिये च परस्परविरुद्धतां व्रजतः [३---४] स विपर्य्ययात्मा चतूरूपो विषमः। क्रमेणोदाहरणम्,

---

एकातपत्रं राजत्वमधुना उपनतमित्यर्थः योग्याश्रयं प्राप्येति भावः। असयोगित्वाह।

चित्रमिति। अतिविस्मयेऽतिहर्षे च वीप्सितं प्रथमचरणं स्फीतिः रसः। कला, चातुरी। चतुर्विधं विषमालङ्कारमाह।

क्वचिदिति। श्लेषो योगः घटनामुपपद्यमानतां गुणक्रिये विरुद्धे इति क्रमेण विषम इति चान्वयः। तत्र प्रथमं विषमं व्याचष्टे द्वयोरिति अनुपपद्यमानतयाऽनुचिततया क्वचित्प्रयोगे इदं बोध्यं कर्त्तुः क्रियेत्यादि व्याचष्टे यच्चेति। क्रियायाः प्रणाशादिति उद्देश्यफलाजननमेवात्र प्रणाशः। फलानवाप्तौ क्रियाध्वंसस्याहेतुत्वात् हेत्वन्तरादेव तदप्राप्ते उदाहरणे च तद्बोध्यम्।

गुणक्रियाभ्यामित्यादिकं व्याचष्टे सत्यपीति। अनुकारः सादृश्यं कार्य्यस्य कारणगुणादिसादृश्य[illegible] यद्यपि समवायिकारण[illegible]ाद्यनुकार एव

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः॥ [२]

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः॥ [२]

सद्यः करस्पर्शमवाप्य चित्रं ! रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते॥ [३]

आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम्।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे॥ [४]

अत्रानन्ददानं शरीरतापेन विरुध्यते। एवं,

---

कार्य्यस्य तथापि कविनाऽन्यथापि तथात्वं सम्भाव्य तयो र्गुणक्रियाविरोधो वर्ण्यत इत्यर्थः। एतदप्युदाहरणे बोध्यम्।

शिरीषादपीति। क्व क्व तु सा अव नायिकामदनाग्न्योर्योगोऽनुचिततयैव क्वद्वयेन प्रतिपादितः। कर्त्तुः क्रियेत्यादिकमुदाहरति।

सिंहिका सिंही तत्सुतः सिंहः अन्यः सिंहिकाया राहुमातुः सुतो राहुः साश्रयमाश्रयचन्द्रसहितं शीतांशौ शशदर्शनात् सिंहत्रासादिकमवास्तवमपि सम्भावितं बोध्यम्। शीतांश्वाश्रयण क्रिया सिंहिकासुतात्त्राणं फलं क्रियायास्तदजननरूपात् प्रणाशात् तदनात्मिराश्रयचन्द्रग्रासोऽधिकोऽनर्थः। कार्य्यकारणयो र्गुणविरोधमाह।

सद्य इति। कृपाणः खड्गः लेखाकारत्वाल्लेखा तमालवत् नीलापि सा प्रतिरणे यस्य करस्पर्शमवाप्य शरदिन्द्वित्यादिकं यशः सद्यः प्रसूते इत्यन्वयः। अत्र कारणस्य खड्गस्य गुणो नीलिमा खड्गकार्य्यस्य यशसो गुणः पाण्डुत्वं विरुद्धं तादृशकार्य्यकारणयो र्गुणानुकारस्तु सम्भावित एव न तु वास्तवः। तयोः क्रियाविरोधमाह।

आनन्दमिति। कुवलयेत्यादिकं सम्बोधनम् अत्र कारणस्य नायिकायाः कार्य्यमानन्ददानं क्रिया नायिकाकार्य्यस्य विरहस्य तापनं क्रियाविरुद्धा तदाह।

अत्रेति। इत्थं निमित्तकारणयोः क्रियाविरोधमुदाहृत्य अवयवावयवित्वे कारणकार्य्ययोः क्रियाविरोधमुदाहरति।

विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा॥

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम्।

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकन्तु तत् ४२**

आश्रितमाधेयम् आश्रयस्तदाधारः तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः, तदिदं द्विविधम् अधिकं नाम क्रमेणोदाहरणम्,

अहो विशालं भूपाल! भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥ [आश्र०त०]

---

एवं विपुलेनेति। सागरशयस्य सागरशयनविशिष्टस्य कृष्णस्य विपुलेन कुक्षिणा उदरेण युगक्षये भुवनानि पपिरे पीतानि। स कृष्णः पुनरेकतमया पुरस्त्रियाऽसकलया कटाक्षरूपया एकया दृशा पपे पीतः एकया नायिकया कटाक्षेण सर्वाङ्गीनं दृष्ट इत्यर्थः। अत्र कुक्षिरवयवः कारणम् अवयविनः सागरशयस्याभिन्नः श्रीकृष्णः कार्यः। कारणस्य कुक्षेः क्रिया भुवनपानं कार्यस्य श्रीकृष्णस्य क्रिया तु कर्मतासम्बन्धेन कटाक्षेण पानं तद्विरुद्धं भुवनपादकुक्षिमतः। कटाक्षेण पेयतया विरुद्धत्वेनैवाभासात् यथायोगं यथासम्भवं विलक्षणकार्य्याणां यत्र येन सम्बन्धेन विरोधः सम्भवति तादृशविरोध एवालङ्कार इत्यर्थः। अधिकसंज्ञकमलङ्कारमाह।

महतोरिति। महतोराश्रिताश्रययोराश्रयाश्रयिणौ तनुत्वेऽपि यन्महीयांसौ वर्णनावशात् स्यातां तद्यथासङ्ख्यं द्विविधोऽधिकसंज्ञकोऽलङ्कार इत्यर्थः। तत्र तनुभूतस्याश्रयस्याश्रितापेक्षया महत्त्वमाह।

अहो विशालमिति। माति अवकाशं लभते। अत्र यशोराशिराश्रितो

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः ॥ [आश्रि०त०]

**प्रतिपक्षमशक्तेन प्रतिकर्त्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥ ४३ ॥**

न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत्, तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणं तत् अनीकप्रतिनिधितुल्यत्वात् प्रत्यनीकमभिधीयते। यथाऽनीके अभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थः। उदाहरणम्,

---

महत्त्वेन कविना विवक्षित: तदपेक्षया तनोर्भुवनवितयोदरस्य महत्त्वम्। तनुभूतस्याश्रितस्याश्रयापेक्षया महत्त्वमाह।

युगान्तेति। यस्य कैटभरिपोर्विष्णो र्यस्यां तनौ जगन्ति सविकाशमयन्त्रणमासत तस्यां तपोधनस्य नारदस्याभ्यागमसम्भवा मुदो न ममु: नावकाशं लेभिरे इत्यर्थ:। कैटभरिपो: कीदृशस्य युगान्तकाले प्रतिसंहृता: स्वोदरे प्रवेशिता आत्मान: प्राणिनो येन तादृशस्य तनुद्वयभेदेऽपि कैटभरिपुसम्बन्धित्वे नैकत्वाध्यासाद् यस्यां तत्रे ति नानुपपन्नम् अत्राश्रयस्तनु र्महती तदपेक्षया तन्वीनां मुदां महत्त्वं वर्णितम्। प्रत्यनीकालङ्कारमाह।

प्रतिपक्षमिति। प्रतिपक्षं प्रतिकर्त्तुं तिरस्कर्त्तुं अशक्तेन केनापि या तत्सम्बन्धिनोऽन्यस्य तिरस्क्रिया तस्य प्रतिपक्षस्यैव स्तुत्यै पर्य्यवस्यति सा प्रत्यनीकनामालङ्कार इत्यर्थ:। व्याचष्टे।

न्यक्कृतीति। इदं प्रतिकरणबीजं दर्शितम्। संज्ञाव्युत्पत्तिमाह तदनीकेति प्रतिनिधितुल्यतां वाहयति यथेति।

त्वं विनिर्जितमनोभवरूपः, सा च सुन्दर ! भवत्यनुरक्ता ।
पञ्चभि र्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ।

यथा वा,

यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥

इन्द्रोरत्र तदीयता सम्बन्धिसम्बन्धात् ॥

**समेन लक्ष्मणा वस्तु वस्तुना यत् निगूह्यते ।**
**निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ४४**

सहजम् आगन्तुकं वा किमपि साधारणं यत् लक्षणं, तद्द्वारेण यत्, किञ्चित्केनचिद्वस्तु वस्तुस्थित्यैव बलीयस्तया तिरोधीयते तत् मीलितमिति द्विधा स्मरन्ति । क्रमेण उदाहरणम्

अपाङ्गतरले दृशौ, मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।

---

त्वं विनिर्जितेति । विनिर्जितो मनोभवरूपी येन त्वं तादृशः सा चेति भवति त्वयि अनेन तस्यास्तदीयत्वं दर्शितम् । अतः पञ्चभिरित्यादि अनुशयात् क्रोधजात् दुःखात् ।

यस्य किञ्चिदिति । विष्णुना पुरा राहोः शिरश्छिन्नमतस्तादृशकायनिग्रहेण गृहीतमत्सरो राहु विष्णुस्वरूपस्य यस्य श्रीकृष्णस्य किञ्चिदपकर्त्तुमक्षमः स न तस्य कमनीयवक्त्रसदृशमिन्दुमधुनापि बाधते इत्यर्थः । मात्सर्य्येऽपि च मत्सर इति कोषः । सम्बन्धिसम्बन्धादिति श्रीकृष्णस्य सम्बन्धि तद्वक्त्रं तत्सादृश्यरूपसम्बन्धादित्यर्थः । द्विविधं मीलितालङ्कारमाह ।

समेनेति । निगूह्यमानस्य यल्लक्ष्म चिह्नं तत्समेन निगूहकस्य लक्ष्मणा निजेनागन्तुकेन वा वस्तु यन्निगूह्यते तन्निगूहनमेव निजागन्तुकत्वभेदात् द्विविधो मीलितालङ्कार इत्यर्थः । तत्र निजलक्ष्माणमाह ।

अपाङ्गेति । मृगदृशः अङ्के अर्थात् यौवने सति स्वतो लीलयाऽपाङ्गे तरल-

इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ [स०]

अत्र दृक्तरलतादिकमङ्गस्य स्वाभाविकं साधारणञ्च मदोदयेन तत्राप्येतस्य दर्शनात्।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पम्
तेषामहो बत भियां न बुधोऽप्यभिज्ञः॥ [आ०]

अत्र तु सामर्थ्यात् अवसितस्य शैत्यस्यागन्तुकत्वात् तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यं समानता च, भयेष्वपि तयोरुपलक्षितत्वात्।

**स्थाप्यतेऽपोह्यते वापि यथापूर्वं परम्परम्।**
**विशेषणतया यत्र वस्तु, सैकावली द्विधा॥ ४५॥**

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा सम्भवति सा द्विधा बुधैः एकावली भण्यते। क्रमेणोदाहरणम्,

---

त्वादिकं यत् स्फुरितं तत्तस्मात् मदोदयो मदिरापानाधीनोऽत्र मत्ततोदयः कृतपदोऽपि न लक्ष्यते इत्यर्थः। आगन्तुकलक्षणमाह।

ये कन्दरास्विति। ये तव द्विषस्त्वदभिपातशङ्कायुक्तधियः सन्तः सदा हिमाद्रेः कन्दरासु निवसन्ति उद्गतपुलकं सकम्पञ्चाङ्गमुद्वहतामपि तेषां भियामभिज्ञो बुधः पण्डितोऽपि नेत्यर्थः। बत खेदे हिमसम्बन्धेनापि पुलकादिसम्भवादिति भावः। ननु कम्पपुलकयोस्तदङ्गत्वलक्षितत्वात् कथममागन्तुकत्वमित्यत आह अत्रेति। सामर्थ्यं हिमाद्रिपदलभ्यहिमस्यावसितस्य प्राप्तस्य ताद्रूप्यमागन्तुकत्वम्। एकावल्यलङ्कारमाह।

स्थाप्यते इति। यथापूर्वं पूर्वं पूर्वं वस्तु नियतं परं परं वस्तु विशेषणतया स्थाप्यते अपोह्यते वा तद्वृत्त्यभावप्रतियोगितया निर्दिश्यते वेत्यर्थः।

पुराणि यस्यां सवराङ्गनानि
वराङ्गना रूपपुरस्कृताङ्गाः ।
रूपं समुन्मीलितसद्विलासम्,
अस्त्रं विलासा कुसुमायुधस्य ॥ [स्या०]

न तज्जलं, यन्न सुचारुपङ्कजम्,
न पङ्कजं तत्, यदलीनषट्पदम् ।
न षट्पदोऽसौ, कलगुञ्जितो न यः,
न गुञ्जितं तत्, न जहार यन्मनः ॥ [नि०]

पूर्वत्र, पुराणां वराङ्गनाः, तासाम् अङ्गविशेषणमुखेन-रूपं, तस्य विलासाः तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते। उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ।

## यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।

### स्मरणम्

यः पदार्थः केनचिदाकारेण नियतः यदा कदाचित् अनुभूतोऽभूत् स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने

---

पुराणीति। यस्यां नगर्यां पुराणि वराङ्गनासहितानि वराङ्गनाश्च रूपेत्यादिः एवमपरत्रापि अत्र पुरादिषु वराङ्गनादिकं विशेषणतया स्थापितम् ।

न तज्जलमिति। शरत्कालवर्णनमिदम् । अत्र सुचारुपङ्कजत्वाभाववन्तमुद्दिश्य तदीयजलत्वाभावो विधेयः पूर्वनिर्दिष्टः । तद्वृत्तेरभावस्य प्रतियोगितया सुचारुपङ्कजत्वमुक्तं सुचारुपङ्कजत्वञ्च सुचारु पङ्कजं यत्रेति बहुव्रीहिणा सुचारुपङ्कजमेव विशेषणमपोहितम्। एवमुत्तरत्रापि। ननु वराङ्गनानां विशेषणं न रूपं किन्त्वङ्गमेव तथाच समुन्मीलितेत्यादिकं कथं पूर्वनिर्दिष्टविशेषणतया स्थापितम् अविशेषणे रूपे एव विशेषणतया स्थापितत्वादित्यतो रूपस्यापि परम्परया विशेषणत्वमुपपादयति ताभ्यामिति। स्मरणालङ्कारमाह।

वस्तुनि दृष्टे सति यत्, तथैव स्मर्य्यते, तत् भवेत् स्मरणम्।
उदाहरणम्,

निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः।
तद्भवैः कुहुरुतैः सुरनार्य्यः स्मारिताः सुरतकण्ठरुतानाम्॥

यथा वा,

करजुअगहिअजसोआत्थनमुहविणिवेसिआहरपुडस्स।
समरिअपञ्चजसस्स णमह कण्हस्स रोमञ्चम्॥

**भ्रान्तिमान् अन्यसंवित् तत्तुल्यदर्शने॥ ४६॥**

तदिति अन्यत् अप्राकरणिकं निर्दिश्यते तेन समानम् अर्थादिह प्राकरणिकम् आश्रीयते, तस्य तथाविधस्य दृष्टौ सत्यां यत्, अप्राकरणिकतया संवेदनम् स भ्रान्तिमान्, न चैष रूपकं प्रथमातिशयोक्ति र्वा तत्र वस्तुतो भ्रमस्याभावात् इह

---

यथानुभवमिति। वृत्तावेवास्य स्पष्टा व्याख्या स्मृतिप्रबोधः उद्बोधः तथैवेति पूर्वानुभूतरूपेणैवेत्यर्थः।

निम्नेति। अप्सरसां जलक्रीड़ावर्णनमिदं चलदृशां नारीणां निम्ननाभिगुहास्य-लहरीभिस्तरङ्गै र्यदम्भः प्लावितं प्रवेशितं कुहुकुहेत्यव्यक्तरुतैः सुरनार्य्यः सुरतकण्ठ-रुतानि स्मारिताः। स्मृत्यर्थकर्मणि षष्ठी। सुरनार्य्यश्च कारितान्तात् कर्मणि क्तप्रत्यये-नोक्ताः। करजुएति।

करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य।
संस्मृत पाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चमिति॥ संस्कृतम्।

भ्रान्तिमदलङ्कारमाह।

भ्रान्तिमानिति। अन्यसदृशस्य प्राकरणिकस्य दर्शने सति यदन्यत्वेन संवे-दनमित्यर्थः। एवमेव व्याख्यातुं तत्तुल्येत्यत्र तत्पदार्थं व्याचष्टे तदितीति। तथा-विधस्य प्राकरणिकस्य तुल्यस्य नचैतदिति प्राकरणिकस्य मुखस्य अप्राकरणिकचन्द्र-तुल्यत्वेन संवेदनाद्रूपकत्वप्रसक्तिः। ननु रूपके प्राकरणिकस्य मुखस्य शाब्दत्वमत्र तु न तथेति भेद इत्यत आह प्रथमेति कमलमनम्भसीत्यादौ मुखानुक्तिरूपनिगरण-

च अर्थानुगमनेन संज्ञायाः प्रवृत्तेः तस्य स्पष्टमेव प्रतिपन्नत्वात्। उदाहरणम्,

कपाले मार्जारः पय इति करान् लेढि शशिनः,
तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति,
प्रभामत्तश्चन्द्रो जगदिदमहो! विप्लवयति॥

**आक्षेप उपमानस्य, प्रतीपमुपमेयता।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम्॥४७**

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यत् उपमानमाक्षिप्यते, यदपि, तस्यैवोपमानतया प्रसिद्धस्योपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तत् उपमेयस्योपमानप्रतिकूलवर्त्तित्वात् उभयरूपं प्रतीपम्। क्रमेणोदाहरणम्,

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनाम्,
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।

---

रूपा प्रथमातिशयोक्तिरित्यर्थः। वस्तुतो भ्रमस्येति आहार्य्यज्ञानविषयत्वात्तस्येत्यर्थः। अर्थानुगमनेनेति विषयतासम्बन्धेन भ्रान्तिविशिष्ट इत्येवमर्थावगमः। बाधावतारात् पूर्वं भ्रमः बाधकालीनन्त्वाहार्य्यं तच्च भ्रमप्रमाभिन्नं तृतीयज्ञानमेवेति तत्सिद्धान्तः।

कपाले इति। अहो प्रभामत्तश्चन्द्र इदं जगत् विप्लवयति। तद्दर्शयति कपाले इति कपाले स्थालीकर्परे पय इति दुग्धमिति। तरुच्छिद्रं तरुपत्रान्तरालं तेन प्रोतान् प्रविष्टान् करानित्यन्वयः। बिसं मृणालं सङ्कलयति गृह्णाति वनिता च नव्या बोध्या। द्विविधं प्रतीपालङ्कारमाह।

आक्षेप इति। आक्षेपो विफलतयाऽधिक्षेपः तस्य उपमानस्य उपमेयता यदि वा कल्प्या इत्यन्वयः। कैमर्थ्येन किमर्थतया वैयर्थ्येन संज्ञाव्युत्पत्तिमाह तदुपमेयस्येति।

इन्दुः किं घटितः किमेष विहितः पूषा, किमुत्पादितम्
चिन्तारत्नमहो, मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ [आ०]
ए ! एहि दाव सुंदरि ! कण्णं दाऊण सुणसु वअणिज्जं ।
तुह्म मुहेण किसोअरि ! चंदो उअमिज्जइ जणेण ॥ [अनि०]

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् उपमित्यनिष्पत्त्या वअणिज्जमिति वचनीयपदाभिव्यङ्ग्यस्तिरस्कारः । क्वचित्तु निष्पन्नैवोपमितिक्रिया अनादरनिबन्धनम् । यथा,

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे ! ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥ [नि०]

इहोपमेयीकरणमेव उत्पलानामनादरः । अनयैव रीत्या यत् असामान्यगुणयोगात्, न उपमानभावमपि अनुभूतपूर्वं

---

लावण्यौकसीति । हे देव ! लावण्यादिविशेषणचतुष्टयविशिष्टे त्वयि वेधसा निष्पादिते इन्द्वादिचतुष्टयनिष्पादनं व्यर्थेति पूर्वापरार्द्धार्थः । तवैव लावण्यवत्त्वादिन्दोर्वैयर्थ्यम् एवं तवैव सत्प्रतापगरिमवत्त्वात् पूष्णः सूर्य्यस्य तवैव त्यागाधिक्याच्चिन्तारत्नस्य तव भुजस्यैवावनीभरक्षमत्वात् कुलक्ष्माभृतां वैयर्थ्यमित्यर्थः । उपमानस्योपमेयताकल्पनाच्च ।

ए एहीति । ए ! एहि तावत् सुन्दरि ! कर्णं दत्त्वा शृणु वचनीयम् ।
तव मुखेन कृशोदरि ! चन्द्र उपमीयते जनेन इति ॥ संस्कृतम् ।

ए इति । प्राकृतसाक्षेपसम्बोधने । वचनीयं परिवादम् । चन्द्रस्तव मुखस्य उपमानं न भवतु तस्य त्वन्मुखोपमेयताऽपि त्वन्मुखस्य परिवाद इत्यर्थः । अत्रेति वचनीयपदाभिव्यङ्ग्यतया उपमित्यनिष्पत्त्या इत्यन्वयः ।

गर्वमिति । असंवाह्यं संवोढुमयोग्यं लोचनयुगलेन गर्वं किं वहसीत्यन्वयः । सन्तीदृशानीति । इदं लोचनयुगलमिव दृश्यन्ते यानि इत्यर्थे नीलनलिनानामुपमानानामुपमेयताकल्पनं तेषां तिरस्कारनिबन्धनं नीलादिपदोपपदपद्मवाचकपदानामेवोत्पलबोधकत्वमतो नलिनपदस्यापि तथात्वम् । उपमितिस्तु वचनीयपदाभावा-

सहते, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम्। यथा,

अहमेव गुरुः सुदारुणानाम्
इति हालाहल ! तात ! मा स्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥

अत्र, हालाहलस्योपमानत्वमसम्भाव्यम् एवोपनिबद्धम्।

**प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया।**
**ऐकात्म्यं बध्यते योगात् तत्सामान्यमिति स्मृतम् ४८**

अतादृशमपि तादृशतया विवक्षितुं यत् अप्रस्तुतार्थेन सम्पृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते तत् समानगुणनिबन्धनात् सामान्यम्। उदाहरणम्,

---

निष्पन्नैव उपमानमधिक्षिप्य यत्र तस्य उपमानता कल्प्यते तत्रापि तस्याधिक्षेपवशात् तिरस्कारिणायमलङ्कार इत्याह अनयैवेति। तथाच तस्य उपमेयता कल्प्या इत्युपलक्षणम् उपमानस्य तिरस्कारमात्रेऽयमलङ्कार इत्यर्थः। यदसामान्येति। असामान्यस्य असाधारणस्य योगादुय उपमानभावस्तं यन्न सहते इत्यर्थः। तदसहनक्षाक्षेपवशादिति बोध्यम्। तस्य तत्कल्पनायां उपमानताकल्पनायाम्।

अहमेवेति। हे हालाहाल ! तात ! अहमेवेत्यादि कृत्वा दृप्यो मास्म दर्पं मा कुर्वित्यर्थः दर्पाकरणे हेतुमाह नन्विति। भवदिव दृश्यन्ते यानि तानि भवादृशानि भवदुपमेयानीत्यर्थः।

अत्रेति। असम्भाव्यं दर्पकरणनिषेधरूपादधिक्षेपात्। सामान्यसंज्ञकमलङ्कारमाह।

प्रस्तुतस्येति। प्रस्तुतस्य प्रकृतस्य अन्येनाप्रकृतेन सहैकात्म्यमभेदो बध्यत इत्यर्थः। एकात्मता बन्धश्च भेदेनानुपलभ्यमानतया पर्य्यवसित एव बोध्यः। रूपकेऽप्येकात्मताबन्धसत्त्वात्तद्वारणायाह योगादिति। सम्पृक्तमिति तस्यैव व्याख्या

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः ।
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥

अत्र प्रस्तुततदन्ययोः अन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः, अत एव पृथग्भावेन न तयोः उपलक्षणम् ।
यथा वा

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन् को वेदयिष्यन्नवचम्पकानि ॥

अत्र निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते प्रतीतत्वात्तस्य, प्रतीतेश्च बाधायोगात् ।

---

वक्ष्यमाणतद्गुणालङ्कारवारणाय पूरयित्वा व्याचष्टे अपरित्यक्तेति तद्गुणे तु निजगुणत्यागः । संज्ञाव्युत्पत्तिमाह समानेति ।

मलयजेति । शशभृति चन्द्रे धरां धवलयति सति अविभाव्यताम् अपरिचेयतां गता अभिसारिका निरस्तलोकपरिचेयत्वभियः सत्यः प्रियवसतिं सुखमेव प्रयान्तीत्यन्वयः । अपरिचेयत्वे हेतुगर्भविशेषणमाह ।

मलयजेत्यादि । दन्तपत्रं हस्तिदन्तकृतभूषाविशेषः । एतादृशश्वेताभरणादपरिचेयता तद्वशादेकात्मताबन्धः पर्य्यवस्यति ।

वेत्रत्वचेति । प्राच्यदेशे वेत्रविशेषो गौरत्वक् तदीयत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि नवचम्पकानि कश्चम्पकत्वेनावेदयिष्यत् यदि सहेलं सलीलं भृङ्गा नापतिष्यन् क्रोधात् दष्टुं, गण्डेऽपि पतनसम्भवात् सहेलमित्युक्तं गण्डचम्पकयोर्वर्णसाम्यादपरिचयः । अत्रापि भेदेन परिचेयत्वाभावादेकात्मतापर्य्यवसानम् ।

अत्रेति । निमित्तान्तरं भृङ्गपातः व्युदसितुम् अप्रतीतिं कर्त्तुं बाधायोगात् अप्रतीतिकरणत्वायोगात् पुनः प्रतीत्यजननरूपोऽप्रामाण्यज्ञानरूपो वा बाधस्तु

विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ ४९ ॥
अन्यत् प्रकुर्वतः कार्य्यमशक्यान्यस्य वस्तुनः ।
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥५०॥

प्रसिद्धाधारपरिहारेण यत्, आधेयस्य विशिष्टा स्थितिः अभिधीयते, स प्रथमो विशेषः । उदाहरणम्

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥

एकमपि वस्तु यत् एकेनैव स्वभावेन युगपदनेकत्र वर्त्तते, स द्वितीयः । उदाहरणम्

सा वसइ तुज्झ हिअए, सा चेअ अच्छीसु सा अ वअणेसु ।
अह्मारिसाणं सुन्दर ! ओआसो कधं पाबाणं ॥

यदपि किञ्चिद्रभसेनारभमाणस्तेनैव यत्नेनाशक्यमपि कार्य्यान्तरमारभते, सोऽपरो विशेषः । उदाहरणम्

---

अस्त्येव तथाच पूर्वं तादृशप्रतीतिवशादेवायमलङ्कार इति भावः । त्रिविधं विशेषालङ्कारमाह ।

विनेति । वृत्तावेवास्य स्पष्टा व्याख्या ।

दिवमपीति । दिवमुपयातानामपि येषां कवीनामनल्पगुणगणा गिरः आकल्पं रमयन्ति ते कवयः कथमिव न वन्द्या इत्यर्थः । अत्र कर्त्तात्सम्बन्धेनाधाराः कवयः । द्वितीयं विशेषं व्याचष्टे एकमपीति एकात्मा इत्यस्य विवरणमेकेनैवेति । सा वसइ इति ।

सा वसति तव हृदये सा चैवाक्षिषु सा च वचनेषु ।
अस्मादृशीनां सुन्दर ! अवकाशः कथं पापानामिति ॥ संस्कृतम् ।

अत्र हृदयाद्येकैव [illegible] युगपदेकस्या नायिकाया वृत्तिः । तृतीयं

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥

यथा वा,

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥

सर्वत्र एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेन अवतिष्ठते, तां विना प्रायेणालङ्कारत्वायोगात् अत एवोक्तम्,

सैषा सर्वत्र वक्रोक्तिः, अनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्य्यः, कोऽलङ्कारोऽनया विना इति ॥

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।**
**वस्तु तद्गुणतामेति, भण्यते, स तु तद्गुणः ॥५१**

---

विशेषं व्याचष्टे यदपि चेति । आरभते जनयति स्फुरदिति । स्फुरदित्यादिविशेषणत्रयविशिष्टं त्वां सृजता विधिना सत्यं भुवि मनोभवादित्रयं ससृजे ।

स्फुरदित्यादि विशेषणान्मनोभवस्य उत्प्रतापेत्यादिविशेषणात् सवितुः अनवद्येत्यादिविशेषणात् बृहस्पतेः सर्जनं नव इति विष्वेव सङ्गमनीयं त्वमेव भुवि नवमेतत् त्रयमित्यर्थः । भावसृजनमुदाहृत्य अभावसृजनमुदाहरति ।

गृहिणीति । इन्दुमतीमरणेऽजविलापोऽयम् । मिथो रहसि ललिते कलाविधौ सुरतकेलौ त्वां हरता निष्करुणेन विधिना मम किं न हृतं तद्वद । गृहिणीत्यादिचतुष्कं हृतं तच्चतुष्कमेव मम सर्वस्वमिति भावः । अतएव हरणादन्यत्रयहरणम् । ननु पूर्वश्लोकेन वस्तुतो मनोभवादिसृजनं परश्लोके च न वस्तुतः सचिवादिहरणम् एवं पूर्वोक्तालङ्कारेष्वपि यद्यदुक्तं तत्तन्न वास्तवमित्यत आह सर्वत्रैवमिति उक्तवक्ष्यमाणेष्वित्यर्थः । अतिशयोक्तिराहार्य्यारोपोक्तिः प्रायेणेति । यथासङ्ख्यादिकतिपयालङ्कारान् विनेत्यर्थः । सैषेति । वक्रोक्तिराहार्य्यारोपोक्तिः विभाव्यते वैचित्र्यरूपेण विशेषेण भाव्यते प्रतीयत इत्यर्थः । तद्गुणालङ्कारमाह ।

स्वमुत्सृज्येति । तद्गुणताम् उज्ज्वलगुणीयगुणवत्तां व्याचष्टे वस्तु तिरस्कृ-

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसम्पदोपरक्तं तत्प्रतिभासमेव यत् समासादयति, स तद्गुणः, (तस्य अप्रकृतस्य गुणोऽत्रास्तीति)। उदाहरणम्,

विभिन्नवर्णा गरुड़ाग्रजेन सूर्य्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥

अत्र रवितुरगापेक्षया गरुड़ाग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता।

## परगुणाननुहारस्तुस्य, तत् स्यादतद्गुणः।

यदि तु तदीयम् वर्णं सम्भवन्त्यामपि योग्यतायाम् इदं न्यूनगुणं न गृह्णीयात्, तदा भवेदतद्गुणो नाम। उदाहरणम्,

धवलोऽसि जहवि सुन्दर! तहवि तुए मज्झ रंजिअं हिअअं।
राअपूरिए वि हिअए सुहअ! णिहितो ण रत्तोऽसि॥

---

तेति। वस्तुतः समुत्सृजनाभावात्तिरस्कार एव समुत्सृजनमिति भावः। तिरस्कारहेतुमाह योगादिति तद्विवरणं केनापीत्यादि।

विभिन्नवर्णा इति। यत्र गिरौ सूर्य्यस्य रथ्या रथतुरगाः स्वभावतो हरिद्वर्णा अपि गरुड़ाग्रजेनारुणेन विभिन्नवर्णा अरुणीकृताः वंशकरीरैर्वंशाङ्कुरैरिव नीलैः रत्नैः परितः स्फुरन्त्या रुचा स्वां स्वीयां लीलां रुचमानिन्यिरे प्रापिता इत्यर्थः। अत्र तद्गुणद्वयं ग्राहयति अत्रेति। अतद्गुणालङ्कारमाह।

तद्रूपेति क्वचित्पाठः। अस्येति प्रकृतस्येत्यर्थः। तत् स्यात्तदा स्यात् परगुणाननुहारः परस्य स्वतः सिद्ध एव किं तत्र वैचित्र्यमित्यतः पूरयित्वा व्याचष्टे सम्भवन्त्यामपीति। धवलोऽसीति।

धवलोऽसि यद्यपि सुन्दर! तथापि त्वया मम रञ्जितं हृदयम्।
रागपूरितेऽपि हृदये सुभग! निहितो न रक्तोऽसीति॥ संस्कृतम्।

धवलो विशदस्वभावः वैशद्यात् श्लेषवशात्तु शुक्लगुणः विरोधालङ्कारः गौरपरं वा अत्र धवलपदं रञ्जितरक्तपदद्वयमपि श्लेषवशादनुरक्तत्वीणपरम्। नव पूर्वार्द्ध

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इति अतद्गुणः।

किञ्च तदिति अप्रकृतम्, अस्येति च प्रकृतमत्र निर्दिश्यते, तेन यत्, अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् न अनुविधीयते, सोऽतद्गुण इत्यपि प्रतिपत्तव्यम्। यथा,

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः।
राजहंस! तव सैव शुभ्रता चीयते न च नचापचीयते॥

**यद्यथा साधितं केनाप्यपरेण तदन्यथा॥ ५२॥**
**तथैव यद्विधीयेत, स व्याघात इति स्मृतः।**

येनोपायेन यत् एकेनोपकल्पितं, तस्यान्येन जिगीषुतया तदुपायकमेव यत् अन्यथाकरणं, स स्वसाधितवस्तुव्याहति-हेतुत्वात् व्याघातः। उदाहरणम्,

---

स्वयं योगेन रञ्जकत्वधवलत्वगुणयोरेवात्र नायके विरोधाभासः परार्द्धे तु अतद्गुणः तं ग्राहयति।

अत्रेति। तद्गुणालङ्कारे अप्रकृतस्य गुणग्रहणं प्रकृते नेत्युक्तम् अतद्गुणे तु प्रकृताप्रकृतत्वनियमो नास्तीत्यतः प्रकृतद्वये तदुदाहृत्य प्रकृतेनाप्रकृतगुणाग्रहणेऽप्ययमलङ्कार इति वक्तुमाह।

किञ्चेति। तदितीति तद्रूपेत्यत्र तत्पदमप्रकृतपरमपि अस्येत्यत्रेदंपदन्तु प्रकृतपरमेवेत्यर्थः। तथाच प्रकृतेनाप्रकृतगुणाग्रहणे उदाहरति।

गाङ्गमिति। गाङ्गं गङ्गाया अम्बु सितं यामुनं यमुनाया अम्बु कज्जलाभमित्यर्थः। अत्र यामुनाम्बुपेक्षया राजहंसः प्रकृतः सम्बोध्यत्वात् यद्यप्यत्र अप्रस्तुतप्रशंसायां स्वसन्निहितपरजनगुणाग्रही जन एव प्रकृतः तथापि सम्बोध्यत्वेनाम्बुद्वयापेक्षया राजहंसस्यापेक्षिकं प्रकृतत्वं न तु सम्बोध्यत्वमात्रादेव प्रकृतत्वं तदा येनास्याभ्युदितेन चन्द्र गमितः क्लान्तिमित्यादौ सम्बोध्यस्य चन्द्रस्य प्रकृतत्वापत्त्या अप्रस्तुतप्रशंसोदाहरणत्वानुपपत्तेः अत आपेक्षिकमेव प्रकृतत्वम् अप्रकृतस्यापि राजहंसस्य सम्बोध्यत्वात् परगुणाग्राहित्वस्वभावत्वात् निमित्तम्। व्याघातालङ्कारमाह।

यद्यथेति। यथा येनोपायेन साधितं यद्वस्तु अपरेण तथैव तेनोपायेनैव तद-

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥

**सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥५३॥**

एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवमन्योन्यनिरपेक्षतया यत् एकत्र शब्दभाग एव, अर्थविषय एव, उभयत्रापि वा अवस्थानं सा एकार्थसमवायस्वभावा संसृष्टिः । तत्र शब्दालङ्कारसंसृष्टिः यथा,

वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया ।
चलितया विदधे कलमेखला कलकलोऽलकलोलदृशाऽन्यया ॥

अर्थालङ्कारसंसृष्टिस्तु,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । [उत्०]
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ [उप०]

---

न्यथा विधीयत इत्यर्थः । एवमेव व्याचष्टे येनेति संज्ञाव्युत्पत्तिमाह साधितेति ।

दृशा दग्धमिति । दृशैव कटाक्षेणैव पुंसां तत एव कामोद्रेकात् अत्र दृगुपायेनैव साधितस्य दाहस्य दृगुपायेनैव जीवनादन्यथाकरणं न केवलमेतावता जयोऽपि तु विरूपाक्षस्य तस्य वामलोचनत्ववशादपि जयः । वामं सुन्दरम् । उक्तालङ्काराणामन्योन्ययोगाधीनालङ्कारानाह सैषेति भेदेनेति व्याचष्टे अन्योन्यनिरपेक्षतयेति वक्ष्यमाणत्रिविधसङ्करे हि अन्योन्यसापेक्षता तद्राहित्येनेत्यर्थः । यथासम्भवं संसृष्टिं विवृणोति एकत्र शब्दभाग इत्यादि । समवायः सम्बन्धः । वदनसौरभेति नायिकान्तरक्रियावर्णनानन्तरं भ्रमरव्याकुलिताया अन्यस्या नायिकाया वर्णनमिदम् । चलितयाऽन्यया नायिकया कलो गभीरो मेखलाकलकलोऽव्यक्ततादृशशब्दो विदधे । कीदृश्या वदनसौरभाधीनलोभेन परिभ्रमतो भ्रमरात् सम्भ्रमेण भयेन सम्भृता जनिता शोभा यस्यास्तादृश्या तथा अलके लोलदृशा अलके भ्रमरभ्रमेण तत्र दृग्लोलत्वम् । अत्र पूर्वार्द्धे भकारस्य तृतीयचरणे च लकारस्यानुप्रासः चतुर्थचरणे च यमकं परस्परनिरपेक्षं त्रिविधसङ्करासम्भवात् ।

लिम्पतीति । अत्र श्लोकद्वये अलङ्कारद्वयसंसृष्टिं स्वतन्त्रेच्छत्वात् व्युत्क्रमेणाह ।

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः ; उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दार्थालङ्कारयोस्तु संसृष्टिः,

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअस्सम् ।
तरुणाणं हिअअलुडिं परिसक्कन्तीं णिवारेइ ॥

अत्रानुप्रासो रूपकञ्चान्योन्यानपेक्षे, संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

## अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः ।

एते एव यत्रात्मनि अनासादितस्वतन्त्रभावाः परस्परम् अनुग्राह्यानुग्राहकतां दधति स एषां सङ्कीर्य्यमाणस्वरूपत्वात्, सङ्करः । उदाहरणम्,

आत्ते सीमन्तरत्ने मरकतिनि, हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणि-तुलाकोटियुग्मे गृहीते ।

---

पूर्वत्रेति । तथाविधपरस्परनिरपेक्षे । शब्दतदर्थालङ्कारयोः संसृष्टिं दर्शयति सो णत्थीति ।

स नास्ति अत्र ग्रामे य एनां मह महीयमानलावण्याम् ।
तरुणानां हृदयलुण्ठाकीं परिष्वक्कन्तीं निवारयति ॥ इति संस्कृतम् ॥

प्रौढ़यौवनायाः कस्याश्चिदुपभोगेन दर्पनिवारकमन्विष्यतः कस्यचिदुक्तिरियम् । महामहेति उत्सवोत्सवायमाने इत्यर्थः । परिष्वक्कन्तीं दीप्यमानां निवारयति यौवनदर्पादिति शेषः । अत्रेति णत्थि एत्थेति महमहेति चानुप्रासः लुण्ठाकीरूपकञ्च संसर्गात्मकस्य संसृष्टिपदस्यार्थमत्र दर्शयति संसर्गश्चेति खिम्पतीन्यत्र वाक्यभेदात्तादृशसंसर्गानुपपत्तेराह छन्दसि वेति छन्दः पद्यम् । अलङ्काराणामङ्गाङ्गिभावरूपमनुग्राह्यानुग्राहकत्वं सङ्करमाह ।

अविश्रान्तीति । विश्रान्तिः स्वातन्त्र्यमात्मनि तदभावजुषाम् अस्वतन्त्रात्मनामित्यर्थः । सङ्कर इत्यत्र एक इति शेषः । सङ्करान्तरस्य वक्ष्यमाणत्वात् ।

आत्ते इति । हे राजन् ! अरण्ये इत्वरीणां पर्य्यटन्तीनां त्वदरिमृगदृशां पूर्वा-

शोणं बिम्बोष्ठकान्त्या, त्वदरिमृगदृशामित्वरीणामरण्ये, राजन्! गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति॥[द्वयोः]

अथ तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं, तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः। यथा वा,

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।
परिप्रेङ्खत्तारापरिकर-कपालाङ्कित-तले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति। [बहु०]

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते। कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते, अस्य हि रूप-

---

र्द्धोक्तसमस्तालङ्कारे कृते सत्यपि हारं मुक्ताग्रैवेयकं शबराः किराता नैव हरन्ति अहरणे हेतुमाह गुञ्जेति तादृशभ्रमे हेतुमाह शोणमिति पूर्वार्द्धे भ्रान्ते गृहीते ताटङ्कपत्रं कर्णभूषाविशेषः मरकतिनीत्यस्य पूर्वापरयो र्द्वयोरप्यन्वयः। मणितुलाकोटिर्मणियुक्तनूपुरः।

अत्रेति। तद्गुणमिति हारेण बिम्बोष्ठगुणशोणत्वग्रहणरूपतद्गुणालङ्कारं तज्ज्ञानाधीनत्वात् मुक्ताफलभ्रान्तिमदलङ्कारस्य तदपेक्षाप्रादुर्भूतं जातं तदाश्रयेण चेति एतादृशभ्रान्त्यजनने तादृशतद्गुणस्य विदग्धजनचमत्कृतिनिमित्तत्वाभावात्। अलङ्कारसङ्करमाह।

जटाभाभिरिति। शशी व्योम्नि चरति पितृवने श्मशान इव व्योमश्मशानयोर्विशेषणमाह। परिप्रेङ्खन् चलन् तारापरिकरः कपालानीव तेनाङ्कितं तलं स्वरूपं यस्य व्योम्नि तथाभूते श्मशाने तु परिप्रेङ्खन् तारापरिकर इव यानि कपालानि तैरङ्किततले एवं व्योम्नः श्मशानतुल्यत्वं उक्तं तच्चारिणः शशिनस्तच्चारियोगित्वं व्यक्तम्। अतः शशिनस्तदुपयोगिविशेषणान्याह जटाभाभिरिति जटातुल्याभिर्भाभिर्विशिष्ट इत्यर्थः। विशेषणे तृतीया। योगिनोऽपि जटावत्त्वात् तथाच जटातुल्य-

कत्वे तिरोहितकलङ्करूपम् अच्छवलयमेव मुख्यतया अवगम्यते, तस्यैव च करग्रहणयोग्यतायां सार्वत्रिकी प्रसिद्धिः, श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव प्रत्यासत्त्या उपचर्य्य योज्यते, शशाङ्केन केवलं कलङ्कस्य मूर्त्त्यैव उद्वहनात् कलङ्कोऽच्छवलयमिवेति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः, नचास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्। एवंरूपश्च सङ्करः शब्दालङ्कारयोरपि परिदृश्यते। यथा,

---

रश्मीनां जटात्वं व्यङ्ग्यं करी रश्मिरेव करी हस्तः तेन धृतकलङ्करूपाच्छवलयः योगिनोऽप्यच्छवलयधारित्वात्। तथा कलितेन प्राप्तेन वैराग्येण उदयकालीनरक्तिमशून्यत्वेनैव विषयवैराग्येण विशदः शुभ्र एव विशदी निष्पापः योगिनोऽपि विषयवैराग्येण निष्पापत्वात्। विषयवैराग्यस्य हेतुमुत्प्रेक्षते वियोगीति उद्दीपकत्वाच्चन्द्रेण वियोगिव्यापादनात् पापोत्पत्त्यैव वैराग्योत्पत्तेरित्यर्थः। भस्मेव आपाण्डुरेव भस्मनैवापाण्डुः योगिनोऽपि भस्मना आपाण्डुत्वात् सर्वमिदं शशिनो योगित्वेन व्यङ्ग्यत्वात्। अत्रेति जटाभाभिरित्यत्र पित्रवन इत्यत्र तारापरिकरेत्यादौ चोपमा शशिनि च व्यङ्ग्यरूपकं करे हस्तस्य कलङ्केऽच्छवलयस्य रक्तिमशून्यत्वे विषयवैराग्यस्य निर्मले निष्पापस्य च रूपकं वैराग्यहेतुत्वेन वियोगिव्यापत्ते विशदपदार्थः। निष्पापत्वहेतुत्वेन वैराग्यस्य चन्द्रनिष्ठापाण्डुत्वहेतुत्वेन भस्मनश्चोत्प्रेक्षा रश्मिहस्तयोः करपदस्य रक्तिमशून्यत्वविषयवैराग्ययो वैराग्यपदस्य निर्मलत्वनिष्पापयोर्विशदपदस्य च श्लेषः एषामलङ्काराणामेकानुरोधित्वमपरस्येत्यतोऽङ्गाङ्गिभावः। ननु कलङ्काच्छवलय इत्यत्र कलङ्कोऽच्छवलयमिवेत्युपमा समासस्यापि सम्भवाद्रूपकोपमयोः सन्देहसङ्कर एवायं तत्कथं तदंशेऽनुग्राहकत्वसङ्कर इत्यत आह कलङ्क एवेति रूपकेति रूपणाधिकरणस्यापलपितप्रायत्वं तिरोधानं मुख्यतयेति धरणक्रियान्वयितया मुख्यता ननु रश्मौ रूपितेन हस्तेनाच्छवलयधरणप्रतीतिरपि करध्रियमाणे कलङ्केऽच्छवलयरूपणादेव कलङ्कस्य करध्रियमाणत्वन्तु बाधितमेवेत्यत आह श्लेषच्छायया त्विति। अन्यालङ्कारनिर्वाहकस्य श्लेषस्य श्लेषालङ्कारत्वाभावाच्छायाप्रत्यासत्त्या इति हस्तवाचककरपदवाच्यरश्मिसामानाधिकरण्यकलङ्कस्य हस्तेन सह प्रत्या-

राजति तटीयमभिहत दानव-रासाऽतिपाति-साराव नदा।
गजता च यूथमविरत-दानवरा साऽतिपातिसारा वनदा॥

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे।

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥५४॥**

---

सक्तिः तया उपचर्य्य आरोप्य असदेव धरणं कलङ्के योज्यते इत्यर्थः। तथाच कलङ्कस्य हस्तध्रियमाणत्वात्तव रूपितस्याचवलयस्य तेन धरणमुपपन्नम्। ननु शशाङ्केन रश्मिनैव कलङ्कस्य धरणमस्ति तत्कथमुपचार इत्यत आह शशाङ्केनेति। मूर्त्त्या मण्डलेन। ननु कलङ्केऽचवलयरूपणादेवोक्तप्रत्यासत्त्या उपचारकल्पनं तथाचैवमुपचारपरीहाराय कलङ्केऽचवलयोपमैवास्तु इत्याशङ्क्य तथापि नोपचारपरिहार इति समाधत्ते कलङ्कोऽचवलयमिवेतीति उत्कटतया धरणान्वयितया नन्वस्येव तदन्वयितया बोध इत्यत आह नचास्येति मुख्येऽपीति भावः। तद्वितान्तं मुख्यत्वेऽपीत्यर्थः। उपचार उक्तप्रत्यासत्त्या हस्तधरणोपचार एव इत्यर्थः। नचैवमुभययाप्युपचारेण उपमारूपकयोः सैव सन्देहसङ्करापत्तिरिति वाच्यम्। अचवलयस्य हस्तेन धरणस्य सार्वलौकिकप्रसिद्धत्या रश्मौ हस्तस्य कलङ्केऽचवलयस्य रूपकमेव पुरस्फूर्त्तिकं नोपमेति भावस्य प्रागेव दर्शितत्वात्। एवंविधोऽनुग्राह्यानुग्राहकरूपः।

राजतीति। इयं तटी राजति तत्सम्बन्धित्वेनात्र नदस्य कथनान्नदस्यैव तटी बोध्या। तटी कीदृशी अभिहती नाशिती दानवानां रासः क्रीड़ा यत्र तादृशी अभिहतिश्च पराई खरसाङ्गजयूथकर्तृका बोध्या। पुनः कीदृशी अतिपाती तीव्रवेगः साराव आरावयुक्तो नदो यस्यास्तादृशी अनेन तटी [नदस्येति व्यक्तम् आरावश्च कल्लोलस्य जलपक्षिणाञ्च बोध्यः। तथा सा प्रसिद्धा गजता गजसमूहोऽत्र यूथं स्वपालनीयगजयूथम् अतिपाति अतिशयं पालयति यतः सारस्य प्रधानस्य अवनस्य पालनस्य दात्री तस्यां गजयूथसत्त्वात् तेनैव दानवरासाभिहति बोध्या। गजता कीदृशी अविरतेन दानेन मदजलेन वरा श्रेष्ठा प्रमत्तत्वात्।

अत्रेति। दाव इत्यादिकं द्वितीयचतुर्थचरणद्वयं यमकम् उभयत्रैव प्रतिलोमपाठः। एकघटकैकवर्णपरावृत्त्या परस्य भङ्गः इत्यतः परस्परमनुग्रहः। अलङ्कारयोः सन्देहसङ्करमाह।

द्वयोर्बहूनां वा अलङ्काराणाम् एकत्र समावेशेऽपि विरोधात् न यत्र युगपदवस्थानं, नचैकतरस्य परिग्रहे साधकं, तदितरस्य परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीय: सङ्कर:, समुच्चयेन सङ्करस्यैवाक्षेपात्। उदाहरणम्,

जह गम्भीरो जह रअणणिब्भरो
जह अ णिम्मलच्छाओ।
तह किं विहिणा एसो
सरसबाणिओ जहणिही ण किओ॥

अत्र, समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीते: किमसौ समासोक्ति:, किम् अब्धेरप्रस्तुतस्य मुखेन, कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीते: इयमप्रस्तुतप्रशंसा इति सन्देह:। यथा वा,

---

एकस्येति। न्याय: साधकप्रमाणम् एकस्याप्यलङ्कारस्य परस्परविरुद्धस्य ग्रहे तदभावादनिश्चय: सन्देहरूपोऽपर: सङ्कर इत्यर्थ: व्याचष्टे द्वयोरिति। ननु द्वयमेव गृह्यतामित्यत आह विरोधादिति। समुच्चयेनेति। एकस्य चेति चकारस्यानिश्चयश्चेत्यन्वयेन सङ्करस्यैव समुच्चितत्वादित्यर्थ:।

जह गम्भीर इति यथा

गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छाय:।

तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृत:॥ इति संस्कृतम्।

अप्रस्तुतार्थप्रतीतेरिति। समुद्रस्य प्रकृतत्वे धीरो धनवान् स्वच्छस्वभावो लोकानुपभोग्यस्वीयवस्तुत्वेनादाता पुरुषो अत्राप्रकृत: न च सरसपानीयत्वस्य पुरुषेऽसम्भवात् कथं विशेषणसाम्यमिति वाच्यम्। तेनाक्षिप्तस्य परोपभोग्यवस्तुमत्त्वस्य उभयत्रान्वयात् समासोक्तिरिति। प्रस्तुतकथनेनाप्रस्तुतप्रतीते: समासोक्तित्वात् कोऽप्यन्तरं दर्शयति किमब्धेरिति। समगुणता गाम्भीर्यादिरूपा अप्रस्तुत-

नयनानन्ददायीन्दोर्विम्बमेतत् प्रसीदति ।
अधुना विनिरुद्धाशमविशीर्णमिदं तमः ॥

अत्र किं कामस्योद्दीपकः कालो वर्त्तते इति भङ्ग्यन्तरेण अभिधानात् पर्य्यायोक्तम्, उत वदनस्येन्दुविम्बतया अध्यवसानात् अतिशयोक्तिः, किं वा एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशात् रूपकं, अथवा तयोः समुच्चयविवक्षायां दीपकम् अथवा तुल्ययोगिता, किमु प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ समासोक्तिः, आहोस्वित् मुखनैर्मल्यप्रस्तावात् अप्रस्तुतप्रशंसा ? इति बहूनां सन्देहादयमेव सङ्करः। यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्र एकतरस्य निश्चयात् न संशयः। न्यायश्च साधकत्वम् अनुकूलता ; दोषोऽपि बाधकत्वं प्रतिकूलता। तत्र

---

कथनेन प्रतीतेरेवाप्रस्तुतप्रशंसात्वात् समासोक्त्यप्रस्तुतप्रशंसयोरेतेनाच भेदात्। अनेकालङ्कारसन्देहमाह। यथा वा

नयनानन्देति। नयनानन्ददायि एतत् इन्दोर्विम्बं प्रसीदति प्रसन्नं भवति निरुद्धाशं निरुद्धदिक्कं तमोऽधुनापि अविशीर्णमिति काकुः। पर्य्यायोक्तमिति अधुना पदेनाधिकरणता भङ्ग्या वाच्यस्य वर्त्तमानकालस्य कर्त्तृत्वविशेषणत्वभङ्ग्या व्यङ्ग्यत्वात् उत वदनस्येति एतत्पदेनापि इन्दुविम्बस्यैव निर्देशे आननस्य केनापि पदेनानुक्त्या कमलमनभसीत्यादिवदतिशयोक्तिरित्यर्थः। एतत्पदेन वक्त्रनिर्देशे तु रूपकमित्याह किमेतदितीति। एतत्पक्षनये निरुद्धामित्यत्र निरुद्धकामुकप्रत्याशमित्यर्थः। तमश्च तमोगुणजः क्रोधः अथवैतयोरिति एतत्पक्षे चार्थः पूरणीयः। तथाच इन्दोर्विम्बमेतन्मुखञ्चेति समुच्चयविवक्षायामित्यर्थः। दीपकमिति प्रकृतमुखाप्रकृतेन्दुविम्बयोः प्रसादरूपैकक्रियान्वयरूपमित्यर्थः। अथवेति द्वयोरपि प्रकृतत्वे तुल्ययोगितादीपकतुल्ययोगितयोरियानेव हि भेदः। किमु प्रदोषेति प्रदोषवर्णने चन्द्रस्य प्रकृतत्वेन तद्वर्णनादप्रकृतस्य मुखस्यापि प्रसादरूपविशेषणसाम्यात् प्रतीत्या समासोक्तिरित्यर्थः। मुखस्य प्रस्तुतत्वे तु अप्रस्तुतप्रशंसा तदाह

सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः।

इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिर्वक्त्र एवानुकूल्यं भजते इत्युपमायाः साधकं, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्य अबाधकता।

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम्।

---

स्याहोस्विदिति। अन्यो पक्षान्तरे तद्वितर्कं अयमेवेति सन्देह एव सङ्कर इत्यर्थः। निश्चयस्तु न सङ्कर इत्याह यत्त्विति। एकस्य साधकमेवापरस्य बाधकमित्यत उभयोपादानानौचित्यादाह साधकत्वमनुकूलतेति। एकस्य साधकमपरस्य बाधकं न भवति साधकत्वांशे औत्कट्यरूपा अनुकूलता एवमेकस्य बाधकमप्यपरस्य साधकं न भवति किन्तु बाधकत्वांशे औत्कट्यरूपा प्रतिकूलतेत्यर्थः।

सौभाग्यमिति। ज्योत्स्नातुल्या हासद्युतिर्वक्त्रशशिनः सौभाग्यं वितनोतीत्यर्थः। अत्र वक्त्रं शशीव वक्त्रमेव शशीति च उपमारूपकयोः सन्देहे हासद्युतेरुपमायामानुकूल्यमित्याह अत्र मुख्यतयेति। ज्योत्स्नेवेत्युपमावशात् सादृश्यविशेष्यतया इत्यर्थः। तादृश हासद्युतेर्वक्त्र एव उपमा समासाधीनविशेष्यताकत्वरूपमानुकूल्यं भजत इत्यर्थः। रूपकं प्रति तु तस्यानैकान्त्यं बाधकत्वमित्याह शशिनि त्विति। रूपकाधीनविशेष्यताके शशिनि तु इत्यर्थः। वक्त्राभिन्नत्वेन प्रतीयमाने शशिन्यपि वक्त्रधर्महासद्युतेः परम्परया प्रतीति सम्भवादित्यर्थः किन्तु साक्षात् सम्बन्धेन वक्त्रे हासद्युतेः पुरःस्फूर्त्तिकत्वेन रूपकापेक्षया उपमायामानुकूल्यमित्यर्थः। उपमायामानुकूल्यं दर्शयित्वा रूपके आनुकूल्यं दर्शयति।

वक्त्रेन्दाविति। अत्र तद्वृथेति शेषः। अत्र वक्त्रमेव इन्दुरिति रूप्यमाणतया विशेष्यस्य इन्दोरपरत्वमनुगुणमित्याह अपरत्वमिति। अयमपरः पण्डित इत्युक्तौ पण्डितान्तरापेक्षयैवापरत्वप्रतीति र्यथा तथाऽपरः शीतांशुरित्युक्तावपि वक्त्रात्मकेन्द्वपेक्षयैवापरत्वप्रतीति र्नत्विन्दतुल्यवक्त्रापेक्षयेत्यर्थः। वक्त्रमिन्दुरिवेत्युपमायान्तु तस्यानैकान्त्यं प्रातिकूल्यमित्याह न तु वक्त्रस्येति। उपमावशाद्विशेष्यस्य वक्त्रस्येत्यर्थः। वक्त्रापरत्वस्यापीन्दोरबाधादित्यर्थः। इदानीं बाधकतौत्कट्यं दर्शयति।

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति सदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गनस्यासम्भवात् ।

पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ।

इत्यत्र मञ्जीरशिञ्जितम् अम्बुजे प्रतिकूलम्, असम्भवादिति रूपकस्य बाधकं, न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते, विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ।

**स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम् ।**
**व्यवस्थितञ्च**

---

राजनारायणमिति । लक्ष्मी नारायणस्य प्रेयसी राजरूपं नारायणं त्वां निर्भरमालिङ्गतीत्यर्थः । राजा नारायण इवेत्युपमासमासे नारायणसादृश्यं त्वामालिङ्गतीत्युपमायामालिङ्गनस्य प्रतिकूलौत्कट्यमित्याह इत्यत्र पुनरिति । उपमाया निरासे हेतुमाह सदृशं प्रतीति स्वभर्तृसदृशं प्रतीत्यर्थः पातिव्रत्येन प्रेयस्या प्रयुक्तस्येत्यर्थः । अतोऽत्र रूपकानुकूल्यसत्त्वेऽपि तदपेक्षया उपमाप्रतिकूलस्य पुरःस्फूर्त्तिकत्वेन तदौत्कट्यमित्यर्थः रूपकप्रातिकूल्योत्कटत्वं दर्शयति ।

पादाम्बुजमिति । अम्बिकायाः पादाम्बुजं अम्बुजतुल्यः पादो वो विजयाय भवतु कीदृशं मञ्जुमञ्जीरशिञ्जितेन मनोहरम् अम्बुजे प्रतिकूलमिति पाद एवाम्बुजमिति रूपकवशाद्विशेष्यतया लब्धेऽम्बुजे इत्यर्थः । असम्भवादिति अम्बुजे मञ्जीरबाधादित्यर्थः । अत्र उपमायामानुकूल्यापेक्षया रूपणे सति रूपकेऽप्यानुकूल्यौत्कट्यं स्यादिति वाच्यम् । उपमासमाससम्भवेऽनुपात्तस्य रूप्यस्य व्यञ्जनया बुद्ध्यनारोहादिति प्रागेव उल्लास कालकरवालमहाम्बुवाहमित्यादि व्याख्यावसरे प्रतिपादितं जस्र रणान्तउरए इत्यादौ गुणसिन्धुरित्यादौ चोपमासमासासम्भवादेव नायिकाप्रतिनायिकाननानां रूप्याणां व्यञ्जनया बोधः । विध्युपमर्दिन इति उक्तयुक्त्या रूपकविध्युपमर्दिन इत्यर्थः । अलङ्कारयोरेकबोधबोध्यत्वरूपं सङ्करमाह ।

अभिन्न एव पदे स्फुटतया यत् उभावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः सोऽप्यपरः सङ्करः। उदाहरणम्,

स्पष्टोल्लसत्किरण-केसर-सूर्य्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम्।
श्लिष्टाष्टदिग्दलकलापमुषावतार-
बद्धान्धकारमधुपावलि सञ्चुकोच॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ।

**तेनासौ त्रिरूपः परिकीर्त्तितः॥ ५५॥**

तदयमनुग्राह्यानुग्राहकतया, सन्देहेन, एकपदप्रतिपाद्यतया च व्यवस्थितत्वात् त्रिप्रकारएव सङ्करो व्याकृतः। प्रकारान्तरेण तु न शक्यो व्याकर्त्तुम्, आनन्त्यात् तत्प्रभेदानामिति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलङ्काराः।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलङ्कारः शब्दस्य, कश्चिदर्थस्य कश्चिच्चोभयस्य? इति चेत्। उक्तम् [३२८ पृ०] अत्र यथा काव्ये दोषगुणा-

---

स्फुटमिति। एकत्र विषये बोधकशब्दरूपे व्यवस्थां परस्परभेदेन स्थितिम्।

स्पष्टोल्लसदिति। सन्ध्यावर्णनमिदम्। अथ अनन्तरं दिवसरूपम् अरविन्दं सञ्चुकोच सङ्कुचितं बभूव। कीदृशं स्पष्टं यथा स्यात्तथा उल्लसन्तः किरणा एव केशरा यस्यां तादृशी सूर्य्यबिम्बरूपा विस्तीर्णा कर्णिका यत्र तादृशं किरणाः केशराः सूर्य्यबिम्बश्च कर्णिका इत्यर्थः। पुनः कीदृशं श्लिष्टः परस्परं संसृष्टोऽष्टदिगात्मको दलकलापो यत्र तादृशं तथा उषावतारे प्रातःप्रवृत्तौ गुहासु बद्धान्धकारा एव मधुपावलिश्च यत्र तादृशम्।

अत्रेति। प्रथमपादे किरणेषु केशराणां रूपकं संयुक्त षकारटकारयोर्लकारस्य चानुप्रासः। चतुर्थपादेऽन्धकारे मधुपावलिरूपकं धकारानुप्रासः। एकपदप्रतिपाद्यतयेति प्रतिपत्तिरत्रानुप्रासांशे श्रौती रूपकांशे च शाब्दी। शब्दार्थोभयत्रि

लङ्काराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकाविव प्रभवतः, निमित्तान्तरस्याभावात् ततश्च योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते, स तदलङ्कारो व्यपस्थाप्यते इति, एवञ्च यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाभावानुविधायितया उभयालङ्कारौ, तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः, अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते इति वाच्यालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः। योऽलङ्कारो यदाश्रितः स तदलङ्कार इत्यपि कल्पनायाम् अन्वयव्यतिरेकाविव समाश्रयितव्यौ, तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्याभावादित्यलङ्काराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान्।

**एषां दोषा यथायोगं सम्भवन्तोऽपि केचन।**
**उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥५६॥**

तथा हि अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधः इति ये त्रयो दोषाः ते प्रसिद्धिविरुद्धताम्, अपुष्टार्थत्वम्, प्रतिकूलवर्णताञ्च यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात्। क्रमेणोदाहरणम्,

---

शब्दतदर्थतदुभयगतत्वेनेत्यर्थः। कः पुनरित्यादि प्रश्नोत्तरे स्पष्टार्थके शब्दहेतुकार्थान्तरेति।

चक्रदासा वच्चणदावनमवनं व्यसनमव्यसनम्।
बत वीर! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥

इत्यादिकं तादृशं बोध्यम् अलङ्काराणां शब्दार्थगतत्वेन स्थितौ परोक्तं नियामकमपि अस्मदुक्तनियामक एवान्तर्भवतीत्याह योऽलङ्कार इति। अलङ्काराणामपि दोषसम्भवेऽपि दोषोल्लासोक्तदोषेष्विव तेषामन्तर्भाव इत्याह एषां दोषा इति उक्तालङ्काराणां केषाञ्चिदित्यर्थः। प्रसिद्ध्यभाव इति अनुप्रासितपदार्थयो र्विवक्षिते-

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्, धूर्जटिर्धूर्ध्वजान्तान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः, कूवराग्रं कुबेरः।
रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात् स्यन्दनो वः॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता, न पुराणेतिहासादिषु तथाप्रतीतेति प्रसिद्धिविरोधः।

भण तरुणि! रमणमन्दिरम् आनन्दस्यन्दिसुन्दरेन्दुमुखि!।
यदि सल्लीलोल्लापिनि! गच्छसि तत् किं त्वदीयं मे॥
अनणुरणन्मणिमेखलम् अविरतशिञ्जानमञ्जुमञ्जीरम्।
परिसरणमरुणचरणे! रणरणकमकारणं कुरुते॥

---

ऽन्वये क्वापि शास्त्रे लोके वा प्रसिद्ध्यभाव इत्यर्थः। वैफल्यम् अनुप्रासार्थदत्तविशेषणानां वक्तृविशेषतात्पर्य्याविषयत्वेन विशेष्यप्रकर्षाधानराहित्यमित्यर्थः। वृत्तिविरोध इति अनुप्रासघटकवर्णानां रसविशेषरतिकाव्ये स्थित्यनौचित्यमित्यर्थः।

चक्रीति। अहिमरुचः सूर्य्यस्य स स्यन्दनो वो युष्मानवतात्। जगदुपकृतये नित्यं तुरगै र्युक्तस्य योजितस्य यस्य स्यन्दनस्य चक्रारपङ्क्तिं चक्राग्रभागश्रेणीं चक्री विष्णुः प्रीतिप्रसन्नः सन् स्तौति एवं सर्वत्रैव प्रीतिप्रसन्नः सन् स्तौतीत्यन्वयः। हरिरिन्द्रो हरीनश्वान् धूर्ध्वजान्तान् सन्मुखध्वजप्रान्तान् धूः स्त्री क्लीवे यानमुखमिति कोषः। धूर्ध्वजाग्रानिति क्वचित्पाठः। तत्र चाग्रशब्दस्य पुंलिङ्गत्वं न दृष्टचरं नक्षत्रनाथश्चन्द्रोऽप्यक्षं चक्रं कुवेरोऽपि कूवराग्रं कूवराग्रं युगन्धर इति कोषः। सुराणां सङ्घः समूहोऽपि रंहो वेगम्। अत्र प्रसिद्धिविरोधं दर्शयति।

अत्रेति। वैफल्यमुदाहरति।

भण तरुणीति। रमणगृहपथमनासाद्य व्याकुलामभिसारिकां प्रति कस्याश्चित् स्त्रिया उक्तिरियम्। अभिसारिकायाः पुरुषान्तरेण समं सल्लीलोल्लापाभावात् तं दृष्ट्वा तस्याः पलायनादेव। तरुणीत्यानन्देत्यादि सल्लीलेत्यादि च सम्बोधनत्रयं हे तादृशि! अर्थान्मद्दर्शितवर्त्मना यदि रमणमन्दिरं गच्छसि तत्तदा त्वदीयं किं वस्तु मम स्यात् तद्भण किं मह्यं दास्यसीति पर्य्यवसितार्थः।

अत्र वाच्यस्य विचिन्त्यमानं न किञ्चिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम्।

अकुण्ठोत्कण्ठयेति [२३३] अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यते इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः। तथा,

भुजङ्गमस्येव मणिः सदम्भाः, ग्राहावकीर्णेव नदी सदम्भाः।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः॥

उपमायाम्, उपमानस्य जाति-प्रमाण-गतन्यूनत्वम्, अधि-

---

अत्र वक्त्राः स्त्रियाः स्त्रियां रत्यभावादर्थप्रदर्शनवेतनप्रार्थनेऽनुपयोगाच्च तत्सौन्दर्य्यबोधकानेकसम्बोधनवैफल्यम्। अन्यदप्याह अनणुरणदिति हे अरुण! चरणे तव परिसरणं गमनमर्थात् पुंसां रणरणकं कामचिन्तामकारणं कुरुते इत्यर्थः। चिन्ता रणरणन्तु तदिति कोषः। चिन्ता च कामचिन्ता। परिसरणं कीदृशं अनणु अनल्पं रणन्ती शब्दायमाना मणिमेखला यत्र अविरतं शिञ्जानं शब्दायमानं मञ्जु मञ्जीरञ्च यत्र तादृशम्। अत्रेति कामचिन्ताजननस्य निष्फलत्वकथनाद्वैराग्य वतः पुरुषस्येयमुक्तिस्तत्र तस्यां बाधबोधकतच्चरणतद्गमनविशेषणवैयर्थ्यमिति भावः। वृत्तिविरोधमुदाहरति अकुण्ठोत्कण्ठयेति व्याख्यातमिदं प्रति कूलवर्णदोषोदाहरणम्। भुजङ्गमस्येति सदम्भा दम्भयुक्ता जनाः स्वीयदुरन्ततां निर्णयतोऽपि जन्तोश्चेतः प्रसुखे आपाततः कर्षन्ति तत्र दृष्टान्तमाह।

भुजङ्गमस्येवेति। तदीयमणिः कीदृशः सदम्भाः विद्यमानपानीयः मणिदर्पणादीनामन्तर्गतस्वच्छतैवाम्भः तस्य मणेर्भुजङ्गमसम्बन्धात् दुरन्ततासदम्भस्त्वेन आपाततश्चेतःकर्षणं दृष्टान्तान्तरमाह ग्राहेति। सदम्भा हिमजला अतश्चेतःकर्षणं ग्राहावकीर्णत्वेन दुरन्तता। उपमायामिति उपमेयजात्यपेक्षया उपमानजातेरतिनिकृष्टत्वमत्युत्तमत्वं वेत्यर्थः। एवमुपमेयपरिमाणापेक्षया उपमानपरिमाणस्यात्यल्पत्वमत्यधिकत्वं वेत्यर्थः। अनुचितार्थत्वमिति यद्यपि पूर्वलिखितोक्त्या उक्तश्लोकस्य निन्दाव्यञ्जकत्वमेवानुचितार्थत्वमिति पर्य्यापितं तथापि दोषान्तरलक्षणाक्रान्तत्वे सति औचित्याभाव एव तत्सामान्यलक्षणमित्यभिप्रायेणेदमुक्तधर्माश्रयत्वे-

कता वा तादृशो अनुचितार्थत्वं दोषः, धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वञ्च न व्यभिचरतः। क्रमेणोदाहरणम्,

चाण्डालैरिव युष्माभिः साहसं परमं कृतम्। [जा०न्यू०]
वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥ [प्र०न्यू०]
अयं पद्मासनासीनश्चक्रवाको विराजते।
युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः [जा अ०]
पातालमिव ते नाभिः, स्तनौ क्षितिधरोपमौ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥ [प्र०अ०]

अत्र चाण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थितः इत्यनुचितार्थता।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ [ध०न्यू०]

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम्।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः।

---

त्विति धर्मो विशेषणम् उपमेयं निर्दिष्टविशेषणापेक्षया उपमानस्य विशेषणं न्यूनमधिकञ्चेत्यर्थः। अत्रोपमानजातेर्निकृष्टत्वमुदाहरति चाण्डालैरिवेति। युष्माभिर्ब्राह्मणैः। उपमानपरिमाणाधिक्यमाह पातालमिवेति। स्तनाविति। अत्रापि स्तनशैलेत्यादौ तु रूपकमेव नोपमा तत्राचाहार्यारोपितस्यादुष्टत्वान्न दोष एव नाभिकूपेत्यादावपि बोद्धव्यं कालिन्दीप्रवाहः। उपमानस्य विशेषणन्यूनतामुदाहरति।

स मुनिरिति। मुनिर्नारदो विरेजे मौञ्ज्या मेखलया लाञ्छितः चिह्नितः कृष्णाजिनरूपं पटं वहंश्च तत्र दृष्टान्तमाह नीलेति। नीलमेघस्य भाग एकदेशः तेनाश्लिष्टः सम्बद्धोऽंशुमान् सूर्य इव।

अत्रेति। कृष्णाजिनस्थाने तु मेघैकदेश एवेति भावः। उपमानस्य विशेषणाधिक्यमुदाहरति।

शतक्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः॥ [ध०अ]

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वम्।

लिङ्गवचनभेदोऽपि उपमानपमेययोः साधारणं चेत् धर्ममन्यरूपं कुर्य्यात्, तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेण प्रतीयते इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम्। यथा,

चिन्तारत्नमिव च्युतोऽपि करतो धिक् मन्दभाग्यस्य मे। [लिभे०]
शक्तवो भक्षिता देव शुद्धाः कुलवधूरिव। [व०भे०]

यत्र तु नानात्वेऽपि लिङ्गवचनयोः, सामान्याभिधायिपदं

---

स पीतवासा इति। सं क्रमी मनोज्ञं भीमञ्च वपुराप। कीदृशः पीतवासाः अनेन मनोज्ञं प्रगृहीतशार्ङ्गसंज्ञकधन्वा च अनेन भीमं शतक्रदा विद्युत् इन्द्रायुधं शक्रधनुः। अत्रेति पीतवासः स्थाने शतक्रदा शार्ङ्गधनुः स्थाने इन्द्रायुधं शङ्खानिर्देशात् शशिसंसर्गोऽतिरिच्यते इत्यर्थः। न लिङ्गवचने भिन्ने न हीनाधिकतापि वा। उपमा भूषणायालं यत्रोद्वेगी न धीमतामिति दण्डिना बोद्धृणामुद्वेगसत्वैर्लिङ्गवचनभेदो दोष इति पर्य्यापितं तत्र तदुद्वेगकारणं दर्शयंस्तत्सत्त्वे तद्भेदो भग्नप्रक्रमदोषान्तर्गत एवेत्याह।

लिङ्गेति। लिङ्गवचनभेदे साधारणधर्मस्तावदुपमानोपमेययोरेकतरस्य समलिङ्गतयैव निर्दिष्टो भवति अतः सति लिङ्गवचनभेदे यदि साधारणधर्ममन्यरूपमेकतरस्यैवान्वययोग्यं कुर्य्यात्तदा स धर्मो यदन्वययोग्यस्तस्यैव तद्धर्मान्वयावगमात्तद्धर्मविशिष्टस्यैव उपमेयत्वमुपमानत्वं वा प्रतीयमानेन व्यङ्ग्येन धर्मान्तरेणैव प्रतीयत इत्यत उपक्रान्तधर्मेण उपमारूपस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमत्वमित्यर्थः। तत्र लिङ्गभेदे उदाहरति चिन्तारत्नमिवेति। अत्र च्युतिधर्मेणोपक्रान्ता उपमा न निर्वहति च्युतेति स्त्रीलिङ्गनिर्दिष्टस्योपमेयायां नायिकायामेवान्वयो न तु रत्ने उपमाने वचनन्तु समानम्। वचनभेदे उदाहरति।

शक्तव इति। अत्र शुद्धा इति वचननिर्दिष्टस्य कुलवध्वामेकवचनपदार्थेऽनन्व-

स्वरूपभेदं नापद्यते, न तत्र एतद्दूषणावतारः, उभयथापि अस्य अनुगमक्षमस्वभावत्वात् । यथा,

> गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः ।
> तद्देशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
> दधते स्म परां शोभां तदीया विभ्रमा इव ॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः । यथा,

> अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
> पश्चिमात् यामिनीयामात् प्रसादमिव चेतना ॥

---

यात् लिङ्गन्तु समानम् । इत्यमुद्वेगकारणं दर्शयित्वाऽनुद्वेगकारणमाह यत्र त्विति । तत्र लिङ्गभेदं दर्शयति ।

गुणैरिति । अत्र गुणशब्दः पुंलिङ्गः रत्नशब्दो नपुंसकलिङ्गः अनर्घैरित्युभयत्र समानं वचनन्तु समानमेव वचनभेदं तद्दर्शयति तद्देश इति तस्य देशस्तदीया विभ्रमा इव परां शोभां दधते स्म । अत्र दधत इति दधधात्वोरेकवचनबहुवचनयोः समानं देशविभ्रमाणां विशेषणमाह अन्याभिरिति । अन्याभिः स्त्रीभिरसदृशः असाधारण इत्यर्थः अन्यासां स्त्रीणामेतादृशदेशविभ्रमा न सन्तीत्यर्थः । अत्रासदृश इति क्विप्ठक्प्रत्ययाभ्यां साधितयोः सदृशासदृशपदयोर्वचनद्वये समानता तथा मधुरतया भृतः पूरितः मधुरता विभ्रमस्य अत्र भृञः क्तप्रत्ययक्विप्प्रत्ययान्तत्वेन वचनद्वये समानता लिङ्गन्तु समानम् । ईदृशे विषयेऽनुद्वेगः । अनुद्वेगकारणान्तरमपि दण्डिना दर्शितमनुसन्धेयम् ।

कालपुरुषेति । कालोऽतीतवर्त्तमानादिः पुरुषा नाम युष्मदस्मदर्थोग्याः प्रथममध्यमोत्तमाः विधिरप्रवृत्तप्रवर्त्तनात्मकः सप्तम्यादिः उपमानोपमेययोस्तद्भेदे इत्यर्थः न तथा प्रतीतिरस्खलिता इत्यनेनास्याल्पदोषत्वं सूचितं विभिन्नतन्निर्देशापेक्षया अभिन्नतन्निर्देशोऽत्युत्तम इत्यत्र तात्पर्यम् अतएव काव्ये प्रायशो विभिन्नैतन्निर्देश एव न विनीयते च तत्र कालभेदं उदाहरति ।

अतिथिमिति । काकुत्स्थात् कुशात् कुमुद्वती तत्पत्नी पश्चिमात् शेषप्रहरात् तत्र निद्राघूर्णाभावात् न पुनरापेति । अत्र यद्यप्यतीतप्राप्तिरपि चेतनायामन्वयः

अत्र चेतना प्रसादमाप्नोति न पुरा आपेति कालभेदः।

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रबालविटपप्रभवा लतेव॥

अत्र, लता विभ्राजते नतु विभ्राजसे इति सम्बोध्यमाननिष्ठस्य परभागस्य असम्बोध्यमानविषयतया व्यत्यासात् पुरुषभेदः।

गङ्गेव प्रवहतु ते सदैव कीर्त्तिरित्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति अप्रवृत्तप्रवर्त्तनात्मनो विधेः। एवञ्जातीयकस्य चान्यस्यार्थस्य उपमानगतस्यासम्भवाद्विध्यादिभेदः॥

---

भवत्येव तथापि त्रैकालिकप्राप्तेरेव विवक्षितत्वादतीतत्वेन तात्पर्य्याभावादन्वयः। वर्त्तमानमाह नित्यप्रवृत्तात्मिका सम्भवत्येव कालत्रये इति भावः। पुरुषभेदमुदाहरति प्रत्यग्रेति। अशोके मदनपूजाप्रसक्तां स्नातां वासवदत्तां प्रति राज्ञ उक्तिरियम्। मकरकेतनं कामदेवमर्चयन्ती त्वं विभाजसे बालप्रवालविटपप्रभवा लतेव विटपविशिष्टा वृक्षाकाराः प्रवालपुञ्जाः समुद्रे वर्त्तन्ते तद्विटपे सम्भाविता लतेव इत्यभूतोपमा तयोर्विशेषमाह।

प्रत्यग्रेति। प्रत्यग्रेण तत्कालीनेन मज्जनविशेषेण स्नानविशेषेण विविक्तमूर्त्तिर्निर्षिक्तमूर्त्ति र्वासवदत्ता लतानु प्रत्यग्रं तत्कालमज्जनविशेषात् जलाधीभावात् विविक्तमूर्त्तिरुत्थितशरीरा तथा कौसुम्भरागेण रुचिरः स्फुरन्नंशुकस्कान्ती यस्या राज्ञी तादृशी लतानु कौसुम्भरागवत् रुचिरं स्फुरताऽंशुना रश्मिना कान्ता कमनीया तथा मकरकेतनं कामदेवमर्चयन्ती राज्ञी तादृशी लतापि मकरकेतनं समुद्रमर्चयन्ती स्वशोभया पूजितं कुर्वती विधिभेदमुदाहरति।

गङ्गेवेति। विधेरिति भेद इति शेषः। एवंजातीयस्येति मान्धातेवात्र पुत्री भविष्यति कर्ण इव त्वं ददासि मार्कण्डेय इव त्वं चिरञ्जीव इत्यादिषु कालपुरुषविधिभेदा द्रष्टव्या इत्यर्थः। ईदृशस्य दोषस्य यत्किञ्चिद्दोषतामात्रं स्थापयितुमाशङ्कते।

ननु समानम् उच्चारितं प्रतीयमानं धर्मान्तरम् उपादाय पर्य्यवसितायाम् उपमायाम् उपमेयस्य प्रकृतधर्माभिसम्बन्धान्न कश्चित् कालभेदोऽस्ति।

यत्रापि उपात्तेनैव सामान्यधर्मेण उपमा अवगम्यते, यथा, युधिष्ठिर इवायं सत्यं वदतीति, तत्र युधिष्ठिर इव सत्यवादी अयं सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति-च न पौनरुक्त्यम् आशङ्कनीयम्, रैपोषं पुष्णातीतिवत् युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेवैतत्, किन्तु स्थितेषु प्रयोगेषु समर्थनमिदं नतु सर्वथा निरवद्यम्, प्रस्तुतवस्तुप्रतीतिविघातात् इति, सचेतस एवात्र प्रमाणम्।

---

ननु समानमिति। समानं साधारणं धर्मान्तरमुच्चरितं वा प्रतीयमानव्यङ्ग्यं वा उपादाय पर्य्यवसितायामुपमायामित्यर्थः उपमेयस्यैवेत्यर्थः। प्रकृतधर्म उपमानान्वितकालादिरूपः। ननु यत्र भिन्नकालादिकेनैव धर्मेण उपमायां तात्पर्य्यं तत्र का गतिरित्यत्राह।

यत्रापीति। उपात्तेनैवेति भिन्नकालादिकेनेति शेषः। तादृशं स्थलं दर्शयति यथा युधिष्ठिर इवेति यत्र वर्त्तमान सत्यवदनस्य युधिष्ठिरे बाधेऽपि तेनैव धर्म्मेणोपमायां तात्पर्य्यात् समाधत्ते तत्रापीति। अत्र पौनरुक्त्याशङ्कां निरस्यति सत्यवादी सत्यमिति। युधिष्ठिर इव सत्यवदनेनेति युधिष्ठिरसत्यवदनतुल्यसत्यवदनेनेत्यर्थः। शिचिती मृत्यतीत्यत्रेव कर्तृविशेषणस्य तदीयशिचाक्रियायां हेतुत्वावगमात् आपाततः पुनरुक्ततया प्रतीतस्य विधेयं प्रति हेतुदृष्टान्तमाह रैपोषमिति रा धनं तत्कारणकपोषणेन पुष्णातीत्यर्थः। अत्रापाततः पुनरुक्ततया प्रतीतस्य णमन्तधात्वर्थस्य धनकारणकपोषणस्य यथा पोषणसामान्ये हेतुता तथा युधिष्ठिरसत्यवदनतुल्यसत्यवदनस्य सत्यवदनसामान्ये हेतुत्वात् विशेषसिद्ध्या सामान्यसिद्धेस्तस्य हेतुतायाः सार्वत्रिकत्वात् विशेषं विना सामान्यसिद्धेस्तस्या हेतुतायाः सार्वत्रिकसिद्धत्वात् इत्थं सर्वत्रैव णमन्तधात्वर्थस्यानुप्रयुज्यमानधात्वर्थे हेतुत्वं प्रदर्शितमित्यवधातव्यम्। नैवमित्यनुक्त्वा सत्यमेतदित्युक्त्वाऽस्य समाधानस्यादूष्यत्वं प्रतिपादितं किन्त्वापाततः प्रतीतिमान्यथ्यैमात्रमित्याह किन्तु स्थितेष्विति प्रयोगबाहुल्येन स्थितेष्वित्यर्थः। आपाततः प्रतीतिमान्थ्यस्याचित्य आद्रियन्ते सचेतस एवेति।

असादृश्यासम्भवावपि उपमायाम् अनुचितार्थतायामेव पर्य्यवस्यतः । यथा,

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्, [असा०]

अत्र काव्यस्य शशिना अर्थानाञ्च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

निष्पेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा
दिनार्द्धभाजः परिवेषिणोऽर्कात् ॥ [असं०]

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्य्यमण्डलात् निष्पतन्त्यो न सम्भवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि, सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न यथाशब्दोऽपि, केवलस्य अस्य साधर्म्यमेव प्रतिपाद-

---

असादृश्येति । असादृश्यं सादृश्यविरहः असम्भव उपमानस्यासम्भवितस्य अलीकत्वम् अनुचितार्थतायामिति अनुचितार्थत्वसामान्यलक्षणस्य उपमानजात्यादिन्यूनाधिकत्वप्रदर्शने दर्शितत्वस्यात्रापि सत्त्वात् ।

ग्रथ्नामीति । काव्यं शशीव अर्था रश्मय इवेति समासः । रूपकस्यापि सादृश्यमूलकत्वात्तत्राप्ययं दोष इत्यभिप्रायः । अत्र काव्यशशिनोरर्थरश्म्योश्च उपमायामसादृश्यं द्योतयति अत्रेति असम्भवमुदाहरति ।

निष्पेतुरिति । आकर्णकृष्टाद्धनुषो वीरैश्च मुच्यमानानां वाणानां वर्णनमिदम् । दीप्ताः शरास्तस्य वीरस्य आस्यादिव निष्पेतुः । आस्यात् कीदृशात् धनुर्मण्डलमध्यभाजः धनुष आकर्णाकर्षणे आस्यस्य तथात्वात् तत्र दृष्टान्तमाह जाज्वल्येति परिवेशिनो मध्याह्नार्कात् जाज्वल्यमाना वारिधारा इवेत्यर्थः । धनुर्मण्डलस्थाने परिवेशः नचात्र अभूतोपमेति वाच्यम् । सम्भावनयापि प्रसिद्धिसम्भव एव तथात्वादिति व्याख्यातं जङ्घाकाण्डोरुनाल इत्यादिश्लोकव्याख्यावसरे । उत्प्रेक्षाया दोषमाह ।

उत्प्रेक्षायामपीति । केवलस्यास्येति असमासस्थस्येत्यर्थः । समासे तु आव-

यितुं पर्य्याप्तत्वात्, तस्य चास्यामविवक्षितत्वादिति तत्राशक्ति-रस्यावाचकत्वं दोषः। यथा,

उद्ययौ दीर्घिकागर्भात् मुकुलं मेचकोत्पलम्।
नारीलोचनचातुर्य्यशङ्कासङ्कुचितं यथा॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यं तत्समर्थनाय यदर्थान्तरन्यासोपादानं, तत् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्य, अनुचितार्थतैव दोषः। यथा,

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव॥

अत्राचेतनस्य तमसो दिवाकरात् त्रास एव न सम्भवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणं, सम्भावितेन तु रूपेण

---

र्थार्थकत्वमप्यस्य नास्तीति भावः। यथा यथासम्भवं यथायोगं यथोचितं यथास्वं यथासङ्ख्यं यथानामगोत्रमित्यादिषु।

उद्ययाविति। मेचकोत्पलमिति तद्धितान् प्रत्ययान्तं मेचकोत्पलीयमित्यर्थः। चातुर्य्यशङ्का चातुर्य्यपातः स्वपराजयशङ्का। उत्प्रेक्षितार्थेऽर्थान्तरन्यासोऽप्युक्तलक्षणाक्रान्तत्वेनानुचितार्थत्वे एव निवेशित इत्याह।

उत्प्रेक्षितमपीति। तात्त्विकेन याथार्थ्येन उपाख्या संज्ञा निरुपाख्यं संज्ञाविशेषरहितमलीकं यद्वस्त्वन्तरं तत्तुल्यं तत्समर्थनाय तत्सत्यत्वप्रतिपादनाय आलेख्यं चित्रलेखा।

दिवाकरादिति। यो हिमालयः गुहासु लीनमन्धकारं दिवा दिवसे दिवाकराद्रक्षति तत्रोत्प्रेक्ष्यते भीतमिवेति। इत्युत्प्रेक्षितभीततमोरक्षणं सत्यत्वेन प्रतिपादयितुमर्थान्तरं न्यस्यति क्षुद्रेऽपीति न केवलं शरणापन्ने महति जन एव उच्चैःशिरसां विभूत्याद्युन्नतशिरसामुच्चशिखराणाञ्च रक्षणप्रयोजकं ममत्वम् अपि तु क्षुद्रेऽपीत्यर्थः। अत्र वक्ष्यमाणशरणागतसामान्येन वक्ष्यमाणविशेषस्य तमसः समर्थनम्।

अत्रेति। ननु यद्यलीकार्थसमर्थनायार्थान्तरन्यासोऽनुचितस्तत्कथं सुसितवसनालङ्कारायामित्यत्र गीयमानकीर्त्त्या वस्तुतोऽप्रकाशिकयाप्यभिसारिकया निःशङ्कं प्रिय-

प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः। साधारणविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत् तत् अपुष्टार्थत्वं पुनरुक्तता वा दोषः। यथा,

स्पृशति तिग्मरुचौ ककुभः करै-
र्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितम्
रुचिरया चिरयापि दिनश्रिया॥

---

गृहगमनसुखमलीकं भणसीत्यनेन समर्थितमित्यत आह सम्भावितेनेति। तत्र हि नोत्प्रेक्षा किन्तु अलीकमपि शीर्त्यां सुखेन प्रियगृहगमनं प्रौढ़ोक्तिवशान्निश्चितमतस्तत्रानुपपत्त्यवतारे तन्निरासोऽर्थान्तरन्यासेन कृतः। प्रकृते तूत्प्रेक्षायामसम्भावितमेव शीततमसो रक्षणमलीकत्वेनैव प्रतिभासमानमप्रौढ़ोक्तिसिद्धत्वेनाहार्य्यज्ञानस्याप्यविषयमर्थान्तरन्यासनिरसनीयानुपपत्तिस्तत्र नावतरतीत्येवार्थः। समासोक्तिलभ्यार्थस्य शब्देन कथनमपुष्टार्थत्वे पुनरुक्तदोषे वाऽभिनिविशत इत्याह साधारणेति। प्रकृतसाधारणविशेषणवशादनुक्तमप्युपमानविशेषं समासोक्तिः प्रकाशयतीत्यतस्तस्यानुक्तस्योपमानस्य शब्देन पुनः प्रतिपादने प्रयोजनाभावादनुपादेयतायां सत्यां यत्तदुपादानं तदवापुष्टार्थत्वं पुनरुक्तत्वं वा दोष इत्यर्थः। विशेषणपदस्यैवापुष्टार्थत्वं समासोक्तिलभ्यार्थस्य तु विशेष्यत्वेनापुष्टर्थत्वाभावात्तन्न सम्भवतीत्यत आह पुनरुक्तं वा इति।

स्पृशतीति। दीर्घतरदिवसश्रीवर्णनमिदम्। तिग्मरुचौ सूर्य्ये करैः रश्मिभिः ककुभो दिशः स्पृशति सति चिरया दीर्घयापि दिनश्रिया अतनोरनल्पस्य मानस्य परिग्रहो यस्या ताहश्या स्थितम्। अतनुना अनङ्गेन यो मानः क्रोधस्तत्परिग्रहया दयितयेव दिनश्रीदयितयो र्द्वयोरपि विशेषणान्तरद्वयमाह विजृम्भितेति रुचिरयेति च चण्डकराधीनो दिनश्रियः मानाधीनश्च दयितायास्तापः मेघशिशिराद्यभावाद्धीनश्रियः सौन्दर्य्याच्च दयिताया रुचिरता। अत्र करपदश्लेषात् पाणिनाऽन्यनायिका स्पर्शिनं स्वनायकं दृष्ट्वा मानिन्याः स्वनायिकायाः समासोक्तिवशात् प्रतीति-

अत्र तिग्मरुचेः ककुभाश्च यथा सदृशविशेषणवशेन व्यक्तिः विशेषपरिग्रहेण च नायकतया नायिकात्वेन व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वं भविष्यतीति किं दयितयेति स्वशब्दोपादानेन। श्लेषोपमायास्तु स विषयः, यत्र उपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः, यथा,

स्वयञ्च पल्लवाताम्रभास्वत्करविराजिता।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा॥ इति।

अप्रस्तुतप्रशंसायामपि उपमेयम् अनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थता नेयम्। यथा,

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते,
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम्।

---

अत्र च तीग्मरुचे नायकत्वस्य ककुभां प्रतिनायिकात्वस्य च यथा समासोक्तिवशात् प्रतीतिस्तथा दिनश्रियोऽपि मानिनीनायिकात्वेन प्रतीतिसम्भवे दयितमेवेति यदुक्तं तत् पुनरुक्तदोष इत्याह।

अत्रेति। सदृशविशेषणमुभयसाधारणधर्मः तच्च तिग्मरुचिनायकयोः करेणान्यनायिकास्पर्शित्वं ककुप्प्रतिनायिकयो नायककरस्पृश्यमानत्वं दिनश्रीनायिकयोस्तु तद्दर्शनविजृम्भिततापत्वमतनुमानपरिग्रहणं रुचिरत्वञ्चाव्यक्तिविशेषः। शब्दस्य स्त्रीपुंलिङ्गं तच्च तिग्मरुचिनायकयोः पुंलिङ्गम् अन्यासां स्त्रीलिङ्गं नन्वियं श्लेषोपमैवास्तु न समासोक्तिरित्यत आह श्लेषोपमायास्त्विति।

स्वयञ्चेत्यादिकं व्याख्यातं प्राक्। अत्र प्रभातसन्ध्यापदेनैवोपमाप्रतीतिः। समासोक्तौ यथा अप्राकरणिकस्य शब्दवाच्यत्वे पुनरुक्तिर्दर्शिता तथा अप्रस्तुतप्रशंसायामपि प्राकरणिकस्य शब्दवाच्यता पुनरुक्तिरित्याह।

अप्रस्तुतप्रशंसायामपीति। आहूतेष्विति। सामान्य निकृष्टं जनं धिक् यतोऽचेतसं भद्राभद्ररहितचित्तम् अनामृष्टम् अपरिभावितं तत्त्वं भद्राभद्रं येन तादृशमान्तरं ...तां यस्य तादृशं प्रभुमिव। सामान्यस्याचेतस्त्वं दर्शयति।

आहूतेष्विति। विहङ्गमेषु विहायसा गच्छत्सु आहूतेषु सत्सु विहायोगामि-

खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनाम्
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥

अत्र, अचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेण अभिव्यक्तौ न युक्तमेव पुनः कथनम्। तदेतेऽलङ्कारदोषाः यथासम्भविनोऽन्येऽप्येवञ्जातीयकाः पूर्वोक्तयैव दोषजात्या अन्तर्भाविताः न पृथक् प्रतिपादनमर्हन्तीति

सम्पूर्णमिदं काव्यलक्षणम्।

इति काव्यप्रकाशेऽर्थालङ्कारनिर्णयो नाम
दशम उल्लासः।

समाप्तश्चायं श्रीमम्मटभट्टकृतः काव्यप्रकाशः।

---

त्वेन मशकः अपि पुरः आयान् आगच्छन् न वार्यते अवारणेतु आगच्छति इत्येवम् आगमनम् एव विधेयं बोध्यम् न तु वारणं तस्याः चेतःकृत्यत्वाभावात् तथा तृणमणिः मणिस्थलाकर्षकः अल्पमूल्यमणिः महामूल्यमणीनां रुचं धत्ते यतो मध्येवारिधि वारिधेर्मध्ये वासवान् वारिधिमध्यवाससाम्यात्तत्र स्थितमहामूल्यमणिरुचिधरणं मध्ये वा धुरि वा वसन्निति क्वचित्पाठः। तदा च धूः स्त्री क्लीवे यानमुखमिति कोषात्। धुरि यानस्य मुखे वा तस्य मध्ये वा वसन्नित्यर्थः। यानशोभाकारित्वसाम्यान्महामूल्यमणिधारणं तथा तेजस्विनां सूर्य्यादीनां मध्येऽर्थाद्गणनायां प्रचलितं गन्तुं खद्योतोऽपि न कम्पते न बिभेति गच्छत्येवेत्यर्थः। अत ईदृशानुचितकारित्ववशादेषां सामान्यानामचेतस्त्वम्। अत्र अचेतसः प्रभोर्मशकाद्यप्रस्तुतकथनादेव प्राप्तिसम्भवे शब्दवाच्यत्वं पुनरुक्तिरेवेत्याह।

अत्राचेतस इति। अप्रस्तुता आगमनाद्यनुचितकारिणो मशकादयः। इदानीमेषां दोषा यथायोगमिति कारिकार्थमुपसंहृत्य दर्शयति तदेते इति।

इति काव्यप्रकाशे दशमोल्लासः।

पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण श्रीमहेश्वरन्यायालङ्कारकृतां व्याख्यामवलम्ब्य सङ्कलिता व्याख्या समाप्ता।

समाप्तश्चायं ग्रन्थः।

---